व्यतिरेकात्मको लोकसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्येणोक्तः, किं तर्हि तात्पर्येणोक्तमिति चेत् नत्वेवाहमित्यादौ प्रकृतं तत्वज्ञानमेव न ज्ञायेत इत्यादिना तात्पर्येणोपपादितमित्यवेहि।

अन्ये तु ननु भवतु स्वधर्मबुध्या युध्यमानस्य पापाभावः तथापि न मां प्रति युद्धकर्त्तव्यतोपदेशो युक्तः य एनं वेत्ति हंतारमित्यादिना कं घातयति हंति कमित्यंतेन विदुषः सर्वकर्मनिषेधात् न हि अकर्त्रभोक्तृशुद्धस्वरूपोऽहमस्मि युद्धं कृत्वा तत्फलं संभोक्ष्ये इति च ज्ञानं संभवति विरोधात् ज्ञानकर्मणोः समुच्चयासंभवाच्च इति चेन्न विद्वदविद्वदवस्थाभेदेन ज्ञानकर्मोपदेशोपपत्तेरित्याह, एषेति। यया व्यवसायात्मिकया बुद्ध्या कर्मसु युक्तस्त्वं कर्मनिमित्तं बंधं चित्ताशुद्धिलक्षणं ज्ञानप्रतिबंधं प्रकर्षेण पुनः प्रतिबंधानुत्पत्तिरूपेण हास्यसि त्यक्ष्यसि, अयं भावः कर्मनिमित्तो ज्ञानप्रतिबंधः कर्मणैव धर्माख्येनापनेतुं शक्यते धर्मेण पापमपनुदतीतिश्रुतेः श्रवणादिलक्षणो विचारस्तु कर्मात्मकप्रतिबंधरहितस्यासंभावनादिप्रतिबंधं दृष्टद्वारेणापनयतीति न कर्मबंधनिराकरणायोपदेष्टुं शक्यतेऽतोऽत्यंतमलिनांतःकरणत्वात् बहिरंगसाधनकर्मैव त्वयाऽनुष्ठेयं नाधुना श्रवणादियोग्यताऽपि तव जाता दूरे तु ज्ञानयोग्यतेति, तथा च वक्ष्यति कर्मण्येवाधिकारस्ते इतीत्याहुः॥ ३९॥

ननु कर्मानुष्ठानस्य कृष्यादिकर्मणामिव कदाचिद्विघ्नबाहुल्येनानैकांतिकफलत्वेन अकिंचित्करत्वादनेकानर्थकलुषितत्वेन दोषवत्वान्मंत्राद्यंगवैगुण्येन प्रत्यवायसंभवाच्च कथं च तत्कर्मयोगेन कर्मबंधप्रहरणं तत्राह—

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्॥४०॥**

नेहेति। इह निष्कामकर्मयोगे परमेश्वराराधनलक्षणे मोक्षमार्गेऽभिक्रमस्य प्रारंभस्य नाशो नास्ति कृष्यादेरिवानियतफलत्वं नास्तीत्यर्थः। यद्वाऽभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोऽभिक्रमस्तस्यांतःकरणशुद्धिरूपस्य तत्साध्यविविदिषादिद्वारा वेदनस्य च फलस्य तद्यथेहेत्याद्युक्तो नाशो नास्ति शुद्धेः पापक्षयरूपत्वेन लोकशब्दवाच्यभोग्यत्वाभावेन च क्षयासंभवात् वेदनस्याव्यवधानेनाज्ञाननिवृत्तिफलजनकस्य फलजननं विना नाशासंभवाच्चेत्यर्थः, तथाचोक्तं—फलेच्छां तु परित्यज्य कृतं कर्म विशुद्धि-

कृदिति । यत्तूक्तं अनेकानर्थकलुषितत्वेन दोषवत्कर्मानुष्ठानमिति तत्परिहरति प्रत्यवायो ज्ञानाज्ञानकृतकर्मानियमादिलोपरूपांगवैगुण्यनिबंधनं वैगुण्यमिह न विद्यते यथा ह्यौषधे क्रियमाणे व्याध्याधिक्यं वा मरणं वा प्रत्यवायोऽपि संभाव्यते कर्मविपाकस्य दुर्विवेकत्वात् न तथा निष्कामकर्मानुष्ठाने दोषोऽस्ति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसा नाशकेनेति श्रुत्या पापक्षयद्वारेण विविदिषांगत्वेन विहितत्वात् तत्र च सर्वांगोपसंहारनियमाभावात् फलाभिसंधिना क्रियमाण एव कर्मणि सर्वांगोपसंहारनियमः फलाभिसंधिरहिते तु शुद्ध्यर्थे कर्मणि यथाकथंचित्प्रतिनिध्यादिना समाप्तिसंभवान्नांगवैगुण्यनिमित्तः प्रत्यवायोऽस्तीत्यर्थः । उत्तरार्द्धेन विवक्षितं फलं दर्शयति, अस्य शुद्ध्यर्थस्य धर्मस्य तमेतमित्यादिवाक्यविहितस्य मध्ये स्वल्पमपि संख्यया इतिकर्तव्यतया वा यथाशक्ति भगवदाराधनार्थं किंचिदप्यनुष्ठितं सत् महतः जन्ममरणादिलक्षणात्संसारभयात् त्रायते भगवत्प्रसादलब्धसम्यग्ज्ञानोत्पादनद्वारेण अनुष्ठातारं रक्षति सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमुच्यते भूयस्तपस्वी भवति पंक्तिपावन इत्यादिस्मृतेरित्यर्थः । एतेन कथं कर्मबंधप्रहरणमित्याक्षेपो निरस्तः ईश्वरोद्देशेनैव विघ्नवैगुण्याद्यसंभवाच्च अतो मुमुक्षोः श्रौतं स्मार्त्तं चोभयं वा श्रद्धाभक्तिभ्यामकामनया ईश्वरप्रीत्यै यथाशक्त्यवश्यं कर्म कर्त्तव्यं ईश्वरप्रीत्यर्थमेव कृतेन कर्मणा चित्तशुद्धिज्ञानोत्पत्तिद्वारेण पुमान् संसारसागरं तरति नान्यथेति सूचितं भवति ॥ ४० ॥

ननु बुद्धिद्वयाद्बुद्ध्यंतराण्यपि काणादादिशास्त्रप्रसिद्धानि विद्यंते कथं बुद्धिद्वयमेवोपदिष्टमिति तत्राह—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनंदन ।**

**बहुशाखा ह्यनंताश्च बुद्धयो व्यवसायिनां ॥ ४१ ॥**

व्यवेति । हे कुरुनंदन इह श्रेयोमार्गे सांख्यविषया योगविषया च बुद्धिरेकफलत्वादेका व्यवसायात्मिका निश्चयात्मिका सर्वविपरीतबुद्धीनां बाधिका निर्दोषवेदांतवाक्योत्पन्नत्वात् इतरास्तु अव्यवसायिनां बुद्धयो बाध्या इत्यर्थः । अन्ये तु इह तमेतमितिवाक्ये आत्मतत्वनिश्चयात्मिका बुद्धिरेकैव सर्वाश्रमाणां साध्या विवक्षिता इत्याहुः । परमेश्वराराधनेनैव संसारं तरिष्यामीति निश्चयात्मिका एकनिष्ठैव बुद्धिरिह कर्मयोगे भवतीत्यप्येके । सर्वथाऽपि ज्ञानकांडाऽनुसारेणै स्वल्पमप्यस्य धर्मस्य त्रायेत महतो भया-

दित्युपपन्नं । बुद्ध्यंतराणि त्वविवेकफलान्यप्रमाणानीत्याह, बहुशाखा बहुभेदाः अप्रमाणजा स्वकपोलकल्पिताः संसारहेतुभूता तत्वज्ञानमंतरेणानिवर्त्यत्वादनंताः केषामव्यवसायिनां प्रमाणजविवेकबुद्धिहीनानामित्यर्थः केन तर्हि तान्निवृत्त्या पुरुषार्थसिद्धिरिति चेत् तत्वसाक्षात्कारेणेत्येवहि बुद्धीनामानंत्यप्रसिद्धिद्योतनार्थो हि-शब्दः ।

अन्ये तु कर्मकांडे तु बहुशाखाः अनेकभेदाः "जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यात्" इत्यादिश्रुत्युक्तकामानामनेकभेदत्वात् अनंताश्च कर्मफलगुणफलादिप्रकारेणोपशाखाभेदात् बुद्धयो भवंति अव्यवसायिनां कामात्मनामित्यर्थः अतः काम्यकर्मापेक्षया महद्वैलक्षण्यं बुद्ध्यर्थकर्मणामित्याशय इत्याहुः, तव तूत्तमवंशोद्भवस्य व्यवसायात्मिकैव बुद्धिर्युक्तेति सूचनार्थं संबोधनं कुरुनंदनेति ।

अपरे तु योगविषयिण्या बुद्ध्या विशिष्टः पुमान्संसारसागरं तरतीत्युक्तं योगविषयिणी बुद्धिः केत्याकांक्षायां तस्याः स्वरूपं वदन् तदितरबुद्धिविशिष्टानां न कदाचित्तरणमस्तीति सूचयति, व्यवेति ।

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥

इतिश्रवणात्कामसंकल्पादिकषायराहिततया शुद्धत्वेनेश्वरएवास्माकं परा गतिरिति व्यवस्थितो व्यवसायो निश्चयो यस्यां सा व्यवसायात्मिका उक्तनिश्चयतत्त्वलक्षणेश्वराश्रया बुद्धिरिह मोक्षैकप्रयोजने कर्मयोगे प्रवृत्तस्य व्यवसायिनो मुमुक्षोरेकैव बहिरंतः सदैकरूपैव भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते अंतवदेवास्य तद्भवतीति व्यतिरेकमुखेन विदित्वा जुह्वतो यजतस्तप्यतश्च सर्वं कर्म वैदिकमनंतवदेव भवतीति वदच्छ्रुतिप्रमाणजनितत्वादेकरूपेणैव तिष्ठति न काचिद्भिद्यते अव्यवसायिनां विवेकबुद्धिहीनानां व्यवस्थाशून्यानां कामिनामेव बुद्धयो बहुशाखाः बहुप्रकाराः आशास्ते यं यजमानोऽसावित्युक्तप्रकारेण बह्वर्थविषयत्वाद्बहुधा भिद्यन्त अत एवानन्ताः काम्यानामनन्तत्वादेवं बुद्धीनामनंतत्वे तद्वतां संसारोऽप्यनन्त एव भवति न कदाऽप्युपशाम्यतीत्यर्थ इत्याहुः ॥ ४१ ॥

ननु कामिनोऽप्येतां व्यवसायात्मिकां बुद्धिं कथं नानुतिष्ठंते इत्याकांक्षायां कामपराणामन्तःकरणं एषा बुद्धिर्नाध्यारोहतीति बोधयितुं

तेषां स्वभावं वर्णयति—

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीतिवादिनः ॥ ४२ ॥**

यामित्यादित्रिभिः । उच्यन्त इति वादा वाक्यानि वायव्यं श्वेतमालभेत भूतिकाम इत्यादीनि वेदस्य वादाः वेदवादास्तेषु कर्मतत्फलतत्साधनप्रकाशकेष्वर्थवादादिवेदवाक्येषु रता निरतास्तत्रैव तान्पश्यंतोऽत एव नान्यदस्तीति वदनशीलाः यतोऽविपश्चितः उपक्रमोपसंहारादिना वेदतात्पर्यमजानन्तो मीमांसकाः पुष्पितां पुष्पैर्मल्लिकालतावत् अपाम सोममिति दक्षिणावन्तोऽमृतं भजन्त इति अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्याद्यर्थवादलक्षणैः फलशून्यैः पुष्पैरंजयतीमिमां जन्मकर्मफलप्रदामित्यादिना वक्ष्यमाणलक्षणां, यद्वा पुष्पस्थानीयदेवतोपासनाविषयां यां वाचं वेदवाणीं 'अग्निमीळे पुरोहितं, इषेत्वोर्जेत्वा, ब्रह्म संहृतं तन्मे जिन्वतं इत्यादिवाक्यरूपां प्रवदन्ति कर्मकाण्डमेव प्राशस्त्येन वदंति न तूपासनाकाण्डं नापि ब्रह्मकाण्डमित्यर्थः ॥ ४२ ॥

उक्तबुद्ध्यनर्हते तेषां स्वभावो दुष्ट इति सूचयितुं तद्गुणानेव वर्णयति श्रीकृष्णः—

**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदां ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

स्वर्गपराः स्वर्ग एव परो निरतिशयः पुरुषार्थ इति निश्चयो येषां ते स्वर्गपरास्तत एव भोगैश्वर्यगतिं प्रति भुज्यन्ते इति भोगाः दिव्याः स्रक्चंदनवनितादयस्तेषां समग्रभोगायैश्वर्यमीश्वरत्वं स्वामित्वं तस्य गतिः प्राप्तिस्तां प्रत्येव काम इच्छावेग आत्मनि बुद्धौ येषां ते कामात्मानः विषयभोगलंपटा कामिनो मीमांसकाः क्रियाविशेषबहुलां क्रियाविशेषाः फलविशेषहेतवोऽतिरात्राग्निष्टोमादयः बहुला बहवो यया प्रतिपाद्यन्ते तां तत एव जन्मकर्मफलप्रदां जन्मपदेन मृत्युजरारोगास्तद्दुःखानि च लक्ष्यन्ते जन्मादय एव स्वप्रतिपादितकर्मणां फलानि जन्मकर्मफलान्यनुष्ठातृभ्यः प्रददातीति तां, नानायोनिषु जन्मानि कर्मफलानि सुखादीनि स्वप्रकाशितकर्मकर्तृभ्यो यच्छतीति वा तां जन्मकर्मफलप्रदां वाचं प्रवदन्तीति पूर्वेणान्वयः ॥ ४३ ॥

यत एवं लक्षणाः ततस्तेषां व्यवसायबुद्धिस्तत्फलं च न सिध्यतीत्याह—

**भोगैश्वर्यप्रसक्तानां तयोपहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥**

भोगेति । तया कर्मकाण्डलक्षणयाऽर्थवादबहुलया वाचा उपहृतं तिरस्कृतं चेतः कार्याकार्यविवेकविज्ञानं येषां ते उपहृतचेतसः विषयाशाभ्रामितबुद्धयः तेषां अत एव भोगैश्वर्यप्रसक्तानां भुज्यन्त इति भोगा भोग्यपदार्थास्तेषामीश्वरत्वमैश्वर्यं तयोरेव प्रसक्तानां तेषां समाधौ समाधीयते पुरुषो विषयेष्वनेनेति समाधिर्वासनात्मकं सर्वं जगत्, समाधीयते पुरुषेणास्मिन् इति वा समाधिरंतष्करणं तस्मिन्व्यवसायात्मिका बुद्धिः योगबुद्धिर्न विधीयते कामैरंतरालाभावान्न प्रविशति । यद्वा तयैव वाण्या समाधौ परमेश्वराराधनैकाग्र्ये निश्चयात्मिका बुद्धिर्न विधीयते नोत्पद्यत इत्यर्थः । तदुक्तं—

सोऽहं चिन्मात्रमेवेति चिंतनं ध्यानमुच्यते ।
ध्यानस्याविस्मृतिः सम्यग् समाधिरभिधीयते ॥

इति यत एवं ततः कारणाभावे कार्याभाव इति न्यायेन योगबुद्ध्यभावे तत्फलभूतो मोक्ष एतेषां कदाऽपि न संभवतीत्यर्थः ॥ ४४ ॥

अन्ये तु इदं श्लोकत्रयमित्थं योजयंति–तथा हि यदि सांख्ययोगरूपैकैव प्रमाणभूता बुद्धिस्तर्हि सर्वेषां किं न भवतीत्याशंक्य प्रतिबंधकसद्भावान्न भवतीत्याभिप्रेत्याह, हे पार्थ वेदवादरताः वेदवादेषु बहूनामर्थवादानां फलानां तत्साधनानां च प्रकाशकेषु वेदवाक्येषु रताः आसक्ताः सम्यग्ज्ञानवंतो न भवंति यतोऽविपश्चितो बुद्धिहीनाः यां इमां वाचं प्रवदंति तया वाचा उपहृतचेतसामविपश्चितां व्यवसायात्मिका बुद्धिर्न भवतीत्यन्वय; इमामध्ययनविद्ध्युपात्तत्वेन प्रसिद्धां पुष्पितां पुष्पितपलाशवदापातरमणीयां साध्यसाधनसंबंधप्रतिभानान्निरतिशयफलाभावाच्चेत्यर्थः ॥ ४२ ॥

कुतो निरतिशयफलत्वाभावस्तत्राह, जन्मेति । जन्म चापूर्वदेहेंद्रियादिसंबंधरूपं तदधीनं च कर्म तत्तद्वर्णाश्रमाभिमाननिमित्तं तदधीनं फलं पुत्रपशुस्वर्गादिलक्षणं विनश्वरं तानि प्रकर्षेण घटीयंत्रवदविच्छेदेन ददातीति तां जन्म च तत्कर्मफलं च जन्मकर्मफले ते ददातीति वा कुत एवमत आह, भोगेति । अमृतपानोर्वशीविहारपारिजातपरिमलादिनिबंधनो यो भोगस्तत्कारणं च यदैश्वर्यं देवादिस्वामित्वं तयोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषा क्रियाणां यागदानादीनां विशेषा देशकालाधिकारि-

प्रयुक्ता अग्निहोत्रदर्शपूर्णमासादयस्ते यस्यां वाचि बाहुल्येन प्रतिभांति तां, यद्वा तैः क्रियाविशेषैर्बहुलां विस्तृतामतिबाहुल्येन भोगैश्वर्यसाधनक्रियाकलापप्रतिपादिकामिति यावत् एतादृशीं कर्मकांडरूपां वाचं प्रवदंति प्रकृष्टां परमार्थस्वर्गादिफलामभ्युपगच्छंति के ये अविपश्चितः विचारजन्यतात्पर्यज्ञानशून्याः अत एव वेदे ये संति वादा अर्थवादाः अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादयः तेष्वेव रताः वेदार्थसत्यत्वेन एवमेवैतदिति मिथ्याभिनिवेशेन प्रीतिमंतोऽत एव नान्यदस्तीति वादिनः कर्मकांडापेक्षया नास्त्यन्यद् ज्ञानकांडं सर्वस्यापि वेदस्य क्रियापरत्वात्कर्मफलापेक्षया च नास्त्यन्यन्नित्यनिरातिशयं ज्ञानफलं तद्दाता ईश्वरो वेति वदनशीलाः, कुतो मोक्षद्वेषिणस्ते ? यतः कामात्मानः कामस्वभावाः कामपरा तत्तत्फलार्थित्वेन तत्तदुपायेषु कर्मस्वेव प्रवृत्ततया कर्मसंन्यासपूर्वकात्मज्ञानाद्बहिर्मुखा इति यावत् । ननु कर्मनिष्ठानामपि मोक्षेच्छया मोक्षोपाये ज्ञाने भवत्याभिमुख्यमिति नेत्याह, स्वर्गपरा स्वर्ग एव परः परमपुरुषार्थ उत्कृष्टो येषां ते तथा आमूलतो विवेकवैराग्याभावान्मोक्षकथामपि सोढुमक्षमा इत्यर्थः।त्वया तु मम मतमेवाभ्युपेयमिति द्योतनार्थं पार्थेत्युक्तम् ॥४३॥

ननु तेषामपि बुद्धिशुद्धिद्वारेण मोक्षो भविष्यतीति नेत्याह, भोगेति। भोगैश्वर्ययोः प्रसक्तानां क्षयित्वादिदोषादर्शनेन निविष्टांतःकरणानां, तथापि शास्त्रजन्यया विवेकप्रज्ञया व्यवसायात्मिका बुद्धिस्तेषामुदेष्यतीत्याशंक्याह, तयेति। तया क्रियाविशेषबहुलया वाचा उपहृतमाच्छादितं चेतो विवेकज्ञानं येषां तेषामाच्छादितविवेकज्ञानानां तात्पर्यविषये वेदस्य प्रामाण्यमिति स्पष्टमपि ज्ञातुमशक्तानां समाधावंतःकरणे व्यवसायात्मिका सांख्यविषया योगविषया वा बुद्धिर्न विधीयते न स्थिरा भवतीत्यर्थः, समाधौ समाधिविषया बुद्धिर्न तेषां भवतीति वा समाधीयतेऽस्मिन्सर्वं इति व्युत्पत्त्या समाधिरंतःकरणं परमात्मा वेति नाप्रसिद्धार्थकल्पनं, अहं ब्रह्मेत्यवस्थानं समाधिस्तन्निमित्तं व्यवसायात्मिका बुद्धिर्नोत्पद्यते इति वा रूढिरेवादृता। यद्यपि काम्यान्यग्निहोत्रादीनि शुद्ध्यर्थेभ्यो न भिद्यंते तथापि फलाभिसंधिदोषान्न ज्ञानोपयोगिनीं चित्तशुद्धिं संपादयंति भोगानुगुणं तु जनयंति, फलाभिसंधिमंतरेण कृतानि तु ज्ञानोपयोगिनीं शुद्धिमादधति इति सिद्धं विपश्चिदविपश्चितोः फलवैलक्षण्यं, विस्तरेण चैतदग्रे प्रतिपादयिष्यते इति भावः ॥ ४४ ॥

एवं श्रुतिवाक्यानामुपक्रमोपसंहारादिनाऽवांतरतात्पर्यं महातात्पर्यं

चाविजानतामर्थवादैर्मोहितानां कामिनां योगबुद्ध्यभावेनेश्वरप्रसादाभावात्संसारोपरमाभाव इति प्रतिपाद्य इदानीं केवलमुमुक्षूणां योगबुद्धिमतामीश्वरप्रीत्यै कर्म कुर्वतां प्ररोचनवाक्यैर्न मोहितव्यमिष्टानिष्टप्राप्तौ समबुद्ध्या श्रद्धाभक्तिभ्यामीश्वराराधनात्मकं कर्म कर्त्तव्यमिति सूचयितुमाह—

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।**
**निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान्॥४५॥**

त्रैगुण्येति। राजसास्तामसास्सात्त्विकाश्चेति त्रिविधा गुणास्त्रिगुणा रागद्वेषलोभमोहादयस्तेषां तत्कार्याणां तत्फलानां च समाहारस्त्रैगुण्यं संसारः स एव कर्मतत्साधनादिप्रकाशनद्वारा वर्धनीयत्वेन विषयो गोचरो येषां ते त्रैगुण्यविषयाः वेदाः संसारवृद्धेर्वेदोक्तकर्माधीनत्वादित्यर्थः। त्रैगुण्यस्य वेदविषयत्वेन सर्वेषामुपादेयत्वेऽपि न तन्मुमुक्षुभिरादर्त्तव्यमित्याह, निस्त्रैगुण्य इति। यतस्त्वं मोक्षेच्छया योगबुद्धियुक्तः सन्स्वधर्मे प्रवृत्तस्ततो निस्त्रैगुण्यो भव प्ररोचनश्रुतिवाक्येभ्यो रागद्वेषादिभ्यस्तत्प्रधानककर्मभ्यस्तत्फलेभ्यश्च निष्क्रांतो भव निर्द्वन्द्वश्च इष्टानिष्टपदार्थौ द्वौ द्वंद्वशब्दवाच्यौ रागद्वेषादिजनकौ तत्र समबुद्ध्या ताभ्यां निष्क्रांतो भव, निस्त्रैगुण्येऽपि मुमुक्षोः सत्त्वेन भवितव्यं मोक्षस्य तत्साधनस्य च शमदमक्षांत्यादिसत्वगुणैकलभ्यत्वादित्याशयेनाह, नित्यसत्वस्थ इति। नित्यं सर्वदा सत्वगुणे तिष्ठतीति नित्यसत्वस्थो भव विवेकवैराग्यशमदमादिष्वेव तिष्ठेत्यर्थः। योगक्षेमपरस्य रागद्वेषादिप्रसक्तिस्तया शमाद्यभावस्ततस्साधनोच्छेदस्तेन मोक्षासिद्धिर्भवति अतो मुमुक्षोस्ताभ्यां निर्ममः कर्त्तव्य इत्याशयेनाह, निर्योगक्षेम इति। अविद्यमानस्य संपादनं योगः विद्यमानस्य पालनं क्षेमः प्रारब्धाधीनो भूत्वा ताभ्यां निष्क्रांतो भव, मनसोऽविषयांतरपारवश्ये स्वधर्मो न सिध्यत्यतस्तदभावेन भवितव्यमित्याह, आत्मवानिति। विहिते कर्मणि श्रवणध्यानकीर्त्तनादिष्वेव स्थित आत्मा मनोऽस्यास्तीत्यात्मवान्निश्चलचित्तो भवेत्यर्थः।

यद्वा न जायते म्रियते वा कदाचिदित्यादिवाक्यैः प्रतिपादिता सांख्यविषया बुद्धिर्यदि तवाऽस्ति दृढा तदा त्वयैवं स्थातव्यमिति तत्वज्ञानिनः कर्त्तव्यं सूच्यते भगवता त्रैगुण्येति। त्रयो गुणास्सत्वादयो यस्य सन्ति तत्त्रिगुणं जगद्बीजमव्याकृतं तस्मादुत्पन्नं जगत्त्रैगुण्यं तदेव प्रतिपाद्यत्वेन विषयो येषां ते त्रैगुण्यविषयाः साध्यसाधनसाधकफलदेवतात्मकजगत्प्र-

काशनपराः सर्वे वेदा इत्यर्थः। वेदतदुक्तकर्मतत्फलेषु प्रवृत्तस्य द्वैतज्ञानबाधकं नाद्वैतज्ञानं, नापि तत्फलं सिध्यति अतस्तन्निष्क्रमो विदुषा कर्त्तव्य इत्याह, निस्त्रैगुण्यो भवति। विद्वानिमं लोकममुं परित्यज्यात्मानमन्विच्छेदिति स्मरणात् वेदेभ्यस्तदुक्तकर्मभ्यस्त्रैगुण्यात् जगतश्च सर्वस्मान्निष्क्रांतो भव संन्यासं कुर्वित्यर्थः। कृतेऽपि सर्वसंन्यासे बहिर्मुखस्य द्वैतालंबिनो ब्रह्मनिष्ठायोगात्तदयोगे ज्ञानभ्रंशस्तेन मोक्षो न सिध्यति अतो ज्ञानिनो द्वैतावलंबनं त्यक्तव्यमित्याह, निर्द्वंद्व इति। द्वंद्वं नामरूपे सर्वत्र तयोर्ग्रहणान्निर्गतो भव नामरूपयोर्ग्रहणं मा कुर्वित्यर्थः। निंदां कुर्वतो नामरूपाग्रहणं न संभवत्यतोप्राप्तान्तां विदुषो निषेद्धुमाह, नित्यसत्वस्थ इति। सत्ते भावः सत्त्वं ब्रह्मस्वरूपं तस्मिन्नेव नित्यं तिष्ठतीति नित्यसत्वस्थो भव सर्वदा ब्रह्मैवानुसंधेहीत्यर्थः। ब्रह्मविदः शरीरयात्राऽपि ब्रह्मदृष्ट्यैव कर्त्तव्या न तु बाह्यदृष्ट्येति सूचयितुमाह, निर्योगक्षेम इति। स्थितस्यैवं देहस्याहिकंटकादिभ्यस्तात्पर्येण पालनं क्षेमः तदनुकूलद्रव्यसंपादनं योगस्तदुभयस्यापि प्रारब्धाधीनत्वात् स्वदृष्ट्या देहाभावाच्च अधिष्ठानज्ञानबलेन तयोर्निर्गमं कृत्वा निर्योगक्षेमो भवेत्यर्थः। ब्रह्मनिष्ठायां प्रमादः क्वचिदपि माभूदित्याह, आत्मवानिति। आत्मा ब्रह्माकारबुद्धिः सैव सदाऽस्यास्तीत्यात्मवान् यद्वाऽहंबुद्धेर्विषयो आत्मैव सर्वदास्तु न क्वचित्प्रमादेनाप्यनात्मेति मत्वाऽह, आत्मवानिति। अनात्मानमहंबुद्धेर्विषयं क्वचित्कदाचिदपि माकुर्वित्यर्थः।

अन्ये तु ननु यदि स्वर्गादिकं फलं न स्यात्तर्हि वेदैस्तत्साधनभूतानि कर्माणि कथं विधीयन्ते इत्याशंक्य तद्विधायकवेदवाक्यानामन्याहकूतात्पर्यमस्तीत्याह, त्रैगुण्येति। केवलं वेदानां त्रैगुण्यविषयत्वे सिद्धे भगवदुपदिश्यमानस्य निस्त्रैगुण्यस्य वेदामूलकत्वेनोपदेशानर्हत्वं वेदैश्च सर्वैरहमेव वेद्य इत्यग्रिमभगवद्वाक्याविरोधश्च स्यात् अतोन्यथा व्याख्यायते—यथाधिकारं सत्वादित्रिगुणसंबन्धि यत्फलं तत्त्रैगुण्यं तदेव विषयो निरूपणीयत्वेन प्राप्तं येषु ते तथाविधाः वेदाः सन्ति त्वं तु सात्विकफले नित्यसत्वस्थः सन्निस्त्रैगुण्यो भव नित्यं शुद्धं च तत्सत्वं च तत्रस्थस्तन्निष्ठः सन् तेन तत्वज्ञानोत्पत्तौ गुणत्रयातीतो भव, अत्र सामान्यतः सत्वस्वरूपं तु उपासनायां यदवंचकत्वं च तत्रस्थस्तन्निष्ठः सन् तेन तत्वज्ञानोत्पत्तौ वाकायचित्तेषु तदेव सत्वमित्युक्तत्वाद्वेदेनोपासनायां शबलशुद्धभेदेन द्विधा सत्वं निरुक्तं तत्रैकं स्वर्गसुखप्रापकं अन्यत् तत्वज्ञानोत्पादकं एतदेव,—

तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसंगेन बध्नाति ज्ञानसङ्गेन चानघ ॥

इत्यग्रे भगवताऽप्युक्तं तथाच शुद्धसत्वेन रजस्तमश्चाभिभूय तत्वज्ञानोत्पत्तौ पुष्पफलन्यायेन सत्वोपरमोऽपि भवति ततो निस्त्रैगुण्यत्वमेव पर्यवसन्नमित्यर्थः। यद्वा त्रैगुण्यं त्रिगुणसम्बन्धि स्वर्गादिफलं तदेव विषं घातकं जन्ममरणपर्यवसायित्वेन बन्धहेतुत्वात्तत् त्रैगुण्यविषं यापयन्ति तिरस्कुर्वन्ति ते त्रैगुण्यविषयाः वेदाः पुनरुपनिषद्विभागैस्तद्यापयन्ति दूषयन्ति "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरंति" इत्यादिश्रुतेः। नन्वेवं ज्ञात्वाऽपि कथं तेषां विधानमिति चेन्न गुडजिह्विकान्यायेन कर्मप्रवृत्त्यै प्रलोभनमात्रत्वात्, अयमर्थः यथा रोगार्त्तः शिशुर्मुखेन कटुभेषजं न गृह्णाति, तत्र शर्करा निक्षिप्ताऽस्तीति माता तु प्रलोभयति सोऽपि शर्करामाधुर्येच्छया गृह्णाति मातुस्तात्पर्यं त्वारोग्य एव न तु शर्करादाने तद्वत् अतस्त्वं निस्त्रैगुण्यो भव त्रैगुण्यतिरस्कारकवेदार्थं भज। अथ व्यतिरेकमुखेन त्रैगुणस्य विषयरूपत्वमाह, निर्द्वंद्व इत्यादि। द्वंद्वानि शीतोष्णादीनि तदसहिष्णुत्वं तथा अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य संरक्षणं क्षेमः तथा असावधानत्वं एतानि दुःखहेतूनि त्रैगुण्यविषये संभवंतीति विषरूपत्वं निस्त्रैगुण्ये तु तदभाव इति नित्यसत्वस्थो धैर्यवान् सावधान इत्याहुः।

परे तु इत्थं योजयन्ति—नन्वविवेकिनामपि वेदाभ्यासवतां विवेकबुद्धिः संसारनिवर्तिका उदेष्यतीति चेत्तत्राह, त्रैगुण्यविषया इति। त्रयाणां सत्वादिगुणानां पुण्यपापव्यामिश्रकर्मतत्फलसंबन्धलक्षणस्संसारस्त्रैगुण्यं प्रकाश्यत्वेन विषयो येषान्ताहशा वेदाः कर्मकाण्डात्मकाः यो यत्फलकामस्तस्यैव तत्फलं बोधयन्तीत्यर्थः, तथा च कर्मकाण्डात्मकवेदाभ्यासवतां तदर्थानुष्ठानद्वारा संसारावश्यकत्वान्न विवेकबुद्ध्यवसरोऽस्तीति भावः। तर्हि संसारनिवृत्त्यर्थविवेकबुद्धिसिद्धये किं कर्त्तव्यं इत्याशंक्याह, निस्त्रैगुण्य इति। हेऽर्जुन त्वं त्वनर्थनिवृत्तये निस्त्रैगुण्यो निष्कामो भव तथा च कामनाया एव संसारहेतुत्वात्तदभावे तन्निवृत्तौ सुखी भविष्यसीति भावः। ननु शीतोष्णादिद्वंद्ववारणाय वस्त्राद्यपेक्षणात्कुतो निष्कामत्त्वं अत आह निर्द्वंद्वः शीतोष्णादिद्वंद्वसहिष्णुर्भव। नन्वसह्यं दुःखं कथं सोढव्यमित्याकांक्षायामाह नित्यसत्वस्थ इति। नित्यमचलं यत्सत्वं सत्त्वगुणं धैर्यं वा तस्मिंस्तिष्ठतीति नित्यसत्वस्थो भव रजस्तमसी तिरस्कृत्य सत्वमात्राश्रितो

भवेत्यर्थः। ननु क्षुत्पिपासानिवृत्तये योगक्षेमव्यावृत्तचेतसो रजस्तमोभ्यां अस्पृष्टे सत्त्वमात्रे समाश्रितत्वं कथं स्यादित्याशंक्याह, निर्योगक्षेम इति। अप्राप्तप्राप्तिर्योगः प्राप्तस्य परिरक्षणं क्षेमस्तद्रहितो भव चित्तविक्षेपकारिपरिग्रहरहितो भवेत्यर्थः। ननु योगक्षेमप्रधानत्वं सर्वस्य स्वाभाविकं ततो निर्गमनं कथमित्याशंक्याह, आत्मवान् अप्रमादो विषयपारवश्यशून्यो भवेत्यर्थः, यद्वा नचैवं सति जीवनं कथं स्यादिति चिन्त्यं यतः परमेश्वर एव तत्करिष्यतीत्याह, आत्मवान् आत्मा परमात्मा ध्येयत्वेन योगक्षेमादिनिर्वाहकत्वेन च वर्त्तते यस्य स आत्मवान् सर्वकामनापरित्यागेन परमेश्वरमाराधयतो मम स एव देहयात्रामात्रमपेक्षितं संपादयिष्यतीति निश्चितो भवेत्यर्थः। स्वनाम सार्थकं कर्तुमर्हसीति सूचनायार्जुनेति शुद्ध्यर्थकं संबोधनमित्याहुः। यद्यपि बहुव्याख्यासंग्रहे पौनरुक्त्यमायाति तथापि यत्किंचिद्वैलक्षण्याङ्गीकारेण तत्संगृह्यते संग्रहार्थप्रवृत्तेश्चादोष इति बोध्यम् ॥ ४५ ॥

ननु ब्रह्मविदः श्रुत्युक्तसर्वकर्मसंन्यासे साधनाभावे साध्याभाव इति न्यायेन तत्तत्कर्मविशेषलभ्यस्वर्गादिसुखविशेषाभावे ह्युन्मतस्येव निष्फलेवाऽस्य प्रवृत्तिरित्याशंकायां 'सर्वं पदं हस्तिपदे निमग्नं' इति न्यायेन सत्क्रियालभ्याः सार्वभौमादिब्रह्मान्ता आनन्दाः सर्वे ब्रह्मानुभूतौ तिष्ठतोऽस्य रूढस्य संभवन्तीति तदुत्तरं सदृष्टान्तमाह—

**यावानर्थ उदपाने सर्वतःसंप्लुतोदके।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

यावानिति। उदमुदकं पिबत्यस्मिन्नित्युदपानं जलाशयः जातावेकवचन तस्मिन् उदपाने भूमौ सर्वत्र विद्यमानवापीकूपतटाकपुष्करणीनदनद्यादौ पुण्यतीर्थे स्नानदानार्चनादिक्रियया साध्यमानोऽर्थः पुण्यलक्षणो यावान् यावत्परिमाणकः सिध्यति सर्वतःसंप्लुतोदके सर्वत्र संप्लुतं परिपूर्णमुदकं यस्य स सर्वतःसंप्लुतोदकः समुद्रस्तस्मिन्नेव स्नानदानार्चनादिक्रियया लभ्यमानः पुण्यरूपोऽर्थस्तावानेव गंगादिपुण्यतीर्थेषु तत्र तत्र पृथक् पृथक् क्रियमाणस्नानदानादिक्रियालभ्यमानपुण्यविशेषैः समानपरिमाण एव सिध्यति न ततो न्यूनायते शते पंचाशन्न्यायेन परिच्छिन्नजलानां गंगादीनां समुद्रेऽन्तर्भावात् एवमेव सर्वेषु वेदेषु ऋगादिषु प्रसिद्धैः कर्मभिर्या-

गयज्ञदानाध्ययनव्रततपोयोगादिभिरन्यैश्च पुण्यविशेषैः संपाद्यमानः श्रुत्युक्त आनंदः सार्वभौमादिब्रह्मांतः पुनः पुनः शतगुणितो यावान्भवति तावानानंदो विजानतः सर्वमिदमहं च ब्रह्मैवेति जगत्सर्वं स्वं च सच्चिदानंदं ब्रह्मैव पश्यतो ब्राह्मणस्य ब्रह्मविद्यातिनो ब्रह्मानुभूत्या सिध्यति ततो ब्रह्मविन्नित्यानंद एव भवति 'स मोदते मोदनीयं हि लब्ध्वेति, श्रुतेः। यद्वा उदपाने भूमौ सर्वत्र विद्यमानवापीकूपतटाकनदनद्यादौ जलप्रदेशे विद्यमानो जलरूपोऽर्थो यावान्स जलरूपोऽर्थः सर्वतःसंप्लुतोदके समुद्रे एककोणस्थितजलस्यांशांशो भवति यथा तथा वेदेषु शब्दादिविषयजातं विदंति जानंतीति वेदाः ब्रह्मादिपिपीलिकांताः सर्वे प्राणिनो विदधातोः कर्त्तर्यच् तेषु वेदेषु सर्वेषु प्राणिषु पुण्यकर्मपरिपाकवशादिष्टार्थसान्निध्ये प्रतीयमान आनंदरूपोऽर्थो यावान् तावान् स आनंदरूपोऽर्थः सर्वतःसंप्लुतोदस्थानीये ब्रह्माणि स्थितानंदस्य लेशांशो भवति 'एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति श्रुतेः' एवं स्वप्रतिबिंबलेशांशमात्रेण ब्रह्मादिपिपीलिकांतप्राणिजातस्य तत्तत्पुण्यविशेषतारतम्येन सुखतारतम्यप्रदं सर्वतःसंप्लुतोदकस्थानीयं सत्यज्ञानानंदघनं परं ब्रह्म विजानत एतदेवाहमिति स्वस्वरूपत्वेन साक्षात्कृतवतो ब्राह्मणस्य ब्रह्मविदोऽखंडाकारवृत्या सर्वदाऽनुभूयमानोऽनंतो विंबानंद एवंलक्षण एतावानिति वक्तुं न केनापि शक्यत इत्यर्थः।

अपरे तु इत्थं योजयंति, नन्वीश्वरार्पणबुद्ध्या स्वधर्मानुष्ठानेऽपि तत्फलस्यानाकांक्षितत्वाद्वैफल्यं तदनुष्ठानस्येत्याशंक्य कर्मयोगस्य फलवत्त्वं सूचयन् ज्ञानफले कर्मफलानामंतर्भावमाह, यावानिति। यथोदपाने अल्पोदके कूपादौ यावानर्थः यावत्परिमाणं स्नानपानादिकं प्रयोजनं संपद्यते स तावान् तावत्परिमाण एव स्नानादिरूपः सर्वार्थः सर्वतःसंप्लुतोदके महति जलाशये संपद्यते अल्पोदकानां महदुदकांशत्वात् तथा सर्वेषु वेदेषु वेदोक्तेषु काम्यकर्मसु यावानर्थो हिरण्यगर्भानंदपर्यंतो विषयानंदलक्षणस्तावानर्थो विजानतो ब्रह्मतत्त्वं साक्षात्कृतवतो ब्राह्मणस्य ब्रह्मबुभूषोर्भवति क्षुद्रानंदानां ब्रह्मानंदांशत्वेन तदंतर्भावादित्यर्थः एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः, तथा च चित्तशुद्धिविविदिषाश्रवणादिजन्यब्रह्मसाक्षात्कारानर्थनिवृत्तिद्वारा ब्रह्मानन्दप्राप्तिपर्यवसायिनो निष्कामकर्मयोगस्य नास्ति वैफल्यमिति बोध्यम्। ननु सर्वकामनापरित्यागेन कर्म कुर्वन्नहं कर्मजनितैरानन्दैर्वञ्चितः स्यां इति चिन्तां मा कुर्वित्याह, यावानिति। तथा च निष्कामकर्मभिः शुद्धान्तःकरणस्य तत्त्वात्मज्ञानोदये परब्र-

ह्मानन्दप्राप्तिः स्यात्तयैव च सर्वानन्दप्राप्तौ न क्षुद्रानन्दप्राप्तिनिबन्धन चिन्तावकाशः अतः परमानन्दप्रापकतत्वज्ञानाय निष्कामकर्माणि कुर्वित्यभिप्रायः अत्र यथा तथा भवतीति पदत्रयाध्याहारः दार्ष्टान्तिके यावान् तावानिति पदद्वयानुषङ्गश्च द्रष्टव्यइत्यन्ये ॥ ४६ ॥

यद्यप्येवंलक्षणसम्पन्नस्यैव ब्रह्मवित्तमस्य कर्मसंन्यासेऽधिकारोऽस्ति तथापि शोकमोहाविष्टत्वादिधर्मैर्विचार्यमाणे नैतत् लक्षणं त्वयि दृश्यते ततस्तव कर्मण्येवाधिकारो न तु ज्ञाने नापि च संन्यास इति वदन् शतधा कृतश्रवणानामप्यनुदितात्मज्ञानानां मुमुक्षूणां स्वधर्मानुष्ठानमवश्यं कर्त्तव्यं यतः कर्मफलानपेक्षया श्रद्धया चेश्वरप्रीत्यर्थभक्त्या कर्म कुर्वत एव मोक्षो भवति नान्यथेति निष्कर्षमाह—

**कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ॥**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥**

कर्मण्येवेति। ते तव मुमुक्षोः श्रुतिस्मृतिविहिते काम्यवर्जिते नित्ये नैमित्तिके च कर्मण्येवाधिकारो योग्यता नान्यत्र ज्ञाननिष्ठायां संन्यासे वा इत्यन्ययोगव्यवच्छेदार्थ एवकारः तत्राऽपि कर्मफलेषु यज्ञो दानं तपश्चैव पावनानीति धर्मेण पापमपनुदतीति नित्यानामपि फलश्रवणात्फलेषु मा तेऽधिकारो नास्ति योग्यता कर्मफलेषु अपेक्षा न कदापि कर्त्तव्येत्यर्थः यस्मात् कर्मफलेषु अपेक्षितेषु सत्सु बीजे सत्यंकुरवत्पुनर्जन्मादयो दुःखभूमयो स्वयमेव स्युः तस्मान्मा कर्मफलहेतुर्भू यथा स्वर्गकामी स्वर्गफलहेतुः तथा त्वमेतत्कर्मफलहेतुर्माभूः तत्फलेष्वपेक्षावान्मा भवेत्यर्थः। ननु फलशून्यं तत्रापि क्लेशप्रधानं कर्म कर्त्तुं न शक्यते अतस्तदपेक्षया तत्त्यागः सुखावह इत्याशंकायां आरुरुक्षोः कर्मत्यागो न युक्त इत्याशयेनाह, मा त इति । अकर्म कर्मव्यतिरेकः तत्त्याग इति यावत् तास्मिन्नकर्मणि सङ्गो मनस्संक्तिर्मास्तु अकरणे प्रत्यवायस्तेन नरको दुर्योनिश्च स्यादतो मुमुक्षोः कर्मसंन्यासो न युक्त इत्यर्थः।

अन्ये तु ननु कर्मफलस्य ज्ञानफलांतर्भूतत्वे ज्ञानमेवोपदिश्यतां किमिति कर्मोपदिश्यत इत्याशंक्य ज्ञानाधिकारहेतुचित्तशुद्धेः प्राक्कर्मण्येवाधिकारो न तु ज्ञान इत्याह, कर्मण्येवेति। ते तवाशुद्धांतःकरणस्य तच्छोधके कर्मण्येवाधिकारो मयेदं कर्त्तव्यमिति बोधोऽस्तु नतु ज्ञाननिष्ठारूपे वेदांतवाक्यविचारादौ। ननु कर्म कुर्वतस्तत्फलैर्बंधो भविष्यतीत्याशंक्याह मेति। कर्म

कुर्वतस्त्व तत्फलेषु स्वर्गादिषु कदाचन कस्यांचिदपि अवस्थायां कर्मानुष्ठानात्प्रागूर्ध्वं वा तत्काले वाऽधिकारो मयेदं भोक्तव्यमिति बोधो माऽस्तु। ननु मयेदं भोक्तव्यमिति बुद्ध्यभावेऽपि कर्म स्वसामर्थ्यादेव फलं दास्यतीत्याशंक्याह मेति। फलकामनया हि कर्म कुर्वन् फलस्य हेतुरुत्पादको भवति तत्फलकामी त्वं तु निष्कामः सन् कर्मफलहेतुर्माभूः नहि निष्कामेन भगवदर्पणबुद्ध्या कृतं कर्म फलाय समर्थं भवति चित्तशुद्धिहेतुत्वात्तस्येत्यर्थः। फलाभावे किं कर्मणेत्यत आह, मात इति। ते तवाकर्मणि फलेच्छाभावे किं कर्मणा दुःखरूपेणेति बुद्ध्या तदकरणे संगः प्रीतिर्माभूदित्यर्थ इत्याहुः ॥ ४७ ॥

जन्मादिदुःखनिःशेषानिवृत्त्यपेक्षैव तवास्ति चेत्तर्हि त्वं कर्मैव कुर्वित्युपदिशति—

**योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥**

योगस्थ इति। हे धनंजय धनं स्वर्गादिसुखं जयति तुच्छत्वेन त्यजतीति धनंजयस्तत्संबोधनं तथा, निर्दोषं हि समं ब्रह्मेति वक्ष्यमाणं ब्रह्मात्र समशब्देनोच्यते समस्य भावः समत्वं तदेव ज्ञानेन युज्यते प्राप्यत इति योगस्तस्मिन्योगे ब्रह्मणि स्वस्य तद्भावापत्त्या एतदेकापेक्षया तिष्ठतीति योगस्थो मोक्षैककामः सन् त्वं संगं एतैर्मम दुरितक्षयोऽस्त्विति प्रतिबंध निवृत्तिरस्त्विति वा प्रसीदत्वीश्वरो मह्यमिति वा कर्मजन्यं फलं मे भूयादिति वा संगः कामस्तं कर्मसु त्यक्त्वा पुनः किं कृत्वा सिद्ध्यसिद्ध्योः समो भूत्वा आरब्धस्य कर्मणः सांगता सिद्धिस्तदभावोऽसिद्धिः ईश्वरप्रसादप्राप्तिः सिद्धिस्तदप्राप्तिरसिद्धिः चित्तप्रसत्तिः सिद्धिस्तदभावोऽसिद्धिः इत्यादिसिद्ध्यसिद्ध्योः समो हर्षविषादशून्यो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितानीति विवक्षया कुर्वित्यर्थः।

अन्ये तु वदन्ति—यद्यकरणे आसक्तिर्न युक्ता तर्हि किमर्थं क्लेशात्मकं कर्म कर्तव्यमित्याशंक्य वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा क्लेशात्मकमपि कर्म विहितत्वात्कुर्वित्याह, योगस्थ इति। हे धनंजय त्वं योगस्थः सन् संगं फलाभिलाषं कर्तृत्वाभिनिवेशं च त्यक्त्वा कर्माणि कुर्वित्यर्थः। संगत्यागोपायमाह सिद्ध्यसिद्ध्योः फलसिद्ध्यसिद्ध्योः समो भूत्वा

हर्षविषादौ त्यक्त्वा केवलमीश्वराराधनबुद्ध्या कर्माणि कुर्वित्यर्थः । ननु पूर्वं योगशब्देन कर्मोक्तं अत्र तु योगस्थ इत्युच्यतेऽतः कथमेतद्बोद्धुं शक्यमित्यत आह, समत्वमिति यदेतत्सिद्ध्यसिद्ध्योः समत्वं इदमेव योगस्थ इत्यत्र योगशब्देनोच्यते न तु कर्मेति न कोऽपि विरोध इत्यर्थः । सुखदुःखे समे कृत्वेत्यत्र जयाजयसाम्येन युद्धमात्रकर्तव्यता प्रकृतत्वादुक्ता इह तु दृष्टादृष्टसर्वफलपरित्यागेन सर्वकर्मकर्त्तव्यतेति विशेषः दिग्विजये राज्ञो जित्वा धनमाहृत्य राजसूयो यज्ञस्त्वया संपादितस्तथाऽधुनाऽप्येतान्सर्वाञ्जित्वा यज्ञादीन् संपादयितुमर्हसीति द्योतनाय संबोधनम् ॥ ४८ ॥

ननु निष्कामकर्मानुष्ठानं प्रयोजनमनुद्दिश्य न मंदोऽपि प्रवर्त्तत इति न्यायविरुद्धं अतो वरं फलकामनयैव तदनुष्ठानमिति चेत्, नेत्याह—

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**

**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

दूरेणेति । हे धनंजय बुद्धियोगात् समत्वबुद्धियुक्तादात्मज्ञानहेतुभूतान्निष्कामकर्मणो दूरेणातिविप्रकर्षेण अवरमधमं कर्म फलाभिसंधिना क्रियमाणं जन्ममरणादिहेतुत्वात्, यद्वा परमात्मबुद्धियोगात् दूरेण अवरं सर्वमपि कर्म हि यस्मात्तस्मात् बुद्धौ समत्वबुद्धौ तत्फलभूतबुद्धिशुद्धिजन्यायां सर्वानर्थनिवर्त्तिकायामात्मबुद्धौ वा शरणं प्रतिबंधकपापक्षयद्वारेण रक्षकं निष्कामकर्मयोगं अन्विच्छ कर्तुमिच्छ ये तु फलहेतवः फलकामाः अवरं कर्म कुर्वन्ति ते कृपणाः जन्ममरणादिभ्रमणेन परवशाः अत्यंतदीना इत्यर्थः, यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपण इतिश्रुतेः, तथा च त्वमपि कृपणो माभूः किं तु कृपणताहेत्वज्ञाननिवर्तकात्मज्ञानोत्पादकं निष्कामकर्मयोगमेव कुर्वित्याशयः । यथा हि कृपणा जना अतिदुःखेन धनमर्जयंतो यत्किंचिद्दृष्टसुखमात्रलोभेन दानादिजनितं महत्सुखं अनुभवितुं न शक्नुवंतीत्यात्मानं वंचयंति तथा महता दुःखेन कर्माणि कुर्वाणाः क्षुद्रफलमात्रलोभेन परमानंदानुभवेन वंचिता इत्यहो दौर्भाग्यं मौढ्यं च तेषामिति कृपणपदेन सूचितं, धनं त्वया हृतं तेन त्वद्भ्रात्रा स्वाराज्यकामनया राजसूयकर्मानुष्ठितं तस्य फलं भवद्भिः पूर्वमनुभूतं अधुना चोपस्थितमतः काम्यकर्माधममिति सूचनार्थं संबोधनम् ।

अन्ये तु मोक्षेच्छयैव फलानपेक्षया समबुद्ध्या च नित्यानि नैमित्तिकानि च कर्माणि कुर्वतो यदा कर्मभिस्तत्फलैश्च मोक्षेण किमप्यस्ति

तुच्छैरित्यलंबुद्धिलक्षणा चित्तशुद्धिर्जायते तदा निकृष्टफलदे कर्मण्यनास्थया ज्ञानयोग एवादर्तव्य इति बोधयति, दूरेणेति । हे धनंजय बहुसाधनसाध्यत्वात् क्लेशभूयिष्ठात् असांगत्वे फलवैगुण्यात् सांगत्वे च जन्मादिदुःखबीजत्वात् अकरणे प्रत्यवायजनकतया निरयहेतुत्वाच्च अवरं निष्कृष्टं कर्म बुद्धियोगान्नित्यनिरतिशयमोक्षसुखहेतोर्ज्ञानयोगात् दूरेण वर्त्तते. दूरमेते विपरीते विषूची अविद्या या च विद्या इति श्रुतेर्विपरीतभावहेतुतया मोक्षहेतोर्ज्ञानयोगस्य दूरमेव भवति अष्टादशसूक्तमवरं येषु कर्मेतिश्रुत्युक्तमवरत्वं कर्मणो हि शब्दो द्योतयत्यतः कर्मानास्थेयमिति भावः । ननु बहुभिः कर्मैव क्रियते कथं तदवरत्वं इत्याशंक्याह, कृपणा इति । कर्मजन्यफलस्य स्वर्गस्य ऐहिकस्य वा सुखस्य हेतवः कर्मकरणे फलमेव हेतुः कारणं इति मन्वानाः कर्मफलार्थिनः कर्मफलहेतवोऽत एव कृपणाः फलं विना कर्मार्थे धनव्ययो व्यर्थ इति तेषां कार्पण्यं "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वा प्रैति स ब्राह्मण" इति विशिष्टजन्मकर्मशीलगुणवतोऽपि ब्रह्मतत्वं अजानत एव अधमत्वश्रवणात् भोगार्गि वाचक्नवि यः पुरुषः एतदक्षरं परं ब्रह्म अविदित्वाऽज्ञात्वा फलोद्देशेन कर्म कृत्वाऽस्मान्मनुष्यलोकात् लोकांतरं प्रैति मृत्वा गच्छति स कृपणः स्वर्विषयभोगेप्सुः तथा एतदक्षरं विदित्वा प्रैति स ब्राह्मणो ब्रह्मरूपो भवतीत्यर्थः, 'यत्कर्मिणो न प्रवेदयंति रागात्तेनातुराः क्षीणलोकाश्च्यवंते इति कर्मफलमोहितानां कर्मिणामनर्थश्रवणाच्च, अतो धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयंत इति एतद्यो वेद निहितं गुहायां सोऽविद्याग्रंथिं विकरतीह सौम्य ज्ञानादेव तु कैवल्यं इत्यादिश्रुतिभिः विवेकिनां भोग्येष्वप्रार्थ्यत्वं मोक्षस्यैव प्रार्थ्यत्वं विद्यैकगम्यत्वं च प्रतिपाद्यते इत्यतो हे धनंजय बुद्धौ चित्तप्रसादासादितज्ञानयोग एव शरणं मनसो वासमन्विच्छ तत्रैव मनः स्थापय यदा ते चित्तं प्रसीदति तदारभ्य ज्ञानयोगएव तिष्ठ न तु कर्मणि तस्यावरत्वात् असाधनत्वात् अनात्मन्यात्मताधीहेतुत्वाच्च । एतेन यावत् चित्तप्रसादस्तावदेव चित्तशुद्धिद्वारा ज्ञानयोगं समुद्दिश्यैककर्म कर्त्तव्यं मुमुक्षोः अतःपरं ज्ञानयोगएव आश्रयणीय इति सूचितं तेन यावज्जीवमग्निहोत्रं त्वशुद्धिबुद्धिरेवेति सिद्धमित्याहुः ॥ ४८ ॥

मुमुक्षोर्जन्मादिहेतूनां कर्मणां निःशेषनिवृत्तिः ज्ञानयोगबलेनैव सिद्ध्यति नान्येन अतस्त्वं तत्रैव निष्ठां कुर्विति बोधयति—

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५०॥

बुद्धियुक्त इति। बुद्धिः सांख्यविषया तया युक्तः ज्ञानयोगयुक्तो ब्रह्मवित् आरूढः स्वस्य कूटस्थासंगचिदात्मत्वविज्ञानबलेनैव इह लोके जन्मान्तरशतसहस्रेषु अज्ञानोत्पत्तेः प्रागूर्ध्वं कृते नानायोनि-सहस्रप्रापके उभे सुकृतदुष्कृते पुण्यपापे जहाति त्यजति ज्ञानाग्निना निर्मूल्यात्र जीवन्नेव मुक्तो भवति पापमकरवं इत्यतः कल्याणमकरवं इत्युभे एष एते तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतइति श्रुतेः, अतः ज्ञानोत्पत्त्यनंतरं अहं पापमकरवमकार्षमिति तथा कल्याणं सुकृतम-करवमिति एते उभे साध्वसाधुनी सुकृतदुष्कृते अमृतः मुक्तः सन् तरति उल्लंघयति तथा एनं तत्वज्ञानिनं पुरुषं कृताकृते कृते वा अकृते वा साध्व-साधुनी न तपतः नाक्रामतः न स्वाधीनं कुरुतः अनुष्ठिते अननुष्ठिते फलदानाय समर्थे न भवत इत्यर्थः, यस्मादेवं तस्मात् त्वं योगाय ज्ञानयोगाय परमेश्वरप्राप्तये युज्यस्व यतस्व । ननु कृच्छ्रचांद्रायणादिप्रायश्चित्तै-स्त्रिसुपर्णादिजपैः अश्वमेधादियागैः गंगादिमहानदीस्नानदानैश्च सर्वपापक्षये सति किमर्थं ज्ञानयोगाभ्यासक्लेश इति चेन्न तैः निःशेषपापनिवृत्त्यसम्भवात् उक्ताः प्रायश्चित्तादयो यदुद्देशेन क्रियन्ते तैस्तदेव निवर्त्यते नेतरत् अन्यथा प्रायश्चित्तभेदविध्यानर्थक्यप्रसङ्गात् तरति ब्रह्महत्यां योऽश्वमेधेन यजत इतिब्रह्महत्याव्यतिरिक्तपापतरणाश्रवणात् कृतेऽपि प्रायश्चित्तादौ पापस्यैव निवृत्तिर्न तु पुण्यस्य शतकोटिजन्महेतोः न हि महत्साध-नमात्मज्ञानं विना पुण्यस्य निवर्त्तकमस्ति तदा विद्वान् पुण्यपापे विधूयेति श्रुतेः, अतः पापपुण्योभयात्मकेषु कर्मसु निवर्त्तितव्येषु सत्सु योगो ज्ञानयोग एव कौशलं कुशलमेव कौशलं निपुणं ज्ञानकुशलैर्दृष्टं परमं साधनं कौशलं यद्बन्धजनकेषु कर्मसु अबन्धजनकत्वसम्पादकत्वं ज्ञानयोगस्यास्ति तदेव कौशलमिति वाऽर्थः तस्माद्योगाय युज्यस्वेतिपूर्वेणान्वयः जहातीहेत्यत्र सन्धिरार्षः।

अन्ये तु वदन्ति पूर्वोक्तसमत्वबुद्धियोगाभावे दोषमुक्त्वा तद्युक्तस्य स्वधर्मानुष्ठाने प्रवृत्तस्य फलमाह, बुद्धियुक्त इति। इहास्मिंल्लोके जन्मनि कर्मसु वा बुद्धियुक्तः समत्वबुद्ध्या युक्तो उभे पुण्यपापे जहाति त्यजति सत्वशुद्धिज्ञानप्राप्तिद्वारेण ,यस्मादेवं तस्मात्समत्वबुद्धियोगाय युज्यस्व

उद्युक्तो भव ज्ञानयोगप्राप्त्यर्थं यस्मादीदृशः समत्वबुद्धियोग ईश्वरार्पित चतसः कर्मसु प्रवर्त्तमानस्य कौशलं कुशलभावः यद्बंधहेतूनामपि कर्मणां तद्भावो मोक्षपर्यवसायित्वं च तन्महत्कौशलं । अथवा इह समत्वबुद्धियुक्ते कर्माणि कृते सति सत्वशुद्धिद्वारेण बुद्धियुक्तः परमात्मसाक्षात्कारवान्सन् जहात्युभे सुकृतदुष्कृते तस्मात्समत्वबुद्धियुक्ताय कर्मयोगाय उद्युक्त भव यस्मात्कर्मसु मध्ये समत्वबुद्धियुक्तः कर्मयोगः कौशलः कुशलः दुष्टकर्मनिवारणचतुर इत्यर्थः ॥ ५० ॥

फलानपेक्षया समबुद्ध्या च सम्यगनुष्ठितनित्यनैमितिककर्मपरिपाकसंजाताचित्तशुद्धेः फलभूतायाः श्रवणादिजनिताविक्रियात्मतत्वविज्ञानसिद्धेः फलमाह—

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयं ॥ ५१ ॥**

कर्मजमिति । बुद्ध्या ब्रह्मात्मैकत्वविज्ञानेन युक्ताः संपन्नाः ज्ञानयोगनिष्ठाः हि खलु मनीषिणो विद्वांसः कर्मजं कर्मभ्यो जातं नानायोनिसहस्रप्रापकं फलं जन्मादिलक्षणं त्यक्त्वा निमित्ताभावे नैमित्तिकस्याप्यभाव इति न्यायेन ज्ञानाग्निना सर्वेषामपि कर्मणां दाहे सति तत्फलानां च जन्मादीनां दाहसंभवात्तेन त्यक्तकर्मफला भवन्ति आत्मनः कूटस्थत्वासंगत्वविज्ञानशक्तिबलेन स्वयं कर्मफलाविषया भूत्वेत्यर्थः । जन्मना बन्धः सम्बन्धो यस्य स देहो जन्मबन्धस्तेन विनिर्मुक्ताः कारणाभावाद् भाविदेहसम्बन्धरहिताः तादात्म्याभावाद्वर्तमानदेहसम्बन्धरहिताश्च सन्तः स्वयमिह जीवन्तएव अनामयं आध्यात्मिकादिसर्गोपद्रवरहितं नित्यशुद्धबुद्धमुक्तस्वभावं अखंडानंदैकरसं पदं पद्यते ज्ञानेन प्राप्यत इति पदं परं ब्रह्म गच्छंति अविद्याकृतं वासनाकृतमप्यन्यभावं परित्यज्य तद्भावमेव प्राप्नुवंतीत्यर्थः । हिशब्दो विद्वदनुभवद्योतनार्थः ।

अन्ये तु ननु समत्वबुद्धियुक्तस्य पुण्यपापतत्फलपरित्यागेऽपि कथं मोक्षः स्यादित्याशंक्य समत्वबुद्ध्याऽनुष्ठीयमानं कर्म पापादित्यागसत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण मोक्षसाधकं इत्याह, कर्मजमिति । समत्वबुद्धियुक्ता हि यस्मात्कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्माणि कुर्वाणाः सत्त्वशुद्धिद्वारेण मनीषिणः तत्वमस्यादिवाक्यजन्यात्मप्रज्ञावंतो भवन्ति तादृशाश्च संतो जन्मात्मकेन बन्धेन विनिर्मुक्ताः विशेषेणात्यंतिकत्वलक्षणेन

निरवशेषमुक्ताः पदं पदनीयमात्मतत्वं आनंदरूपं ब्रह्म अनामयमविद्यात कार्यात्मकरोगरहितं अभयमोक्षाख्यपुरुषार्थं गच्छंत्यभेदेन प्राप्नुवंतीत्यर्थः। यस्मादेवं फलेच्छां त्यक्त्वा समत्वबुद्ध्या कर्माण्यनुतिष्ठंतस्तैः कृतांतःकरणशुद्धयः तत्वमस्यादिवाक्योत्पन्नात्मतत्वज्ञानेन विनष्टाज्ञानतत्कार्याः संतः सर्वानर्थनिवृत्तिपरमानंदप्राप्तिरूपं मोक्षाख्यं विष्णोः परमं पदं गच्छंति तस्मात्त्वमपि श्रेयो जिज्ञासुरेवंविधं कर्मयोगमनुतिष्ठेति भगवतोऽभिप्राय इत्याहुः ॥ ५१ ॥

यदर्थं कर्मानुष्ठानं तामात्मानात्मविवेकलक्षणां बुद्धिं कदा प्राप्स्यामीत्याशंक्याह—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गंतासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥**

यदेति। यदा यस्मिन्काले ते तव बुद्धिर्मोहमात्मानात्माविवेकरूपं कालुष्यं व्यतिक्रमिष्यति। बुद्धिशुद्धिफलस्य विवेकस्य फलं वैराग्यप्राप्तिं दर्शयति तदा तस्मिन्काले श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैराग्यं गंतासि प्राप्तासि । यद्वा कर्मानुष्ठानजा सत्वशुद्धिः कदा भविष्यतीत्यतआह यदेति। न ह्येतावता कालेन सत्त्वशुद्धिर्भवतीति कालनियमोऽस्ति किन्तु यदा तव बुद्धिरंतःकरणं मोहमविवेकात्मकं कलिलमहमिदं ममेदं इत्याद्यज्ञानविलसितमतिगहनं व्यतिक्रमिष्यति रजस्तमोमलमपहाय शुद्धभावमवाप्स्यते इत्यर्थः तदा श्रोतव्यस्य श्रुतस्य च कर्मफलस्य वैतृष्ण्यं प्राप्तासि निर्वेदफलेनांतःकरणशुद्धिं ज्ञास्यसीत्याशयः।

चित्तशुद्धिजन्यं सर्वत्रालंबुद्धिलक्षणं वैराग्यं प्रज्ञास्थैर्यलक्षणं योगं कदा केन वा प्राप्स्यामीत्याशयं अर्जुनस्यालक्ष्य यदा तव बुद्धिकालुष्यनिवृत्तिर्यदा वा प्रज्ञा निर्विकल्पा स्यात् तदा वैराग्यं योगं च प्राप्स्यसीत्येतद्वयं श्लोकद्वयेन क्रमेण प्रतिपादयति यदेत्यादिना । सदसद्विवेकशून्यतयांतष्करणं असत्स्वेव विषयेषु रम्यमरम्यं इष्टमनिष्टं ग्राह्यमग्राह्यमिति येन रागद्वेषग्रस्तं सर्वदा प्रवर्त्तते तदेवं मोहकलिलं मोहो विषयजातं सर्वमेतदसन्मायिकं तुच्छमिति विवेकाभावस्तदेव कलिलं कालुष्यं विवेकबुद्धेरावरणं एवंलक्षणं मोहकलिलं ते बुद्धिर्यदा व्यतितरिष्यति यदिदं मनसा वागादिभिश्च गृह्यमाणं तदिदं नश्वरं मायामनोमयं विद्धीत्यादिवचनार्थस्य सम्यग्ग्रहणजन्येन परमेश्वरप्रसादमूलेन दृश्यमानं सर्वं

मिथ्यैवेतिनिश्चयेन यदा त्यजति तदा श्रोतव्यस्य श्रुतस्य च द्रष्टव्यस्य दृष्टस्य च ज्ञातव्यस्य ज्ञातस्य च ग्राह्यस्य गृहीतस्य च वस्तुनो मिथ्यात्वमेवं विज्ञाय निर्वेदं वैराग्यं सर्वत्रालंबुद्धिलक्षणं गंतासि प्राप्स्यसि व्यवहार्यस्य मिथ्यात्वाद्व्यवहारस्य मिथ्यार्थगोचरत्वात् निष्फलेनानेन मम किमिति सर्वस्मात् व्यवहार्यात् व्यवहाराच्च उपरतो भविष्यसीत्यर्थ इत्यन्ये ॥ ५२ ॥

अन्तःकरणशुद्ध्यैवं जातनिर्वेदस्य कदा ज्ञानप्राप्तिरित्यपेक्षायामाह—

**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

श्रुतीति । ते तव बुद्धिः श्रुतिभिर्नानाविधफलश्रवणैरविचारिततात्पर्यैः विप्रतिपन्ना अनेकविधसंशयविपर्ययवत्वेन विक्षिप्ता प्राक् यदा यस्मिन्काले शुद्धिजविवेकजनितेन दोषदर्शनेन तं विक्षेपं त्यक्त्वा समाधौ परमात्मनि निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता अचला सुषुप्तिमूर्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता सती स्थास्यति समाहिता भविष्यतीत्यर्थः । अथवा निश्चला संभावना-विपरीतभावना-रहिता अचला दीर्घकालादरनैरन्तर्य्यसत्कारसेवनैर्विजातीयप्रत्ययादूषिता निवातदीपवत् आत्मनि स्थास्यतीत्यर्थः । तदा तस्मिन् काले योगं जीवपरमात्मैक्यलक्षणं तत्त्वमस्यादिवाक्यजन्यं अखण्डसाक्षात्कारं सर्वयोगफलमवाप्स्यसि तदा पुनः साध्यान्तराभावात्कृतकृत्यः स्थितप्रज्ञो भविष्यसीत्याशयः ।

अन्ये तु एवं मुमुक्षोर्ज्ञानयोगसिद्धेरसाधारणकारणं बाह्योपरमणं निरूप्य अथ ज्ञानयोगसिद्धिप्रकारमाह श्रुतीति । ऋगादिभिः श्रुतिभिः कुत्रचित्कर्मविशेषास्तत्फलविशेषास्तन्महत्त्वविशेषाः प्रतिपाद्यंते कुत्रचिदुपास्तिविशेषास्तत्फलविशेषास्तन्महत्त्वविशेषाः प्रतिपाद्यंते कुत्रचिद्ब्रह्म सगुणं तन्माहात्म्यं तत्फलस्यौत्कर्ष्यं च प्रतिपाद्यते कुत्रचिन्निर्गुणं ब्रह्म तद्ज्ञानं तन्माहात्म्यं तत्फलप्राशस्त्यं च प्रतिपाद्यते एतत्सर्वं श्रुतवतो विप्रतिपत्तिः किं सर्वेषां प्राधान्यं वा उत सगुणस्य वा उत निर्गुणस्य वोतोभयेषां वेत्येवं श्रुतिवाक्यैर्विप्रतिपन्ना संशयाविष्टा बहुविक्षेपवती ते बुद्धिः प्रज्ञाशास्त्रं सर्वमवलोड्य श्रुतिस्मृतियुक्तिबलेन गुरूपदेशेन सर्वे वेदा यत्पदमामनंतीति न्यायेन सर्वस्यापि शास्त्रस्य महत्तात्पर्यं निर्विशेष एव ब्रह्मणि पर्यवसितमिति परिज्ञाय विप्रतिपत्तीः सर्वाः परित्यज्य निश्चला निर्विशेषा भूत्वा समाधौ समाधीयते चित्तमस्मिन्निति समाधिः परं ब्रह्म तस्मिन् तदाकारे-

णैवाचला चलनहेतूनां बाह्यवासनानां नाशादविक्रिया निश्चला सती यदा स्थास्यति तदा योगं प्रज्ञास्थैर्यलक्षणमवाप्स्यासि । यद्वा सत्यं ज्ञानमनंतं ब्रह्म सर्वं ब्रह्मैतद्ब्रह्मैतदात्म्यमिदं सर्वं सद्धीदं सर्वं सचिद्धीदं सर्वं तत्त्वमसि अयमात्मा ब्रह्म तदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यं ब्रह्मैवेदं सर्वं इत्यादिश्रुतिभिः सर्वस्यं ब्रह्ममात्रत्वप्रतिपत्तिजनकाभिर्विशेषप्रतिपत्तिमती या सा श्रुतिविप्रतिपन्ना सर्वं ब्रह्मैवेति श्रुतिभिः संभावितविशिष्टज्ञानवतीत्यर्थः । तत एव निश्चला विक्षेपनिर्मुक्ता न हि परमाप्तवाक्यश्रवणेन नाप्यधिष्ठानसंदर्शनेन वा सद्बुद्धेर्विप्रतिपत्तिर्विक्षेपो वा सम्भवति अत एवं सम्यक्श्रवणेन मननेन च संपन्ना ते बुद्धिः समाधावसंप्रज्ञाताख्ये अचला निवातस्थदीपवन्निश्चला निष्कंपा भूत्वा यदा यस्मिन् काले चित्तपरिपाकावस्थायां स्थास्यति स्थिता भविष्यति तदा त्वं योगं ज्ञानयोगमप्रतिबद्धं प्राप्स्यासि योगारूढो भविष्यसीत्यर्थ इत्याहुः ।

अथैतदेव परमेश्वरप्राप्तिनिमित्तमित्याह श्रुतीति । श्रुतिः रोचनार्था फलश्रुतिस्तत्र विप्रतिपन्ना त्यक्तादरा एवंविधा ते बुद्धिः समाधौ सम्यगाधीयते चित्तं यस्मिन्निति समाधिः परमेश्वरस्वरूपं तस्मिन्निश्चला कृतनिश्चया अतएवाचला अविक्षेपा सती यदा स्थास्यति स्थिता भवति तदा योगं तत्सान्निध्यं अवाप्स्यसीत्यर्थ इत्येके ॥ ५३ ॥

एवं श्रवणमननाभ्यां विज्ञातात्मतत्वज्ञस्य विदुषः समाधिना प्रज्ञास्थैर्यसिद्धिं श्रुत्वा स्थितप्रज्ञस्य लक्षणं विज्ञातुकामोऽर्जुनःपृच्छति—

## अर्जुनउवाच ।

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ५४ ॥**

स्थितप्रज्ञस्येति । स्थिता ब्रह्माकारेण निश्चला बाह्यानवगाहिनी प्रज्ञा बुद्धिर्यस्य स स्थितप्रज्ञ आरूढस्तस्य भाषा भाषणं का कदा सिध्यति समाधिस्थस्य नित्यं निरंतरं नियमेन समाधिं कुर्वाणस्य, समाधिनिष्ठनिरतो विद्वान् पंडितैरयं स्थितप्रज्ञ इति कदा भाष्यत इत्यर्थः । स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत किं वदति किमासीत कथं तिष्ठति किं व्रजेत कथं चरतीत्यर्थः ।

अन्ये तु भाष्यते प्रोक्ष्यते अनयेति भाषा स्थितप्रज्ञः पुमान् कैर्लक्षणैरुच्यते इत्यर्थः । तथा समाधिस्थस्य च किं लक्षणं स्थितप्रज्ञः समाधिस्थो

वा कैर्लक्षणैर्बोद्धव्यः। ननु परबुद्धेरप्रत्यक्षत्वात्कथं दर्शनमात्रेण तत्स्वरूपं ज्ञायत इति चेन्न अतिबुद्धिमता ह्याकारेणैव मनोगतं ज्ञायते ।

उदीरितोर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहंति नोदिताः ॥
अनुक्तमप्यूहति पंडितो जनः
परेंगितज्ञानफला हि बुद्धयः ॥ इत्युक्तेः ।

अथ व्यवहारेण वा तल्लक्षणं पृच्छति स्थितधीः किं प्रभाषेत कथं वदति किमासीत कथमासीनो भवति कथं वा व्रजेत गच्छतीति प्रश्नार्थ इत्याहुः ।

परे तु वदंति एवं स्थितप्रज्ञत्वं श्रुत्वा तल्लक्षणं ज्ञातुकामो यान्येव हि जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षसाधनानीति मन्वान उवाच स्थितप्रज्ञस्येति। हे केशव स्थिता निश्चलाऽहं ब्रह्मास्मीति प्रज्ञा यस्य स स्थितप्रज्ञः स एव समाधिस्थः न तु आत्मज्ञानशून्यस्य मुख्यसमाधिरस्तीति भावः। तस्य का भाषा भाष्यतेऽनयेति भाषा लक्षणं केन लक्षणेनान्यैः स्थितप्रज्ञ उच्यते इत्यर्थः । तथा स्वयं स्थितधीः किं प्रभाषेत स्तुतिनिन्दादावभिनन्दद्वेषादिलक्षणं कथं प्रभाषते तथा किमासीत कथं बहिरिंद्रियनिग्रहं करोति तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान् प्राप्नोति तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः । यथा भवान् केशिहननादिकर्मणा केशव इत्युच्यते तथा स्थितप्रज्ञः केन लक्षणेनोच्यत इति सूचनाय केशवेति । सर्वान्तर्यामितया त्वमेवैतादृशं रहस्यं वक्तुं समर्थोसीति सूचनार्थमित्यपरे। आत्मनि स्थितस्य स्थितप्रज्ञस्य लक्षणं ब्रूहीति प्रश्नार्थः । तथा च भाष्यं स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छ्यते इति यो हि ब्रह्मचर्यावस्थायामेव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः यश्च कर्मयोगेन, तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञालक्षणं साधनं चोपदिश्यते सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि ज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानि यानि तान्येव साधकसाधनान्युपदिश्यन्ते यत्नसाध्यत्वादिति च भाष्ये स्पष्टं । स्थितप्रज्ञो ह्यवस्थाद्वयवान् समाधिस्थो व्युत्थितचित्तश्च तस्य समाधिस्थस्य का भाषा केन लक्षणेनान्यैर्व्यवह्रियते इत्यर्थः । स च व्युत्थितचितः स्वयं किं प्रभाषेत किमासीत व्रजेत किं तत्कर्तृकभा-

षणासनव्रजनानि कीदृशानीत्यर्थः । तदेवं चत्वारः प्रश्नाः समाधिस्थे एक व्युत्थिते त्रय इत्यन्ये ॥ ५४ ॥

एवं पृष्टः भगवान् वासुदेवो मुमुक्षोर्यत्नसाध्यानि जीवन्मुक्तस्य स्वभावभूतानि लक्षणानि इत्याध्यायपरिसमाप्तेः वदन् प्रथमप्रश्नस्यो त्तरमाह प्रजहातीति द्वाभ्यां—

**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**

**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

हे पार्थ मनोगतान् मनसि स्थितान् मनोधर्मानित्यर्थः यदि ह्यात्मधर्माः स्युः तदा न त्यक्तुं शक्येरन् वन्ह्यौष्णवत् स्वाभा विकत्वात् मनोधर्मत्वे त्वेतेषां तत्परित्यागेन परित्यागः कर्तुं शक्य एवेति भावः । सर्वान्निःशेषान् कामान् कामसंकल्पादीन् मनोवृत्तिविशेषान् यदा प्रकर्षेण तत्कारणवासनाबाधेन जहाति परित्यजति सर्वप्रवृत्तिशून्य एव यदा भवति स्थितप्रज्ञस्तदोच्यते स्थिता प्रतिष्ठिताऽऽत्मानात्मविवेकज प्रज्ञा यस्य स स्थितप्रज्ञो विद्वान् तदा प्रज्ञाप्रतिबन्धकसर्वकामाविरामाव स्थायां कथ्यते इत्यर्थः । ननु स्थितप्रज्ञस्य मुखप्रसादलिङ्गगम्यः सन्तोष विशेषः प्रतीयते स कथं सर्वकामत्यागे स्यादित्यत आह आत्मन्येव परमानन्दप्रत्यगात्मस्वरूप एव न तु अनात्मनि तुच्छे आत्मना स्वप्र काशचिद्रूपेण बाह्यार्थलाभनिरपेक्षेण तुष्टः परितृप्तः परमार्थदर्शनामृतरस लाभेनान्यस्मात्संजातालंप्रत्यय इत्यर्थः । आत्मानं जिज्ञासमानो वैराग्य द्वारा सर्वेषणात्यागात्मकं संन्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेवासक्त्या बाह्यविषयवैमुख्येन तत्फलभूतां परितुष्टिं तत्रैव प्रतिल भमानः स्थितप्रज्ञव्यपदेशभागिति भावः ।

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ इति श्रुतेः ।

अन्ये तु एतेषां चतुर्णां प्रश्नानां मध्ये समाधिस्थः स्थितप्रज्ञ एवं विधैर्लक्षणवाचिशब्दैर्भाष्यते इति प्रथमप्रश्नस्योत्तरमाह प्रजहातीति । श्रव णादिना सम्यग्विज्ञातात्मतत्त्वो मुमुक्षुः समाधौ वर्तमानो मनोगतान् मनसैवानुद्रष्टव्यं इति श्रवणात् आत्मस्वरूपप्रकाशनैककारणे मनस्येव स्थि तान्विषयान् कामयन्तीति कामाः विषयभोगेच्छाः तान्सर्वान्यदा यस्मिन्काले समाधिसिद्धिदशायां प्रजहाति निःशेषं परित्यजति । विषयाशानां शेषपरि

दुःखेष्विति । दुःखेषु दुःखप्रापकेषु ज्वरशूलशिरोवेदनादिष्वाध्यात्मिकेषु चोराहिव्याघ्रादिष्वाधिभौतिकेषु वर्षवातातपादिष्वाधिदैविकेषूपद्रवेषु प्राप्तेषु सत्सु स्वयमनुद्विग्नमनाः अनुद्विग्नं किं करोमि क्व गच्छामीति विक्षेपव्यथाविधुरं मनो यस्य सोऽनुद्विग्नमनाः समाधिनिष्ठया तैरक्षोभितचित्त इत्यर्थः । तथा सुखेषु सुखप्रापकेषु मिष्टान्नरसादिषु स्वयं प्राप्तेषु विगतस्पृहः विगता विशिष्य निर्गता स्पृहा रसनेन्द्रियलौल्यं यस्य स विगतस्पृहः स्वानन्दरसास्वादासक्त्या तेष्वादररहित इत्यर्थः । वीतरागभयक्रोधः उपकारिणि रागः प्रीतिः अत्यन्तापकारिणि क्रोधोऽप्रीतिरासन्ने मरणहेतौ भयं चैतत्त्रितयं स्वात्मनिष्ठया वीतं न प्राप्तं येन स वीतरागभयक्रोधः प्रीत्यप्रीतिभयहेतूनां प्रीत्यादीनां तत्कार्याणां चाविषयीभूत इत्यर्थः । दुःखादिविषादाद्यनुदये हेतुमाह मुनिरिति श्रुतं दृष्टं स्पृष्टं च सर्वं प्रत्यक्दृष्ट्या ब्रह्मैव मनुते पश्यति जानाति न तु तत्तदकारेणेतिमुनिर्ब्रह्मनिष्ठः एवंलक्षणो यः स स्थितधीः स्थितप्रज्ञः सिद्ध इत्युच्यत इत्यर्थ एतेन दुःखादिषु बाह्यानालंबिन एव सद्ब्रह्मनिष्ठा निष्ठावत एव सम्यग्ज्ञानं सम्यग्ज्ञानिन एव विदेहविमुक्तिः न त्वन्यस्येति सूचितं भवति । संसिद्धो ब्रह्मविद्यतिः आपत्सु संपत्सु न किंचिद्वदति किंतु तूष्णींमेव स्वात्मन तिष्ठतीति किं प्रभाषेतेत्यस्य प्रश्नस्योत्तरं दत्तमिति बोध्यम् ।

अन्ये तु लक्षणभेदानुवादद्वारा विविदिषोरेव कर्त्तव्यान्तरमुपदिशति दुःखेष्विति । दुःखेषु शोकमोहज्वरशिरोरोगादिनिमित्तेष्वाध्यात्मिकेषु व्याधसर्पादिप्रयुक्तेषु आधिभौतिकेषु अतिवातातिवृष्ट्यादिहेतुकेष्वाधिदैविकेषु च रजःपरिणामसन्तापात्मकचित्तवृत्तिविशेषेषु प्रारब्धपापकर्मप्रापितेषु दुःखेषु सत्सु नोद्विग्नं दुःखपरिहारक्षमतया व्याकुलं न भवति मनो यस्य सोऽनुद्विग्नमनाः अविवेकिनो हि दुःखप्राप्तौ सत्यामहो धिग्मां दुरात्मानमेतादृशदुःखभागिनं को मे दुःखमीदृशं निराकुर्यादित्यनुतापात्मको भ्रान्तिरूपः तामसश्चित्तवृत्तिविशेष उद्वेगाख्यो जायते यद्ययं पापानुष्ठानसमये स्यात्तदा तत्प्रवृत्तिप्रतिबन्धकत्वेन सफलः स्यात् भोगकाले तु भवन् कारणे सति कार्यस्योच्छेतुमशक्यत्त्वान्निःप्रयोजनो दुःखकारणे सत्यपि किमिति मम दुःखं जायत इति अविवेकजभ्रमरूपत्वान्न विवेकिनः स्थितप्रज्ञस्य संभवति दुःखमात्रं तु प्राप्यते प्रारब्धकर्मणा न तु तदुत्तरकालीनो भ्रमोऽपि तदुपादानाज्ञाननाशेन भ्रमासम्भवादिति भावः । तथा सुखेषु सत्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषेषु

प्रारब्धपुण्यकर्मप्रापितेषु विगतस्पृहः आगामितज्जातीयसुखेषु स्पृहारहितः, स्पृहा हि सुखानुभववृत्तिकाले तज्जातीयसुखस्य कारणं धर्ममननुष्ठाय वृथैव तदाकांक्षारूपा तामसी चित्तवृत्तिर्भ्रान्तिरेव । सा चाविवेकिन एव जायते न हि कारणाभावे कार्यं भवितुमर्हति अतो यथा सति कारणे कार्यं माभूदिति वृथाकांक्षारूप उद्वेगो विवेकिनो न संभवति तथैवासति कारणे कार्यं भूयादिति वृथाकांक्षारूपा तृष्णात्मिका स्पृहाऽपि नोपपद्यते प्रारब्धकर्मणः सुखमात्रप्रापकत्वात् । हर्षात्मिका वा चित्तवृत्तिः स्पृहा साऽपि भ्रान्तिरेव अहो धन्योऽहं यस्य ममेदृशं सुखमुपस्थितं को वा मया तुल्यस्त्रिभुवने केनैवोपायेन ममेदृशं सुखं न विच्छिद्येतेत्येवमात्मिकोत्फुल्लतारूपा तामसी चित्तवृत्तिः साऽपि विवेकिनो न संभवति भ्रान्तित्वात् । तथा वीतरागभयक्रोधः रागः शोभनाध्यासनिबन्धनो विषयेषु रंजनात्मकश्चित्तवृत्तिविशेषोऽत्यन्ताभिनिवेशरूपः रागविषयस्य नाशके प्राप्ते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयं तन्निवारणसामर्थ्यं मन्यमानस्य वाऽभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः ते सर्वे वीता विगता यस्माद्विपर्ययरूपत्वात्स तथैतादृशो मुनिर्मननशीलः संन्यासी स्थितप्रज्ञ उच्यते एवं चान्योऽपि मुमुक्षुर्दुःखे नोद्विजेत् सुखे न प्रहृष्येत् रागभयक्रोधरहितश्च भवेदित्याशयः ॥ ५६ ॥

श्रवणादिना विज्ञातात्मतत्त्वो विदेहकैवल्यार्थी सन् ज्ञानपरिपाकाय समाधौ प्रवृत्तः साधको य एवं वर्तते तस्यैव ज्ञाननिष्ठा सिध्यति न त्वन्यस्येत्याह—

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**

**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥**

य इति । यः समाधौ प्रवृत्तो यतिः सर्वत्र कन्थाकौपीनादिपरिग्रहे देहजीवनेऽप्यनभिस्नेहः अत्यन्तासक्तिरहितः सन् प्रारब्धवशादागतं यच्छुभमनुकूलं तन्नाभिनन्दति यदशुभं प्रतिकूलं तन्न द्वेष्टि हर्षविषादरहितो भूत्वा सर्वत्र समबुद्धिः सन्समाधावेव तिष्ठति तस्यैव प्रज्ञा प्रतिष्ठिता स्यात् ज्ञाननिष्ठा सिध्यति नेतरस्येत्यर्थः ।

अपरे तु द्वितीयप्रश्नस्योत्तरमाह य इति । यो मुनिः सर्वत्र सर्वेषु देहजीवनादिष्वप्यनभिस्नेहो यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोऽन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः स

च सर्वप्रकारेण न विद्यते यस्य सः भगवति तु सर्वथाऽभिस्नेहवान्भवेदेव अनात्मस्नेहाभावस्य तदर्थत्वादिति ध्येयं । यद्यत् शोभनत्वेनाशोभनत्वेन वा प्रसिद्धं तत्तत् शुभं सुखं हेतुं विषयं प्राप्य नाभिनन्दति हर्षपूर्वकं न प्रशंसति अशुभं दुःखहेतुं च प्राप्य न द्वेष्टि असूयापूर्वकं न निन्दति अज्ञस्य तु सुखहेतुवनितादिशुभविषये तद्गुणकथनादिप्रवर्त्तको भ्रान्तिरूपो धीवृत्तिविशेषो योऽभिनन्दस्स तामसएव तद्गुणकथनादेः परप्ररोचनार्थत्वाभावेन व्यर्थत्वात् एवमसूयोत्पादनेन दुःखहेतौ परकीयविद्याप्रकर्षादौ एनं प्रत्यशुभे विषये तन्निन्दादिप्रवर्त्तको भ्रान्तिरूपो धीवृत्तिविशेषोऽपि तामस एव तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात् तावभिनन्दद्वेषौ भ्रान्तिरूपौ तामसौ न शुद्धसत्वे स्थितप्रज्ञे सम्भवतस्तस्याभ्रान्तत्वात् तस्माद्विचालकाभावात् तस्यानभिस्नेहस्य हर्षविषादरहितस्य प्रज्ञा परमात्मतत्वविषया प्रतिष्ठिता फलपर्यवसायिनीत्यर्थः । अत्र च शुभाशुभप्राप्तौ हर्षद्वेषरहितं वाक्यं प्रभाषते इति द्वितीयप्रश्नस्योत्तरं स्पष्टतरं प्रतिभासते इति बोध्यं । एवमन्योऽपि मुमुक्षुः सर्वत्रानभिस्नेहो भवेत् शुभमशुभं च प्राप्य न संप्रशंसेत् न निन्देच्च तामित्याहुः ।

अन्ये तु एवंविधैर्लक्षणवाचिभिः शब्दैरन्यैः समाधिस्थः स्थितप्रज्ञो भाष्यते इति प्रथमप्रश्नस्योत्तरं दत्वा व्युत्थितः सन् किं प्रभाषेतेत्यस्य द्वितीयप्रश्नस्योत्तरं ददाति दुःखेष्वित्यादिद्वाभ्यां । एवं लक्षणः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिस्पृहत्वादिवचः प्रभाषत इत्यन्वयः । किं च य इति अत्र स्थितप्रज्ञो निन्दाप्रशंसादिरूपा वाचो न प्रभाषते इति व्यतिरेक उक्त इत्याहुः व्याख्यानं तु समानम् ॥ ५७ ॥

यद्यपि ज्ञाननिष्ठासिद्धेर्महद्वैराग्यं तीव्रमोक्षेच्छा तत्परत्वं चैतत् त्रितयमेव कारणं तथापीन्द्रियनिग्रहाभावे वैराग्यादिज्ञाननिष्ठा च न सिद्ध्यतीत्यतः साधकस्य यतेर्यत्नेनेन्द्रियजयः संपाद्यः प्रज्ञासिध्या इत्याह—

**यदा संहरते चाऽयं कूर्मोंगानीव सर्वशः ।**
**इंद्रियाणींद्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥**

यदेति । सोऽयं ज्ञाननिष्ठायां प्रवृत्तो यतिर्यथा कूर्मः परेभ्यो भयात् स्वांगानि सर्वशः सर्वाणि तत्तत्काले स्वस्मिन्नेवोपसंहरते तथेन्द्रियार्थेभ्यस्तत्तद्विषयेभ्यो रागादिदोषप्रसक्तिभयात् समाधिविघ्नभयाच्च इन्द्रियाणि वागादीनि चक्षुरादीनि च सर्वशः सर्वाणि यदा स्वयं स्वस्मिन्नु-

पसंहरते समाधिस्थैर्याय तत्तत्प्रवृत्तिं वारयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः ।

परे तु विचारादिना इन्द्रियनिग्रहार्थं स्थितप्रज्ञस्योपवेशनमिति तृतीयप्रश्नस्योत्तरं वदन् जितेन्द्रियत्वस्य लक्षणमाह यदेति । यथा कूर्मो भयात्सर्वतोऽगान्युपसंहरते तथाऽयं ज्ञाननिष्ठो यतिरिन्द्रियाणि सर्वेभ्य इन्द्रियार्थेभ्यः शब्दादिभ्यो यदोपसंहरते संकोचयति तदा तस्य प्रज्ञा प्रतिष्ठितेति स्पष्टं इन्द्रियाणां विषयेभ्यो वैमुख्यं प्रज्ञास्थैर्यार्थमवश्यं कर्तव्यमिति भाव इत्याहुः ।

अन्ये तु किमासीतेत्यस्योत्तरमाह षड्भिः श्लोकैः तत्र व्युत्थानेन विक्षिप्तानीन्द्रियाणि पुनरुपसंहृत्य स्थितप्रज्ञस्योपवेशनं समाध्यर्थमेवेति दर्शयितुमाह यदेति । अयं व्युत्थितः स्थितप्रज्ञः सर्वशः सर्वाणीन्द्रियाणि इन्द्रियार्थेभ्यः सर्वेभ्यः शब्दादिभ्यः च पुनरर्थे यदा पुनरुपसंहरति संकोचयति तत्र दृष्टांतः कूर्मोंगानीव तदा तस्य प्रज्ञा प्रतिष्ठितेति स्पष्टं।पूर्वश्लोकाभ्यां व्युत्थानदशायामपि सकलतामसवृत्त्यभाव उक्तः अधुना तु पुनः समाध्यवस्थायां सर्ववृत्त्यभाव इति विशेष इत्याहुः ॥ ५८ ॥

ननु निराहारस्य रोगिणो व्रतिनो वा विषयेभ्य इन्द्रियाणि विनिवर्त्तंतेऽत इदं लक्षणं मूढेष्वतिप्रसक्तमित्याशंक्य परिहरति—

**विषया विनिवर्त्तंते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

विषया इति । निराहारस्येन्द्रियैर्विषयग्रहणमकुर्वतो देहिनो देहाभिमानिनो मूढस्यापि रोगिणः काष्ठतपस्विनो वा विषयाः इन्द्रियाणि शब्दादयो वा विनिवर्त्तंते रसवर्जं रसं तृष्णां वर्जयित्वा तद्विषयो रागो न निवर्तते इत्यर्थः । अस्य स्थितप्रज्ञस्य तु परं परमानन्दलक्षणं परमात्मानं दृष्ट्वाऽहं ब्रह्मास्मीति साक्षात्कृत्य स्थितस्य रसोऽपि क्षुद्रसुखरागोऽपि निवर्त्तते अपिशब्दाद्विषयाश्च एवं च सरागविषयनिवृत्तिः स्थितप्रज्ञलक्षणमिति न मूढेऽतिप्रसंग इत्यर्थः । यस्मान्नासति परमात्मसाक्षात्कारे सरागविषयोच्छेदः तस्मात्सरागविषयोच्छेदिकायाः साक्षात्काररूपायाः प्रज्ञाया स्थैर्यं महता प्रयत्नेन संपादयेदित्याशयः ।

अन्ये तु नन्विन्द्रियाणां विषयेभ्यो वैमुख्यं ,प्रज्ञास्थैर्यकारणमित्येतत् अयुक्तं यत्किंचित्कार्यं उद्दिश्य सर्वेन्द्रियनिग्रहं कृत्वा तिष्ठति पुरुषे प्रज्ञा-

स्थैर्यादर्शनादिति चेन्न तस्य रागवत्त्वेन ब्रह्मज्ञानं तन्निष्ठा च न संभवतीति सूचयितुमाह विषया इति । आह्रियंते विषया यैस्ते आहारा इन्द्रियाणि नियमार्थं तेभ्यो निर्गतः यः स निराहार इन्द्रियनिग्रहवान् तार्थसस्तस्य देहिनः देहएवाहं इत्यहंबुद्धेरालंबनत्वेन अस्यास्तीति देही देहाद्यभिमानी तस्येन्द्रियाणां निगृहीतत्वाद्विषयाः शब्दादयो विनिवर्त्तते विशिष्य निवृत्ता भवन्ति रसवर्जं रागं विना 'रसो रागे गुणे द्रव्ये' इत्यभिधानाद्रसो रागो न गच्छति रागवत्त्वादेव चास्य बोधाभावः रागो लिंगमबोधस्येत्युक्तेः सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रज्ञानस्येदं मे भूयादिति रागस्य चैतद्द्वयस्य ; एकत्र स्थातुमशक्यत्त्वाच्च अतएव रुद्धेन्द्रियत्वेऽपि न प्रज्ञास्थैर्यप्रसक्तिरित्यर्थ; । तर्हि कथं तस्य रागनिवृत्तिः प्रज्ञासिद्धिश्चेत्याकांक्षायामाह रसोपीति । अस्य मौनेनेन्द्रियनिग्रहेण व्रतादिना च चित्तशुद्धौ सत्यां श्रवणादिजन्यज्ञानेन परं-परं ब्रह्माद्वितीयं दृष्ट्वा इदमेवाहमस्मीति स्वात्मत्वेन साक्षात्कृतवतो रसो निवर्त्तते विषयेषु भोग्यत्वभावनानिवृत्त्या रागनिवृत्तिः भोग्यत्वभावना तु ब्रह्मदृष्ट्या निवर्तते सर्वस्य स्वस्य च ब्रह्ममात्रत्वज्ञानाग्निना भोक्तृभोग्यादिभेदवने दग्धे सति तदाश्रितत्वात्तेन सहैव स्वयं च दग्धा भवतीत्यर्थः । अपिशब्दात् प्रज्ञास्थैर्यं च सिद्ध्यतीति सूचितमित्याहुः ॥ ५९ ॥

परमानंदलक्षणपरमात्मसाक्षात्कारं विना रसोच्छेदो नास्तीत्युक्तं तच्च इन्द्रियजयं विना दुर्लभं अतस्तत्साक्षात्काररूपं प्रज्ञास्थैर्यं वांछताऽऽदाविन्द्रियजयोऽवश्यं कर्त्तव्य इत्याशयेन तदकरणे दोषमाह—

**यततो ह्यपि कौंतेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरंति प्रसभं मनः ॥ ६० ॥**

यततो हीति । कौंतेय हि यस्मात् प्रमाथीनि प्रमथनशालीनि अतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि यततोऽपि पुनः पुनर्विषयदोषदर्शनात्मकं यत्नं कुर्वतोऽपि विपश्चितोऽत्यंतविवेकिनोऽपि पुरुषस्य मनः क्षणमात्रं निर्विकारं कृतमपि प्रसभं बलात्कारेण हरंति विकारं प्रापयन्तीत्यर्थः । यथा हि लोके प्रमाथिनो दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथा प्रमाथित्वादेवेन्द्रियाणि पश्यत्येव विपश्चिति स्वामिनि विवेके च रक्षके सति विवेकप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषया-

विष्टत्वेन हरंतीति प्रसिद्धिद्योतको वा हिशब्द इत्यन्ये । इन्द्रियापेक्षया-पुरुषस्य दौर्बल्यामिति सूचनाय कौन्तेयेति ।

अन्ये तु हि यस्मात्कारणाद्यततः समाधिना ज्ञानस्याप्रतिबद्धत्वासिद्धये प्रयत्नं कुर्वतः समाधौ तिष्ठतोऽपीत्यर्थः विपाश्चितः विषयजातं मायिकमसत्तुच्छं तत्र प्रवृत्तिर्बधायेति विजानतोऽपि पुरुषस्य मुमुक्षोर्मनः मनुते ब्रह्मानेनेति मनः सर्वत्र ब्रह्मदर्शनकारणं प्रमथितुं विषयदर्शनमात्रेण व्याकुलीकर्त्तुं शीलं येषां तानि प्रमाथीनीन्द्रियाणि रागादिग्रस्तानि प्रसभं बलात्कारेणास्य पश्यतो विवेकयुक्तमपि मनो हरन्ति गृहीत्वा विषयेषु पातयंति स्वरूपात् च्यावयन्तीति एतदिन्द्रियनिग्रहमकुर्वतः स्वरूपभ्रंशएव महा नर्थ इत्याहुः ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

तस्मात्तानीन्द्रियाणि ज्ञानकर्मसाधनभूतानि संयम्य वशीकृत्य युक्तः निगृहीतमनाः सन्नासीत निर्व्यापारस्तिष्ठेत् । ननु प्रमाथिनां कथं स्ववशीकरणं स्यादिति चेत्तत्राह मत्पर इति अहं सर्वात्मा वासुदेव एव पर उत्कृष्टः उपादेयो यस्य स मत्परः एकान्तमद्भक्त इत्यर्थः । यथा हि बलवन्तं राजानमाश्रित्य दस्यवो निगृहीताः संतः स्ववश्या भवान्ति तथैव भगवंतमाश्रित्य तत्प्रभावेणैव इष्टानीन्द्रियाणि निगृहीतानि सन्ति स्ववश्यान्येव भवन्तीति भावः न वासुदेवभक्तानामशुभं विद्यते क्वचिदित्युक्तेः । इन्द्रियवशीकारे फलमाह वशेहीति स्पष्टं । एवं तर्हि तत्र कः प्रतीकार इत्यत आह तानीति वशीकृतेन्द्रियः सन्नासीतेति किमासीतेति प्रश्नस्योत्तरमुक्तमित्यपरे ।

यस्मादात्मप्राप्त्यर्थं यत्नं कुर्वतोऽप्यात्मानात्मविवेकवतः पुरुषस्य इन्द्रियाणि अनादिविषयविक्षिप्ततया क्षोभकाणि सन्ति आत्माभिमुखमपि मनो कस्माद्विषयविक्षिप्तं कुर्वन्ति मनोनिग्रहं विना बाह्येन्द्रियनिग्रहो व्यर्थ एव तस्मात्तानि सर्वाणि संयम्य मनोनिग्रहेण स्वाधीनानि कृत्वा मत्परः मदाश्रितत्वेन युक्तः सन्नासीत अनेनापि प्रकारेणेन्द्रियाणि यस्य वश्यानि भवन्ति तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः । तदुक्तं अथर्वोपनिषदि यस्तु विज्ञानवान्भवति अयुक्तेन मनसा सह तस्येन्द्रियाणि अवश्यानि दुष्टाश्वा

यते कामः ममैतेभवन्त्वितितृष्णाविशेषः कामात्कुतश्चित्प्रतिहन्यमाना-त्तत्प्रतिघातकविषयः क्रोधोऽभिज्वलनात्मकोऽभिजायते क्रोधाद्भवति संमोहः कार्याकार्यविवेकाभावः संमोहात्स्मृतिविभ्रमः स्मृतेः शास्त्राचार्यो-पदिष्टार्थानुसंधानस्य विभ्रमो विभ्रंशः स्मृतिभ्रंशाद्बुद्धेरेकात्म्याकारम-नोवृत्तेर्नाशः विपरीतभावनोपचयदोषेण प्रतिबन्धादनुत्पत्तिः उत्पन्नायाश्च फलायोग्यत्वेन विलयः बुद्धिनाशात्तस्याश्च फलभूताया बुद्धेर्विलोपात्प्रण-श्यति सर्वपुरुषार्थायोग्यो भवति यस्मादेवं विषयध्यानान्मनसो निग्रहा-भावे निगृहीतबाह्येन्द्रियस्यापि परमानर्थप्राप्तिः तस्माद्विषयध्यानमेव सर्वानर्थबीजमतो महता प्रयत्नेन विषयध्यानान्मनो निगृह्णीयादित्याशय इत्यर्थः ॥ ६२ ॥ ६३ ॥

एवं विषयाचिन्तनस्यानर्थोपायत्वमुक्त्वाऽथ विषयध्यानरहितस्य स्वाधीनस्य चेतसः परमपुरुषार्थोपायत्वं वदन् किं व्रजेतेत्यस्योत्तरमाह रागे-त्याद्यष्टभिः—

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

तु शब्दः पूर्वस्माद्व्यतिरेकार्थः विधेयात्मा तु वशीकृतान्तःकरणस्तु आत्मवश्यैर्मनोधीनैः स्वाधीनैर्वा अतएव रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ तत्पूर्वकत्वादिन्द्रियाणां प्रवृत्तिः स्वाभाविकी लोकस्य, मुमुक्षुस्ता-भ्यां रागद्वेषाभ्यां वियुक्तैर्विरहितैरिन्द्रियैः श्रोत्रादिभिर्विषयान् शब्दादीन् अनिषिद्धान् चरन् उपलभ्यमानः प्रसादं प्रसन्नतां चित्तस्य स्वच्छतां परमा-त्मसाक्षात्कारयोग्यतामधिगच्छति रागद्वेषप्रयुक्तानि हीन्द्रियाणि दोषहेतुतां प्रतिपद्यन्ते मनसि स्ववशे तु न रागद्वेषौ तयोरभावे च न तदधीनेन्द्रिय-प्रवृत्तिः अनावश्यतया विषयोपलम्भस्तु न दोषमावहतीति न बुद्धिव्या-घात इति भावः । स्वाधीनैरिन्द्रियैर्विषयान्प्राप्नोतीति च किं व्रजेतेति प्रश्न-स्योत्तरमुक्तमिति बोध्यम् ।

अन्ये तु नन्विन्द्रियैर्विषयग्रहणाभावे कथं शरीरयात्रा सेत्स्यतीत्या-शंकायां तत्प्रकारं नित्यं समाधिमनुतिष्ठतः चित्तप्रसादं च प्रतिपादयति रागेति । विषयेष्विष्टत्वानिष्टत्वबुद्धिरेव रागद्वेषयोर्बीजं दोषदर्शनेन तस्यां परित्यक्तायामिन्द्रियाणि रागद्वेषवियुक्तानि भवन्ति तैः रागद्वेषवियुक्तैः

विषयेष्वसत्वतुच्छत्वं बन्धकत्वबुद्ध्या रागद्वेषाभ्यां वियोजितैरित्यर्थः तत एवात्मवश्यैरात्मनः स्वस्य वश्यैः सकोचव्याकोचयोर्वशवर्तिभिः प्रसन्नैरिन्द्रियैर्विषयान् अन्नरसादीननिषिद्धान् तत्रापि प्राणयात्रामात्रपर्याप्तान् चरन् युंजानो यतिर्विधेयात्मा विधेयः इन्द्रियशुद्ध्या समाधिना च निर्मुक्तरागादिदोषतया शुद्धत्वेन स्वाधीन आत्मा मनो यस्य स विधेयात्मा सन् प्रसादं चित्तस्य स्वाछयमत्यंतानिर्मलतां गच्छति आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरितिश्रवणादिंद्रियशुद्धया चित्तशुद्धिः सिध्यतीत्यर्थ इत्याहुः ।

अपरे तु अथैतत्कर्तुमसमर्थोऽपि तरतीति ब्रजेत किमित्यस्योत्तरमाह रागेति । रागः प्रीतिरासक्तिः द्वेषश्च ताभ्यां वियुक्तैरुदासीनैरिन्द्रियैः विषयान्भुंजानः । रागद्वेषवियुक्तत्वे हेतुमाह आत्मवश्यैरिति आत्मा वश्यो येषां तानि सर्वत्रात्मभावनायुक्तानि तैर्विधेयः परिनिष्ठित आत्मा मनो यस्य स तथाभूतः प्रसादं शांतिमधिगच्छतीत्यर्थः । तदुक्तं—

अग्निसंगाद्यथा लोहमग्नित्वमुपगच्छति ।
आत्मसंगात्तथा गच्छत्यात्मतामिन्द्रियादिकम् ॥

इति वदन्ति ॥ ६४ ॥

नित्यसमाधिनिष्ठया चेन्द्रियाणां मनसश्च शुद्धिलक्षणं प्रसादं संपादितवतो विदुषस्तात्सिद्धेः फलमाह—

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥६५॥**

प्रसादे इति । इन्द्रियशुद्धिसिद्धेः प्रसादे प्राप्ते सत्यस्य विदुषः सर्वदुःखानां अत्र दुःखशब्देन तद्धेतवो विक्षेपा लक्ष्यंते तेषां सर्वेषां विक्षेपाणां हानिर्निःशेषनिवृत्तिरुपजायते तत एव शीघ्रप्रसन्नचेतसो निर्मलात्मनस्तस्याशु शीघ्रं बुद्धिः सर्वत्रब्रह्मदर्शिनी प्रज्ञा पर्यवतिष्ठते निश्चला भवतीत्यर्थः । तदुक्तं—

विज्ञानामृतनिर्भराऽवनिरिव स्वानंदपूर्णोदधे-
रूर्मिः शाश्वतसुप्रसादसदनं भूतानुकंपाप्रसूः ।
निर्वाणाप्तपदा प्रदीपकलिका वैराग्यभाग्यास्पदं
दृश्यातीतपदावलंबरसिका स्वांतस्थितिस्तद्विदाम् ॥ इति ॥ ६५ ॥

यतो नित्यानित्यविवेकवैराग्याभ्यां तीव्रमुमुक्षया च सर्वं सन्यस्य मुमुक्षवो यतयः वेदांतश्रवणं कुर्वन्ति तेषां मुक्तिः सम्यक्ज्ञानेन विना न सिद्ध्यति ततो यततो ह्यपीत्यादिना रागद्वेषपरित्यागमिन्द्रियनिग्रहं समाध्यनुष्ठानं च प्रतिपाद्य ध्यायतो विषयान्पुंस इति ज्ञानिनोऽपि बहिर्मुखस्य ज्ञाननाशाद्यनर्थनिपातं च प्रतिपाद्येदानीं बहुधा श्रुतश्रावितवेदांतस्य पठनपाठनमात्रेण कृतार्थमात्मानं मन्यमानस्य मुमुक्षोरालस्येन दुर्मेधया च ध्यानादावप्रवृत्तस्य समाधिरवश्यं कर्त्तव्य इति सूचयितुं तदकर्त्तुरनर्थमाह—

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशांतस्य कुतः सुखम् ॥६६॥**

नास्तीति । यद्वा यदुक्तमिन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं तद्व्यतिरेकमुखेनोपपादयति नास्तीति । शतधा श्रुतवेदान्तोऽपि यस्तीव्रमुमुक्षया शांतो दांत उपरतस्तितिक्षुर्भूत्वाऽप्रतिबद्धज्ञानसिद्धये समाधिं न करोति तस्यायुक्तस्यासमाहित[illegible]तः पुरुषस्य बुद्धिः सर्वत्रब्रह्मदर्शनलक्षणाचित्तप्रसादैकलभ्या प्रत्यग्दृष्टिर्नास्ति बहुधा कृतेऽपि श्रवणे तदुत्पन्नं ज्ञानं पदवाक्यार्थगोचरमेव भवति न तु वस्तुगोचरं सूक्ष्मबुद्ध्या क्वचिज्जातमपि न तिष्ठति स्थिरमित्यर्थः । अयुक्तस्येति पुनरुक्तिः समाधेरवश्यकर्त्तव्यता द्योतनार्था कारणाभावे कार्याभाव इति न्यायेन अयुक्तस्य समाधिसमुत्पन्नब्रह्मापरोक्षज्ञानशून्यस्य भावना न च नास्ति देह इव इदमेवाहमस्मीति स्वात्मना साक्षात्कृतब्रह्मण्येवात्मत्वाभिनिवेशो भावना तत्तादात्म्यापत्त्या स्वस्य ब्रह्मण्येव व्यवस्थिताऽहंबुद्धिलक्षणा या सा चायुक्तस्य न संभवतीत्यर्थः । तदसंभवे तत्कार्यं न संभवतीत्याह न चाभावयत इति प्रबुद्धो यथा देहं तथा ब्रह्मैवाहं नेतरदित्यात्मानं ब्रह्मैवाभावयतोऽमन्यमानस्य ब्रह्मात्मना स्वयमतिष्ठतो यतेः शांतिरनात्मतादात्म्यतत्कार्यसम्बन्धादर्शनलक्षणा चोपशांतिर्न सिध्यति किं चाऽशांतस्य अनात्मानमेवात्मानं द्वैतं च पश्यतः सुखं नित्यनिरंतरं ब्राह्मं कुतः सर्वमिदमहं च ब्रह्मैवेति सर्वं स्वं च ब्रह्मैव पश्यत एव यतेर्ब्रह्मानंदरसानुभवः स्यात्तद्विपरीतदर्शिनः कुतः सिध्यतीत्यर्थः । यद्वा न चाभावयतः शांतिः श्रुतं दृष्टं स्पृष्टं मतं विज्ञातं स्वयं च सर्वं चिद्रूपं ब्रह्मैवेति सर्वस्य चिन्मात्रत्वमखंडया चिदात्मिकया वृत्त्या नित्यं निरंतरमभावयतोऽपश्यतो विदुषः शांतिर्विदेहमुक्तिश्चिदा-

मंदैकरसब्रह्मरूपेणावस्थानलक्षणा नास्ति एवमशांतस्य विदेहमुक्तिमप्राप्तस्य सुखं विदेहकैवल्यसुखं कुतः ब्रह्मभावमप्राप्तस्य ब्रह्मसुखं न सिध्यतीत्यर्थः । अयुक्तस्यावशीकृतेन्द्रियस्य बुद्धिर्नोत्पद्यते। च परं तया बुद्ध्या अयुक्तस्य भावना आत्मभावनाऽपि नास्ति तया अभावयतः ब्रह्मभावनावर्जितस्य शांतिः सकार्याविद्यानिवर्त्तिका ब्रह्मात्मैक्यसाक्षात्काररूपा नास्ति अशांतस्य ब्रह्मात्मैक्यसाक्षात्कारशून्यस्य सुखमात्मसुखं नास्तीत्यर्थ इति द्वितीयोत्थानकानुसारि व्याख्यानम् ।

अन्ये तु इदं श्लोकद्वयमित्थं योजयंति । तथाहि प्रसादे सति किं स्यात्सर्वदुःखहानिः स्यादित्याह प्रसाद इति । चित्तस्य स्वच्छरूपे प्रसादे सति सर्वदुःखानामाध्यात्मिकादीनामज्ञानप्रयुक्तानां हानिर्विनाशोऽस्य प्रसन्नचेतसो यतेरुपजायते तदेवोपपादयति हि यस्मात् प्रसन्नचेतसो यतेः बुद्धिर्ब्रह्मात्मैक्याकारा आशु शीघ्रमेव पर्यवतिष्ठते परि समन्तादवतिष्ठते आत्मस्वरूप एव स्थिरा भवति विपरीतभावनादिप्रतिबन्धाभावात् ततश्च प्रसादे सति बुद्धिपर्यवस्थानं ततस्तद्विरोध्यज्ञाननिवृत्तिः ततस्तत्कार्यसर्वदुःखहानिरिति क्रमो बोध्यः प्रसादे तु दुःखहानिकरत्वकथनं तत्त्रयत्नाधिक्यायेति न विरोधः तथा च प्रसन्नचेतसोऽवस्थितबुद्धेर्यतः कृतकृत्यता तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु विषयेषु यतिर्विषयपारवश्यशून्यः सन्समाचरेदिति श्लोकद्वयतात्पर्यार्थो बोध्यः ॥ ६५ ॥

ननु किं चित्तप्रसादस्यैव साक्षाद्बुद्धिप्रतिष्ठाहेतुत्वं उत परंपरयेत्याकांक्षायां निदिध्यासनद्वारेणेति वक्तुं चित्तप्रसादं विना तन्न जायत इति पूर्वोक्तेस्तात्पर्यं व्यतिरेकमुखेन प्रसन्नतां स्तुवन्स्फुटयति नास्तीति। अयुक्तस्यासमाहितचेतसोऽप्रसन्नचित्तस्य बुद्धिर्ब्रह्मात्मैक्याकारा श्रवणमननाख्यवेदान्तविचारजन्या नास्ति नोत्पद्यते । न हि विक्षिप्तचित्तस्यात्मस्वरूपविषयबुद्धिरुदेतुमर्हतीत्यत्र हेतुमाह नचेति आत्मज्ञाने शब्दादापाततो जाते पुनस्तत्साक्षात्कारार्थं कर्त्तव्या या भावना निदिध्यासनात्मिका विजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाहरूपा सा अयुक्तस्य विक्षिप्तचित्तस्य नोत्पद्यते इत्यर्थः । न चाभावयतः आत्मानमभावयतश्च शांतिः सकार्याविद्यानिवर्त्तिका वेदान्तवाक्यजन्या ब्रह्मात्मैक्यसाक्षात्काररूपा नोत्पद्यते अशांतस्य ब्रह्मात्मैक्यसाक्षात्कारशून्यस्य कुतः सुखं मोक्षानंदो नास्तीत्यर्थः । अथ वा अभावयतः श्रवणाद्यावृत्तिरूपां स्मृतिमकुर्वतो परोक्षज्ञानाभावे शांतिरनर्थनिवृत्तिर्न सिद्ध्यति प्रशांतस्यानिवृत्तानर्थस्य ब्रह्मानन्द-

सागराद्विभक्तस्य संसारसमुद्रे निमग्नस्य कुतः सुखं परमानन्दाविर्भावो न संभवतीत्यर्थः ॥ ६६ ॥

विक्षिप्तचेतसो भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीत्यत्र हेत्वन्तरमाह—

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

इन्द्रियाणामिति । इन्द्रियाणां चरतां स्वस्वविषयेषु प्रवर्त्तमानानां यन्मनोऽनुविधीयते अनुवर्त्तते तदिन्द्रियविषयाणां मिथो विभज्य ग्रहणे प्रवृत्तं मनोऽस्य यतेः प्रज्ञामात्मानात्मविवेकजां हरति नाशयति कथं अम्भस्युदके जिगमिषतां नावं मार्गादुद्धृत्योन्मार्गे वायुर्यथा प्रवर्त्तयति एवं आत्मानात्मविवेकविषयां प्रज्ञां हृत्वा मनो विषयविषयकां करोति हि यस्मादयुक्तस्य बुद्धिर्नोत्पद्यते इति योजनेत्यर्थः । चरतां स्वस्वविषयेषु प्रवर्त्तमानानामवशीकृतानामिन्द्रियाणां मध्ये यदेकमपीन्द्रियमनु लक्षीकृत्य मनो विधीयते प्रेर्यते प्रवर्तते तदिन्द्रियमेकमपि मनसाऽनुसृतमस्य साधकस्य मनसो वा प्रज्ञामात्मविषयां शास्त्रीयां हरत्यपनयति मनसस्तद्विषयाविष्टत्वात् यदेकमपीन्द्रियं प्रज्ञां हरति तदा सर्वाणि हरन्तीति किमु वक्तव्यमित्यर्थः । दृष्टान्तस्तु स्पष्टः यथाम्भस्येव वायोर्नौकाहरणसामर्थ्यं न भुवि तथा मनश्चांचल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियस्य न तु मनःस्थैर्ये इति सूचयितुमंभसीत्युक्तं इत्यन्ये ॥६७॥

यततोऽह्यपीत्यादिश्लोकाभ्यामुक्तस्यैवार्थस्य ध्यायतो विषयानित्याद्युपपत्तिवचनेनोपपाद्योपसंहरति—

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥**

तस्मादिति । यस्मादेवमसमाहितेन मनसाऽनुविधीयमानानीन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मात् हे महाबाहो यस्य यतेः सर्वशः सर्वाणि समनस्कानीन्द्रियाणीन्द्रियार्थेभ्यो निगृहीतानि तस्य सिद्धस्य साधकस्य च प्रज्ञा प्रतिष्ठितेत्यर्थः । यथा महाबाहुभ्यां शत्रून्विजित्य राज्यप्रतिष्ठा शूरैः संपाद्यते तथा विवेकिभिरिन्द्रियशत्रूञ्जित्वा प्रज्ञा प्रतिष्ठा सम्पाद्येति

सूचनाय सम्बोधनं सर्व शत्रुनिवारणक्षमत्वादिन्द्रियशत्रुनिवारणेपि त्वं क्षमोऽसीति सूचनार्यत्यन्ये ॥ ६८ ॥

अन्ये तु इदं श्लोकद्वयमित्थं योजयन्ति—ननु यथा मेधाविनाऽधीतमीमांसादिशास्त्रजन्यज्ञानं मेधया प्रतिष्ठितमेव भवति न तु नश्यति तथा सूक्ष्मबुद्धेः श्रवणादिजन्यज्ञानं समाध्यभावेऽपि न नंक्ष्यतीति चेन्न इष्टकाचयनादिज्ञानमतिस्थूलमपि मुहुरवलोडनं वरणं प्रचारणं वा विना न स्फुटं प्रतिभाति किमु वक्तव्यं अतिसूक्ष्मं अतीन्द्रियं अविषयमप्रचुरं असंस्कृतं अनारूढमविनष्टप्रतिपक्षमात्मज्ञानं समाध्यभावे न प्रतिभातीति ततस्तत्सिद्ध्यै मुमुक्षोः समाधिः कर्त्तव्य इति सूचयितुं बहिः प्रवृत्तस्य ज्ञाननाशनप्रकारं सदृष्टान्तमाह इन्द्रियाणां हीति । हि यस्मात्कारणादिन्द्रियाणां श्रोत्रादीनां वागादीनां च स्वस्वविषयेषु चरतां सतां लोकशास्त्रविषयकर्मवासनाभिराविष्टं यन्मनोऽनुविधीयते विदुषा तत्तदिच्छावता स्वेच्छानुरूपं प्रवर्त्यते तदेव मनः अम्भसि नदीजले वायुर्नावमिव अस्य स्ववासनानुरूपं प्रवर्त्तमानस्य विदुषः प्रज्ञां आत्मानात्मविवेकबुद्धिं हरति । अत्रायमभिप्रायः नद्याः परपारं गच्छतीं नौकां प्रतिकूलो वायुर्गृहीत्वा महावर्त्ते तां पातयति जलेनापूर्य वा मज्जयति महापाषाणेनाभिहत्य भञ्जयति पुनरपारं वा विषमस्थानं वा गमयति सर्वथाऽनर्थवतीमेव करोति यथा तथा विदुषोऽपि प्रज्ञां विवेकबुद्धिं अनाद्यविद्यावासनाभिरुच्चावचाभिराकृष्टं मनो विषये वा कर्मणि वा योगे वाप्युपास्तौ वा व्यवहारे वाऽन्यत्र वा पातयित्वा वायुर्नावमिव विध्वंसयतीत्यर्थः । यस्माद्रागद्वेषलोभमोहादिदोषैरेवेन्द्रियप्रवृत्तिः तया समाध्यभावः तेन ज्ञानाभावः तेनैव ब्रह्मणि स्वात्मन्यहंभावाभावः तस्मान्मुक्त्यभावः तत्सुखाभावश्चैवमनर्थव्राताय अतो रागद्वेषादिभिरिन्द्रियनिग्रहं अकृत्वा बहिः प्रवृत्तस्य ज्ञानिनोऽपि तस्मादिन्द्रियग्रामं रागादिभिर्वियोज्य सम्यङ्निगृह्य च मुमुक्षोर्यतेर्विदेहमुक्त्यै समाधिरवश्यं कर्त्तव्य इति सूचयितुमाह तस्मादिति । हे महाबाहो रागादिशत्रुसंहारसमर्थस्य मोक्षैकार्थिनो यतेरिन्द्रियार्थेभ्यः शब्दादिविषयेभ्यः सर्वशः सर्वाणीन्द्रियाणि निगृहीतानि भवन्ति तीव्रवैराग्येण तस्यैव धन्यतमस्य प्रज्ञा प्रतिष्ठिता समाधिना सर्वमिदमहं च ब्रह्मैवेति ब्रह्मापरोक्षविज्ञानमप्रतिबद्धं भवति तदनंतरं विदेहमुक्तिस्तत्सुखं च तिष्ठतीत्यर्थ इति ॥ ६७ ॥ ६८ ॥

अनेकशतसहस्रजन्मकृतसुकृतपरिपाकेन श्रुत्याचार्येश्वरप्रसादपौष्कल्यं प्राप्तवतो यस्य समाधिना सर्वमिदमहं च ब्रह्मैवेति ब्रह्मापरोक्ष-

विज्ञानमप्रतिबद्धं भवति तस्य महात्मनः स्थितप्रज्ञस्य प्रबुद्धस्य स्वप्नव्यवहारवत् अहं ममेदामित्यादिव्यवहारो लौकिको वैदिकश्च निःशेषो विनिवर्त्तते निद्रावदविद्याया निःशेषविनष्टत्वात् तत्कार्यस्यापि निःशेषनिवृत्तिः अतः प्रबुद्धो जागर इव जीवन्मुक्तो ब्रह्मवित् ब्रह्मण्येवारमति नान्यत्रेति प्रतिपादयति—

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

येति। प्राचीनकर्मफलानुभुक्त्यै पुनः पुनर्भवन्ति जायन्त इति भूतानि प्राणिनस्तेषां सर्वेषां भूतानां स्थितप्रज्ञव्यतिरिक्तानां या निशा तेजः परस्यां देवतायामित्यादिश्रुत्युक्ता या परदेवता सर्वत्र प्रमाणागोचरा निर्विशेषा सत्तामात्रा स्वयं निशेव भवति यथा निशा नितरां शेरते प्राणिनो यत्र सा निशा तामिस्रा रात्रिः सर्वव्यापकत्वेन दृष्टेः प्रवेष्टुमशक्यत्वेन सर्वपदार्थानां स्वमात्रत्वापादनेन च भूतानां मनुष्यादीनां व्यवहर्तुमशक्या भवति तथा सेयं परदेवतापि सर्वव्यापकत्वादिधर्मैः सर्वभूतानां व्यवहर्तुमशक्यत्वान्निशेत्युच्यते शं सुखं नितरां सुखस्वरूपत्वान्निशा तस्यां निशायां अत्यन्तसुखरूपायां परस्यां देवतायां परे ब्रह्मण्यानंदघने स्वयमविद्यानिद्राप्रबुद्धः संयमी बहिःप्रवृत्तिनिवृत्तसर्वेन्द्रियो ब्रह्मविदेक एव जागर्ति तत्रैवारमति क्रीडत्यानंदति तदन्ये तु शेरते श्रुतवेदान्ता अपि निद्रिता इव तत्स्वरूपं किमपि न जानंतीत्यर्थः। यस्यामविद्यायां द्रष्टृदर्शनदृश्यादिभेदवत्यां भूतानि जाग्रति अहं ममेदमिष्टं अनिष्टमिदं कार्यमिदमकार्यं इति व्यवहरति सा त्वविद्या द्वैतभूमिः पश्यतः द्रष्टारं दर्शनं दृश्यं च सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव पश्यतो मुनेर्ब्रह्मनिष्ठस्य निशा भवति। यथा निशायां प्राणिनो न व्यवहरन्ति तथाऽयमविद्यानिशायां अहं ममेदमिति न व्यवहरति अहं ममेदमित्यादिप्रत्ययहेतूनां अनाद्यविद्यावासनानां निःशेषविनष्टत्वेन तद्बुद्धेर्ब्रह्ममय्याः प्रवेष्टुमशक्यत्वात् अत्राहं ममेदमिति प्राकृतमेव व्यवहारं न करोति कुत एवंलक्षणस्यास्य विदुषो वैदिकव्यवहारः सिद्ध्यतीत्यर्थः। यद्वा अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां इत्यादिश्रुतिप्रसिद्धा या ब्रह्मविद्या सर्वभूतानां सर्वेषां प्राणिनां निशा स्वयं चिदाकृत्या सूर्यप्रभावत्प्रकाशरूपाऽपि सुदृष्टिशून्यानां निशेव भवतीति निशेत्युच्यते। यथा प्रसिद्धनिशा स्वकीयतमःशक्त्या नामरूपभेदमपास्य सर्वं वस्तुजातं

तमोमात्रं कृत्वा स्वयमेव सर्वत्र विजृंभते तथैवेषा ब्रह्मविद्या स्वकीयाचिद्रूपशक्त्या नामरूपभेदमपोह्य सर्वं दृश्यजातं चिन्मात्रं कृत्वा स्वयमेकैव सर्वत्र विजृंभते यत्र निशायामिव अज्ञास्तज्ज्ञाश्च सर्वे व्यवस्थारूपान्स्वप्नान्पश्यन्तः शेरते तस्यां ब्रह्मविद्यायां संयमी बहिःप्रवृत्तिशून्यः स्थितप्रज्ञो ब्रह्मविदेक एव जागर्त्ति आत्मरतिरात्मक्रीड आत्ममिथुन आत्मज्योतिरात्मानन्दो भूत्वा सर्वदास्ते यस्यामविद्यायां सर्वाणि भूतानि जाग्रति त्वं अहं इदं अद इति व्यवहरन्ति सात्वविद्याद्वैतावस्था पश्यतो द्रष्टा दर्शनं दृश्यं च सर्वं मिथ्यैवेति पश्यतो ब्रह्मविदो निशा भवति यथा प्राणिनां ब्रह्मविद्या निशा तथा ब्रह्मविदोऽप्यविद्या निशा ब्रह्मविद्यया ब्रह्मैवाहमिति स्वमानन्दैकरसं परिपूर्णं विषयीकर्तुं न शक्नोतीत्यर्थः। तत एवास्य लौकिके वैदिके च कर्मण्यनधिकारः योग्यत्वाभावाद् यस्य देहतदाश्रितवर्णजात्यादावभिमानः फलार्थित्वं ममेदं कर्त्तव्यं इदं न कर्त्तव्यमिति क्रियासु गुणदोषदर्शनं च विद्यते तस्यैव कर्मणि योग्यता दृश्यते न तूक्तलक्षणशून्यस्य। न हि निरंतरसमाधिनिष्ठया निरूढविज्ञानबलेनाविद्यां तत्कार्यं चाध्यासादिकं निर्मूल्य ब्रह्मतादात्म्यमापाद्य ब्रह्मैवाहमिति सर्वदा ब्रह्मण्येव तदात्मना तिष्ठतो विदुषः पुनः शरीरतादात्म्यापत्तिः तत्राहं ममेत्याभिमानश्च संभवति तदसंभवे तत्रारोपितवर्णजात्याद्यभिमानोऽपि न सिध्यति तदसिद्धौ सर्वमिथ्यात्वदर्शिनः फलाभिसन्ध्यसिद्धेः क्रियासु गुणदोषदर्शनासिद्धेश्च। सत्येवं न विदुषः कर्मण्यधिकार उपयुज्यते सर्वमिथ्यात्वदर्शनस्य प्रवृत्तेश्च परस्परविरुद्धत्वादेकाधिकरणत्वानुपपत्तेः वस्तुनः सत्यत्वनिश्चयधीपूर्विका प्रवृत्तिः भ्रमकीलपतत्वनिश्चयधीमूलकं मिथ्यात्वज्ञानं ततस्तयोः परस्परविरुद्धत्वं तेनैकाधिकरणत्वानुपपत्तिश्चोपपद्यते। ननु कर्त्ता करणं कार्यं च सर्वं मिथ्यैवेति विदुषा कर्म क्रियतां मिथ्यात्वेन कृतं कर्म बन्धाय न भवतीति चेन्न मिथ्यात्वज्ञानस्य प्रवृत्तिविरोधान्नेदं जलं किन्तु मरुरेवेति जलमिथ्यात्ववेदिनस्तृषितस्यापि प्रवृत्त्यदर्शनात् किमुतारोपितं दृश्यं सर्वं मिथ्यैवेति तदधिष्ठानं ब्रह्मैव सर्वत्र पश्यतः प्रवृत्तिरनुपपन्नेत्यतोऽविद्यावत एवं कर्मणि अधिकारो न तु विद्यावतो विद्याया अविद्यातत्कार्यविरोधित्वात् विद्यावति ब्रह्मविदि अविद्यातत्कार्यं तेजसीव तमः सकार्यं स्थातुं न शक्नोति यतएवं ततो विधिः विधानं विधेयं विधाता च सर्व-

माविद्वयकं मिथ्यैवेति विजानतो ब्रह्मविदः सदात्मना तूष्णीमवस्थितिं विना न किंचित्कर्त्तव्यमस्तीति सिद्धम्।

अन्ये तु अथ विषयपरावृत्तेन्द्रियस्य स्थितिमाह येति । सर्वाणि भूतान्यात्मानं न जानन्ति अत आत्मविषयकाज्ञानरूपा तेषां भूतानां रात्रिः यथोलूकानां दिनमेव रात्रिः एवं तस्यां रात्रौ संयमी परावृत्तेन्द्रियो यो जाग्रति उद्बुद्धो भवति तथा तस्यां जाग्रद्दशायां भूतानि जाग्रति स्वव्यवहारं कुर्वंति सा पश्यत आत्मदृष्टेर्मुनेर्मननशीलस्य निशा भवति तत्रत्यव्यवहाराभावात्। तदुक्तं—

आत्मा न हि स्फुरति सर्वशरीरभाजां
तेषां निशा भवति सा खलु तत्र योगी।
जागर्त्ति जाग्रति च ते व्यवहारजाते
तत्र स्फुरत्युरुधियः क्षणदाऽस्य सा ते॥

इति । एवं सकलेन्द्रियपरावृत्तित्वमेव स्थितप्रज्ञत्वमित्यर्थः । यद्वा सर्वभूतानां सर्वदेहिनां या सकलेन्द्रियोपरमरूपा निशा सुषुप्तिः तत्रात्माकारांतःकरणवृत्तौ सत्यामपि आत्मानं न विन्दन्ति अथ तस्यां सर्वदेहिनां तुर्यावस्थापरिणतायां संयमी आत्मनिष्ठः पुमान् जागर्त्ति आत्मसुखानुभववान्भवति दैवं ह्येतान्मिथुनं परमो ह्यर्षं आनंदस्तस्मादेवं वित्स्वप्यालोक्ये हैत एव तदेवते मिथुनेन प्रियेण धाम्ना समर्द्धयतीति श्रुतेः।

निद्रादौ जागरस्यांते यो भाव उपपद्यते।
तं भावं भावयन् साक्षादद्वयानन्दमश्नुते॥

इति वासिष्ठोक्तेश्च । अथ यस्यां जाग्रदवस्थायां भूतानि जाग्रति स्वव्यापारं कुर्वन्ति सा व्यवहारमपश्यत आत्मदृष्टेः पुरुषस्य निशा दृश्यप्रपंचास्फुरणादित्याहुः।

एवं स्थितप्रज्ञलक्षणवर्णनेन मुमुक्षुभिरतिप्रयत्नेन स्थितप्रज्ञत्वाय समनस्केन्द्रियनिग्रहः कर्त्तव्य इत्युक्तं उत्पन्नाविवेकाविज्ञानस्य स्थितप्रज्ञस्य तु सतः सिद्ध एव समनस्केन्द्रियसंयमः अविद्याविरोधिन्या विद्यया समूलस्य सर्वव्यवहारस्य निवृत्तेरित्येतद्वक्तुकामो तस्यैव कर्मण्यधिकारो नात्मविदः स्थितज्ञस्येति द्योतयन्नाह येति । सर्वभूतानामुलूकस्थानीयानां या वेदान्तवाक्यविचारजन्याऽहंब्रह्मास्मीतिप्रज्ञा निशेव निशा तान्प्रत्यप्रकाशरूपत्वात् तस्यां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां संयमी

स्वतःसिद्धेन्द्रियसंयमवान् स्थितप्रज्ञो जागर्त्यज्ञाननिद्रातः प्रबुद्धः सन् सावधानो वर्तते यस्यां तु द्वैतदर्शनलक्षणायामज्ञाननिद्रायां प्रसुप्तान्येव जाग्रति स्वप्नवद्व्यवहरन्ति सा निशेव निशा न प्रकाशते आत्मतत्त्वमपरोक्षतया पश्यतो मुनेः स्थितप्रज्ञस्येत्यर्थः । यावद्धि न बुध्यते तावदेव स्वप्नदर्शनं बाधपर्यन्तत्वाद्भ्रमस्य तत्त्वज्ञानकाले तु न कश्चित् भ्रमनिमित्त व्यवहारः । तथा च श्रुतिः यत्र वाऽन्यादिव स्यात्तत्रान्योऽन्यत्पश्येत् यत्रो त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति विद्याविद्ययोर्व्यवस्थामाह तथा च यस्य विपरीतदर्शनं तस्य न वस्तुदर्शनं विपरीतदर्शनस्य वस्त्वदर्शनजन्यत्वात् यस्य वस्तुदर्शनं तस्य न विपरीतदर्शनं विपरीतदर्शनकारणस्य वस्त्वदर्शनस्य वस्तुदर्शनेन बाधितत्वात् यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा रात्रौ पश्यतश्चोलूकस्य यद्दिनं रात्रिरेवास्य काकस्येति महदाश्चर्यमेतत् अतोऽज्ञस्यैव कर्मण्यधिकारो न तत्त्वविदः आविद्यककियाकारकादिव्यवहारशून्यत्वादिति स्वतस्सिद्ध एव तस्येन्द्रियसंयम इति भाव इत्यपरे ॥ ६९ ॥

एतादृशस्यैव विवेकवैराग्यादिविशिष्टस्य श्रवणादिनोत्पन्नतत्त्वसाक्षात्कारवतो यतेर्मोक्षो नान्यस्य विषयातृष्णाविष्टस्येति सदृष्टान्तमाह—

आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

आपूर्यमाणमिति । वृष्ट्यादिप्रभवाः सर्वा अप्यापः नानानदीभिरापूर्यमाणमपि सन्तमचलप्रतिष्ठमनतिक्रान्तमर्यादं समुद्रं यद्वत् येन प्रकारेण प्रविशन्ति न तु किञ्चिद्विकारं कर्तुं शक्नुवन्ति तद्वत् तेनैव प्रकारेण सर्वे कामा अज्ञैः काम्यमानाः शब्दाद्याः सर्वे विषयाः प्रारब्धकर्मवशात् यं स्थितप्रज्ञं निर्विकारमेव सन्तं प्रविशन्ति प्राप्नुवन्ति न तच्चित्तं विकर्तुं शक्नुवन्ति स समुद्रस्थानीयः स्थितप्रज्ञः शान्तिं सर्वानर्थनिवृत्त्युपलक्षितां मोक्षाभिधामाप्नोति ज्ञानबलेन न कामकामी कामान्विषयान्कामयितुं शीलं यस्य स कामकाम्यज्ञः व्याख्यातां शान्तिं नाप्नोति अपि तु सर्वदा लौकिकालौकिककर्मविक्षेपेण महति क्लेशार्णवे मग्नो भवतीति भावः । एतेन ज्ञानेनैव

फलभूतो विद्वत्संन्यासस्तस्यैव च सर्वविक्षेपनिवृत्तिरूपा जीवन्मुक्तिर्दैवाधीनविषयभोगेऽपि निर्विकारतेत्यादिकमुक्तं वेदितव्यम् ॥ ७० ॥

चतुर्थप्रश्नोत्तरमुपसंहरति—

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

विहायेति । यस्मात् शब्दादिविषयप्रवणस्य कामिनो न मुक्तिस्तस्मात्सर्वान् बाह्यान् गृहक्षेत्रादीन् आन्तरान्मनोराज्यरूपान्वासनारूपांश्च कामान् पथि गततृणादिवत् विहायोपेक्ष्य शरीरजीवनमात्रेपि निःस्पृहः सन् यतो निरहङ्कारः शरीरादावहमित्यभिमानशून्यो विद्यावत्त्वादिप्रयुक्तात्मपूज्यत्वाद्यभिमानरहितो वाऽतो निर्ममः प्रारब्धकर्मप्राप्ते कौपीनाच्छादने ममेदमित्यभिमानवर्जितः सन् स्थितप्रज्ञः पुमान् पुरुषश्चरति प्रारब्धवशेन भोगान्भुङ्क्ते यत्रापि गच्छतीति वा स एवंभूतः स्थितप्रज्ञः शान्तिं सर्वसंसारदुःखनिवृत्तिलक्षणामविद्यातत्कार्यनिवृत्तिमधिगच्छति ज्ञानबलेन प्राप्नोति एवंभूतं जनं स्थितप्रज्ञस्येति चतुर्थप्रश्नोत्तरमुक्तम् ।

अन्ये तु यथा कन्यका स्वयमृतुमती भूत्वा जननीं जनकं भ्रातरं च सर्वं स्वजनं त्यक्त्वा भर्त्तारमेवैकमाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमते तेनैव तुष्यति हृष्यत्यानन्दति नान्यं शृणोति पश्यति स्मरति स्पृशति स्वयं पतिव्रता भूत्वा तत्रैव तिष्ठति तथैव यस्य ब्रह्मविदो यतेः प्रज्ञा समाधिना प्रौढीभूय देहं प्राणमिन्द्रियजातञ्च सर्वं दूरतः परित्यज्य सच्चिदानन्दैकरसं परं ब्रह्मैकमेवाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमन्ती क्रीडन्ती नन्दन्ती तुष्यती हृष्यन्ती सती पतिव्रतावत् नान्यच्छृणोति पश्यति मनुते विजानाति स्वयं सदात्मना तिष्ठति स एव जीवन्मुक्तिं विदेहकैवल्यसुखं च विन्दत इति सूचयितुं स्थितप्रज्ञस्य यतेर्भिक्षादावपि वृत्तेर्बाह्यानालम्बनमेव प्रतिपादयति श्रीभगवान् एवंलक्षण एव यतिर्विदेहमुक्तिं प्राप्नोति नान्यविध इति निर्द्धारयन् । गङ्गानर्मदागोदाकृष्णाकावेरीसिन्ध्वादीनां महानदनदीनां दशशतसहस्रसंख्याकेभ्यो मुखेभ्योऽतिपरिणामवद्भ्यः समागतैरप्रक्षैर्महाप्रवाहैरपरिमितैः समन्तादापूर्यमाणमपि स्वयमचलप्रतिष्ठम् अचला चलनवर्जिता प्राक्तनं स्वीयं लक्षणमनतिक्रान्ता वृद्धिक्षयशून्या प्रतिष्ठा जलस्थितिमर्यादा यस्य सोऽचलप्रतिष्ठस्तं प्रवाहाप्रवेशकाल इव

प्रवेशकालेऽप्येकरूपेण सत्ताविशेषशून्यतया वर्त्तमानमित्यर्थः सदैकरूपेणैव तिष्ठन्तं समुद्रमापः गङ्गासिन्ध्वादिमहानदीनां नानामुखेभ्यः समागतानि जलानि नानाविधवर्णरसगन्धगुणफलवत्य आपो यद्वत्प्रविशन्ति स्वकीयशुक्लनीलारुणपीतादिरूपविशेषं मधुराम्लतिक्तकषायादिरसविशेषं परिमलपूत्यादिगन्धविशेषं लघुत्वगुरुत्वादिगुणविशेषं एकद्वित्रिचतुःपञ्चषट्सप्ताष्टदशशतकृच्छ्रसमानपुण्यविशेषं तन्नामविशेषं च परित्यज्य समुद्रभावमेव यथा गच्छन्ति समुद्रं प्राप्य तत्सम्बन्धमहिम्ना नामरूपगुणविशेषैर्यथा समुद्रान्न भिद्यन्त इत्यर्थः । तद्वत्कामा यं प्रविशन्ति काम्यन्ते नामभेदेन रूपभेदेन च विविच्य गृह्यन्त इति कामा भोग्यपदार्थाः सूपापूपरसान्नादयस्तदन्ये च भोग्यविशेषाः अचलप्रतिष्ठं नानाविधैर्नामरूपरसगन्धपाकसंस्कारादिविशेषविचित्रैरनेकैर्भोग्यविशेषैः सर्वतोऽनिच्छाप्रारब्धादेव सम्प्राप्तैरापूर्यमाणं मां गृहाण मां गृहाणेति दातृजनद्वारा समन्तात्पतद्भिर्व्याकुलीक्रियमाणमप्यचलप्रतिष्ठम् अचला निर्विकल्पा विपरीतभावशून्या व्युत्थानदशायामप्याहारादौ सदाकारतामापाद्य सदात्मनैव निश्चलीभूय स्थिताऽखण्डाकारवृत्तेः स्थितिर्यस्य सोऽचलप्रतिष्ठः तदानीमपि बाह्यनिर्विकल्पसमाधिनिष्ठया विपरिणामरहितान्तष्करण इत्यर्थः तमचलंप्रतिष्ठमेव यं ब्रह्मविदं यतिं सर्वे कामाः प्रविशन्ति यं ब्रह्मनिष्ठं प्राप्य सर्वे विषयाश्छिद्रावापन्ना अध्यात्मदृष्ट्या प्रविलापिताः सन्तः स्वकीयनामरूपगन्धपाकसंस्कारविशेषं रुचिविशेषं च परित्यज्य समुद्रप्रतिष्ठमहानदीजलानि समुद्रभावमिव स्वयं ब्रह्मभावं गच्छन्तीत्यर्थः । य एवं लक्षणो ब्रह्मविद्यतिः स एव शान्तिमविद्याप्रपञ्चोपशमलक्षणां विदेहमुक्तिमाप्नोति न तु कामकामी कामान् विषयान्यः कामयते स कामकामी स्वयं कैवल्यकारणभूतां ब्रह्मनिष्ठां स्वधर्मं परित्यज्यानात्मन्येवात्मभावमापद्य भोक्ता सन् शुक्तौ रजतमिव मरौ जलमिव ब्रह्मण्यद्वितीये ह्यविद्यमानमेव द्वैतं कल्पयित्वाऽहं भोक्तेदं भोग्यमित्यनृताभिसन्धितया बाह्यवासनाभिरसताऽहन्ताममताभिनिवेशेन बद्धस्सन्निदं रम्यम् इदमिष्टमित्यादिभेदबुद्ध्या नामरूपादिविशेषविभागेन पदार्थान् गृह्णाति यतस्ततः कामकामी भेददर्शी शान्तिं न प्राप्नोति देहादितादात्म्यापत्त्या योऽसदभिनिवेशेन ब्रह्मण्यद्वितीये भेदं पश्यति स एव कामकामी द्वैतदर्शी मुक्तिं न प्राप्नोतीत्यर्थः । तथा च श्रुतिः—यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति तत्त्वेवभयं विदुषो मन्वानस्येति । न हि

देहतादात्म्यं विना भेददर्शनं कामना च सिद्ध्यति नापि देहतादात्म्य ञ्चाविद्यां विना सम्भवत्यविद्यावतो मुक्त्यभावो युक्त एव यतस्ततः क्वचित्कदाचिदपि देहतादात्म्यापत्त्या भेददृष्टिर्न कर्त्तव्या विदेहकैवल्यार्थिना यतिनेति सिद्धम् । पूर्वश्लोकेनानेन च द्वाभ्यामाहारादावपि स्थितप्रज्ञो ब्रह्मविद्यतिर्ब्रह्मात्मना ब्रह्मण्येव तिष्ठति न क्वचिदप्यनात्मनीति किमासीतेति प्रश्नस्योत्तरं दत्तम् । यस्माद्ध्यायतो विषयानित्यत्र विषयाणां श्रवणेन दर्शनेन च विनैव केवलध्यानमात्रेण कामाद्यनर्थाविर्भूत्या विदुषोऽपि प्रणाशः प्रतिपादितः किमुत ब्रह्मनिष्ठामुत्सृज्य बाह्यवृत्त्या विषयानिन्द्रियैः गृह्णतो भुञ्जतो यथेच्छं विहरतो कामकामिनः प्रणाश इति तस्माद्विदेहकैवल्यार्थिना यतिना ब्रह्मविदा सर्वथा विषयग्राहमुत्सृज्य सर्वेन्द्रियनिग्रहपूर्वकं सदात्मनिष्ठया स्थातव्यम् एवं यस्तिष्ठति स एव विदेहमुक्तिं विन्दतीति प्रतिपादयति विहायेति । पुमर्थमतिदुर्लभं मोक्षं महता प्रयत्नेन सम्पादयति ब्रह्मवित् खलु पुमान् पुरुषशब्दवाच्यो यो ब्रह्मविद्यतिः स्वयं निरहङ्कारः ब्रह्मैवाहमिति ब्रह्मण्येव निरूढात्मत्वाभिनिवेशेन देहान्निर्गतोऽहङ्कारोऽहमात्मिका बुद्धिवृत्तिर्यस्य स निरहङ्कारः नित्यनिरन्तरब्रह्मनिष्ठया निर्मूलितात्मतादात्म्यग्रन्थिरित्यर्थः तत एव निर्ममः देहतद्धर्मतत्कर्मतदवस्थादिभ्यो निर्गतो ममताबन्धो यस्य स निर्ममः ब्रह्मतादात्म्यापत्त्या वपुष्यहम्भावाभावे तद्धर्मादौ ममताभावो विदुषो युक्तएवेत्यर्थः। तत एव निस्पृहः विषयेभ्यो निर्गता स्पृहा सुखाशालक्षणा यस्य स निस्पृहः ब्रह्मण्येवात्मतापत्त्या देहादेरनात्मत्वेन निरस्तत्वात्तमुद्दिश्य सुखाशाऽसम्भवात् स्वस्य निरन्तरब्रह्मानन्दामृतरसेनैव तृप्तत्वाच्च विदुषः विषयसुखापेक्षाऽभावो युक्तस्तत एव सर्वान् बाह्यशब्दवाच्यान् विहाय शुक्तिरजततुल्यैस्तैः प्रयोजनाभावादिन्द्रियैस्तद्ग्रहणमकृत्वा सर्वमिदमहञ्च ब्रह्मैवेति स्वं सर्वञ्च ब्रह्मैव पश्यंश्चरति कामान्नीकामरूपान्नुपसञ्चरन् इत्यादिश्रुत्युक्तप्रकारेण भूमौ सर्वत्रासङ्गोदासीनो भूत्वा यः पर्यटति परमहंसः स एव शान्तिमात्यन्तिकसंसारोपरमलक्षणां विदेहमुक्तिमधिगच्छति नैतद्विपरीतलक्षणइत्यर्थ इत्याहुः ॥ ७१ ॥

ब्रह्मात्मना सर्वं वीक्षमाणो ब्रह्मानन्दमनुभुञ्जानो ब्रह्मवित्सर्वत्र चरति नैकत्र तिष्ठतीति प्रव्रजेत किमितिप्रश्नस्योत्तरं दत्तम्। मुमुक्षोर्यतेः श्रवणजन्यज्ञानं प्रपञ्चवासनाभिः कामक्रोधादिभिरहंममाद्यभिमानविशेषैश्च सप्रतिबन्धकं विदेहमुक्त्यै नालमिति निश्चित्य परमकृपालुः श्रीभगवान्वासुदेवः

समाधावचला बुद्धिरिति ब्रह्मनिष्ठां प्रस्तुत्य निरन्तरं ब्रह्मनिष्ठया सर्वकामप्रहाणं कृतवतः शरीरयात्रादावपि ब्रह्मात्मना ब्रह्मणि तिष्ठतोऽहंममादिबन्धान्मुक्तवत एव विदुषो विदेहमुक्तिं प्रतिपाद्येदानीं मुमुक्षोरप्येषैव सम्पादनीया ह्यनयैव विदेहमुक्तिर्नान्यथेति सूचयन्नुपक्रान्तां ब्रह्मनिष्ठामुपसंहरति—

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे**
**श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥**

एषेति। स्वस्वरूपं प्रकाश्य मुमुक्षुं संसारमृत्योः पातीति यः परमात्मा तमेवार्थयते वाञ्छतीति पार्थस्तस्य सम्बुद्धिः हे पार्थ मुमुक्षो त्वमिदं मयोच्यमानं शृणु श्रुत्वा कुरु ब्राह्मी ब्रह्मप्राप्तेर्नियतकारणत्वाद्ब्राह्मी ब्रह्मप्रापिका स्थितिर्निष्ठा एषा मया प्रतिपादिता मुमुक्षुरेनां प्रस्तुतां ब्रह्मनिष्ठां प्राप्यानुष्ठाय न मुह्यति विमोहाय न कल्पते सर्वेषां प्राणिनामहमितिविशिष्टो मोहो यत्र स विमोहो देहस्तं न प्राप्नोति एतस्यां निष्ठायां स्थित्वा ब्रह्मवित्पुनर्देही न भवतीत्यर्थः। किञ्च पूर्वस्मिन्नेव वयसि प्रसिद्धसाधनो जन्मान्तरीयसंन्यासश्रवणादिपुण्यकर्मपरिपाकवशात् विद्वान् इह प्रारब्धविशेषबलेन किञ्चित्कालं संसृत्याऽन्तकाले चरमावस्थायामपि अस्यां निष्ठायां स्थित्वा निर्वाणं निष्क्रियं नित्यानन्दैकरसं ब्रह्म ऋच्छति मुक्तिं गच्छतीत्यर्थः।

विज्ञाय चरमावस्थां देवताभ्यो नृपोत्तमः।
खट्वाङ्गो नाम राजर्षिर्मुहूर्त्ते मुक्तिमीयिवान् ॥

इति प्रसिद्धेः। यत एवं ततो विदेहकैवल्यार्थिभिर्यतिभिर्बाह्यप्रवृत्तिं परित्यज्यास्यामेव निष्ठायां सर्वदा स्थातव्यमिति सिद्धम्।

शोको देहात्मबुद्ध्या ह्यनुभवति मृषा येन देहातिरिक्तो
देहद्रष्टैक आत्मा विभुरनुपहतो हन्तृहन्यत्वशून्यः।
तस्य ज्ञानान्न शोकस्तदिह निजमनःशुद्धितः सा स्वधर्मात्
वेदोक्तः स द्वितीये भृशमिममवदत् सांख्ययोगाधिकारम् ॥

अन्ये तु चतुर्णां प्रश्नानामुत्तरव्याजेन सर्वाणि स्थितप्रज्ञलक्षणानि मुमुक्षुकर्त्तव्यतया कथितानि सम्प्रति कर्मयोगफलभूतां साङ्ख्यनिष्ठां फलेन स्तु-

वन्नुपसंहरति एषेति । एषा स्थितप्रज्ञलक्षणव्याजेन कथिता एषा तेऽभि-
हिता साङ्ख्ये बुद्धिरिति च प्रागुक्ता स्थितिर्निष्ठा सर्वकर्मसंन्यासपूर्वकप-
रमात्मज्ञानलक्षणा ब्राह्मी ब्रह्मविद्या हे पार्थ एनां स्थितिं प्राप्य
यः कश्चिदपि पुनर्न विमुह्यति न हि ज्ञानबाधितस्याज्ञानस्य पुनः सम्भ-
वोऽस्त्यनादित्वेनोत्पत्त्यसम्भवात् अस्यां स्थितौ अन्तकालेऽप्यन्त्येपि वयसि
स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं ब्रह्मरूपनिर्वाणमिति वा ऋच्छति
गच्छत्यभेदेन, किमु वक्तव्यं यो ब्रह्मचर्यादेव संन्यस्य यावज्जीवमस्यां
ब्राह्म्यां स्थितोऽवतिष्ठते स ब्रह्मनिर्वाणमृच्छतीत्यपिशब्दार्थः । यद्वा एषा
यथोक्ता ब्रह्मणि भवा ब्राह्मी स्थितिः सर्वं परित्यज्य ब्रह्मरूपेणैवावस्थान-
मित्यर्थः ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः । हे पार्थ एनां स्थितिं लब्ध्वा न
विमुह्यति विमोहं न प्राप्नोति अस्यां ब्राह्म्यां स्थितावन्तकाले वृद्धव्यव-
स्थायामपि स्थितो ब्रह्मनिर्वाणं निर्गतं वानं गमनं यस्मात्तन्निर्वाणं
च ब्रह्मनिर्वाणं ऋच्छति प्राप्नोति न तु पुनरागच्छतीत्यर्थः न स पुनराव-
र्तत इति श्रुतेः यत्प्राप्य न निवर्तन्ते तद्धाम परमं ममेति स्मृतेश्च, व्यस्तं
वा पदं । मत्सम्बन्धिनस्तवापि ब्रह्मण्येवावस्थानं युक्तमिति सूचयन्नाह
पार्थेति । ममेव तवाप्ययं शोकमोहादिस्वभावो नोचितः किन्तु जीवन्मुक्त-
स्वभाव एवेति वेत्यर्थः ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलं ज्ञाननिष्ठेवे-
त्यध्यायेऽस्मिन्प्रकीर्त्तितमित्याहुः ॥ ७२ ॥

इतिश्रीभगवद्गीतार्थसारसङ्ग्रहदीपिकायां जयरामाख्येन विदुषा
विरचितायां द्वितीयाध्यायव्याख्या समाप्ता ॥ ३००० ॥



न त्वेवाहं जातु नासमित्यात्मानात्मविवेचनमुपक्रम्य न जायते म्रियते वेत्यादिना सम्यगात्मतत्वं निर्धार्य वेदाविनाशिनमित्यादिना ब्रह्मविदः सर्वकर्मसंन्यासमुक्त्वा तस्यैव प्रजहातीत्यारभ्य स शान्तिमाप्नोतीत्यन्तेन ग्रन्थेन ब्रह्मनिष्ठां तत्फलञ्च मोक्षं प्रतिपाद्य न कामकामीति कामकामिनो मोक्षाभावः प्रतिपादितस्तेन सर्वकर्मसंन्यासपूर्वकं ब्रह्मनिष्ठया मोक्षः सम्पादनीय इति सर्वेषां प्रवृत्तौ प्रसक्तायां

विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन्हि द्विजाधमः ॥
यदा मनसि सञ्जातं वैतृष्ण्यं सर्ववस्तुषु
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥
प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥
यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं सङ्गृह्य सोपवीतां शिखां त्यजेत् ॥
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति बोधो दृढो यस्य तदा भवति मोक्षभुक् ॥
प्राणे गते यथा देहः सुखं दुःखं न विन्दति ।
तथा चेत्प्राणयुक्तोपि स कैवल्याश्रमे वसेत् ॥
अनधीत्याखिलान् वेदान्* इष्ट्वैवाखिलान्सुरान् ।
अनुत्पाद्य सुतान्विप्रो न संन्यसितुमर्हति ॥
अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्रचरन्निन्द्रियार्थेषु नरः पतनमृच्छति ॥
ज्ञात्वा नैष्कर्म्यमाचरेत् ।
सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः ॥

ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति ।

---

* अत्र सन्धिश्चिन्तनीयः मम तु वेदानानिष्ट्वैवासुरानिति पाठो युक्तः प्रतिभाति ।

परं ब्रह्म परिज्ञाय प्रव्रजेद्ब्राह्मणोत्तमः।
नान्यथा कर्म कुर्वीत न प्रमाद्येत कर्हिचित् ॥
स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः।
विपरीतस्तु दोषः स्यादुभयोरेष निश्चय ॥

इत्यादिश्रुतिस्मृतिवचनेभ्यो ह्यधिकारिणामेव संन्यासो नानधिकारिणामन्यथा कृत्वा पतिष्यन्तीति ज्ञानकर्मयोगयोरधिकार्यादिभेदेन भेद एवेति तयोर्विभागं दर्शयितुं चानधिकारिणां कर्मैव चित्तशुद्धिद्वारा मोक्षसाधनं तदेवावश्यं कर्त्तव्यमितिबोधयितुं च तृतीयाध्याय आरभ्यते तत्रादौ कर्मण्येवाधिकारस्ते मा फलेषु कदाचनेति तव कर्मण्यवाधिकारो नान्यत्रेत्यवधारणपूर्वकं कर्म विधाय दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय बुद्धौ शरणमन्विच्छेति ज्ञानयोगात्कर्मयोगो निकृष्टस्ततो ज्ञानयोगमेवाश्रयेति ज्ञानयोगविधानाच्च तेन व्याकुलीभूतान्तरात्मा भूत्वाऽर्जुनः स्वयं दूरेण ह्यवरङ्कर्मेति वचनार्थमेव मनसि निधाय कर्मयोगात् ज्ञानयोगस्य साक्षान्मोक्षसाधनत्वेन विशिष्टतरत्वं मन्यमान इदमुवाच—

**ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**
**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

ज्यायसी चेदिति। जनं जननं तत्कारणमज्ञानं च स्वसाक्षात्कारेणार्दयति हिनस्तीति जनार्दनस्तस्य सम्बुद्धिर्हे जनार्दन कर्मणः कर्मयोगात् बुद्धिर्ज्ञानयोग एव ज्यायसी श्रेष्ठेति ते तव मताऽभिमता चेत्किं किमर्थं कर्मण्येवाधिकारस्त इति मां कर्मणि ज्ञानान्निकृष्टे नियोजयसि तत्रापि घोरे हिंसात्मके तस्माद्युध्यस्व भारतेति चोदयसि भवानीश्वरस्तव वचनमलङ्घ्यं मां भक्तमनुरक्तं च योग्यमर्थं त्याजयित्वाऽयोग्यार्थे प्रेषयसीत्यर्थः। किञ्च कर्मण्येवाधिकारस्त इति बुद्धौ शरणमन्विच्छेतिचैवंलक्षणेन व्यामिश्रेणेव क्षीरनीरयोरिव द्वयोर्मेलनं व्यामिश्रं तेनेव ज्ञानकर्मणोः समुच्चयवदेव वाक्येन मे मम बुद्धिं मोहयसीव माङ्कर्मणि नियोजयसि। यद्यपि युद्धं कर्त्तव्यं त्यक्तव्यं वेतिसंशयमालोक्य स्वशरणं गतस्य मम भ्रमापनयाय भवान्दयया प्रवृत्तो न तु मोहनाय

तथापि विवेकहीनस्य मम भवद्वचनं व्यामिश्रमिव भाति तेन व्यामिश्र-वाक्येन मम बुद्धिं मोहयसीव प्रतीयते तदपि मम बुद्धिदोष एवेति भावः। तर्हीदानीं किङ्कर्त्तव्यमित्यतआह तदेकमिति । ज्ञानकर्मणोः क्रियाकारकफल-भेदेन विपरीतयोरेककर्तृकत्वासम्भवात्तयोरेकं ज्ञानं वा कर्म वा मदधिकारा-नुरूपं तत्र मम योग्यत्वमयोग्यत्वं च विचार्य्येदमेवास्यार्हमिति निश्चित्य वद येन ज्ञानेन वा कर्मणा वा तयोरेकतरेण वाऽहं साक्षात्परम्परया वा श्रेयः परमपुरुषार्थं प्राप्नुयामित्यर्थः ।

अन्ये तु इदं श्लोकद्वयमित्थं योजयन्ति तथाहि एवं तावत्प्रथमाध्या-येनोपोद्घातितो द्वितीयाध्यायेन सम्पूर्णः शास्त्रार्थः सूत्रितः तथाहि आदौ निष्कामकर्मनिष्ठा ततोऽन्तःकरणशुद्धिस्ततः शमदमादिसाधनपूर्वकः सर्वकर्मसंन्यासः ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा तत-स्तत्त्वज्ञाननिष्ठा तस्याः फलं चाविद्यानिवृत्त्या जीवन्मुक्तिस्ततो विदेह-मुक्तिः जीवन्मुक्तावस्थायां च परमानन्दालम्बनेन परवैराग्यप्राप्तिः दैवसम्पदाख्या च शुभवासना तदुपकारिण्युपादेयाऽऽसुरसम्पदाख्या त्व-शुभवासना तद्विरोधिनी हेया दैवसम्पदोऽसाधारणं कारणं सात्विकी श्रद्धा आसुरसम्पदस्तु राजसी तामसी चेति हेयोपादेयविभागेन सम्पूर्णशास्त्रार्थ-परिसमाप्तिः । तत्र योगस्थः कुरु कर्माणीत्यादिना सूत्रिता सत्वशुद्धिसाध-नभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण तृतीयचतुर्थाभ्यां प्रतन्यते । ततश्शुद्धान्तःकरणस्य शमदमादिसाधनसम्पत्तिपूर्विका विहाय कामान्यः सर्वानित्यादिना सूत्रिता सर्वकर्मसंन्यासनिष्ठा संक्षेपविस्ताररूपेण पञ्चम-षष्ठाभ्यां निरूपिता एतावता च त्वंपदार्थोपि निरूपितः। ततो वेदान्तवाक्य-विचारसहिता युक्त आसीत मत्पर इत्यादिना सूत्रिताऽनेकप्रकारा भगव-द्भक्तिनिष्ठाऽध्यायषट्केन प्रतिपाद्यते तावता च तत्पदार्थोपि निरूपितः। प्रत्य-ध्यायं चावान्तरसङ्गतिमवान्तरप्रयोजनभेदं च तत्र तत्र प्रदर्शयिष्यते । ततस्तत्त्वंपदार्थैक्यज्ञानरूपा वेदाविनाशिनं नित्यमित्यादिना सूत्रिता तत्त्वज्ञान-निष्ठा त्रयोदशे प्रकृतिपुरुषविवेकद्वारा प्रपञ्चिता ज्ञाननिष्ठायाश्च फलम् । त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेत्यादिना सूत्रिता त्रैगुण्यनिवृत्तिश्च-तुर्दशे सैव जीवन्मुक्तिरिति गुणातीतलक्षणकथनेन प्रपञ्चिता। तदा गन्तासि निर्वेदमित्यादिना सूत्रिता परवैराग्यनिष्ठा संसारवृक्षच्छेदद्वारेण पञ्चदशे। दुःखेष्वनुद्विग्नमना इत्यादिस्थितप्रज्ञलक्षणेन सूत्रिता परवैराग्योपकारिणी दैवी सम्पदादेया यामिमाम्पुष्पितां वाचमित्यादिना सूत्रिता तद्विरोधिन्या-

सुरी सम्पच्च हेया षोडशे दैवसम्पदोऽसाधारणं कारणं च सात्त्विकी श्रद्धा निर्द्वन्द्वो नित्यसत्त्वस्थ इत्यादिना सूत्रिता तद्विरोधिपरिहारेण सप्तदशे एवं सकलाज्ञाननिष्ठाऽध्यायपञ्चकेन प्रतिपादिता । अष्टादशे च पूर्वोक्तसर्वोपसंहार इति कृत्स्नगीतार्थसङ्गतिः । तत्र पूर्वाध्याये एषा तेऽभिहिता साङ्ख्ये बुद्धिरिति ज्ञाननिष्ठा भगवतोक्ता योगे त्विमां शृण्वित्यारभ्य कर्मण्येवाधिकारस्ते मा ते सङ्गोस्त्वकर्मणीत्यन्तेन कर्मनिष्ठा चोक्ताऽधिकारिभेदेन । तत्र दूरेण ह्यवरङ्कर्मेति कर्मनिष्ठाया ज्ञाननिष्ठापेक्षयाऽनिकृष्टत्वं यावानर्थ उदपाने इत्यत्र ज्ञानफले कर्मफलान्तर्भावञ्च श्रुत्वा एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यतीति सप्रशंसं ज्ञानफलोपसंहारेण ज्ञाननिष्ठाया श्रैष्ठ्यं चोक्तं श्रुत्वा तत्र ज्ञाननिष्ठाया श्रेष्ठत्वे क्लेशात्मिकायां कर्मनिष्ठायामनुष्ठातुमयोग्यायां निकृष्टायां किमर्थं मां प्रवर्तयति भगवानित्यभिप्रेत्यार्जुन उवाच ज्यायसी चेदिति पूर्वोत्तराध्याययोः सङ्गतिश्चोत्थाप्योत्थापकभावलक्षणा बोध्या । हे जनार्दन कर्मणो निष्कामकर्मणोपि बुद्धिरात्मतत्त्वविषयं ज्ञानं ज्यायसी श्रेष्ठतरा चेत् यदि ते तव मताऽभिप्रेता तत् तदा घोरे हिंसाद्यनेकायासबहुले कर्मणि मामतिभक्तं किं नियोजयसि कर्मण्येवाधिकारस्त इत्यादिना विशेषेण प्रेरयसि हे केशव केशौ ब्रह्मरुद्रौ वाति गच्छत्यनुकम्पार्थमित्यर्थः मामपि स्वभक्तं प्रति कृपां कुरु न तु घोरे कर्मणि प्रेरयेत्याशयः जनान् दुर्जनान् सुरादीनर्दयति पीडयतीति तथा सम्बोधयन्ममासुरत्वाभावाद्घोरे कर्मणि प्रेरणेन पीडादातृत्वं तवानुचितमिति सूचयति ॥

ननु त्वया बुद्धिरेव ज्यायसी समेति मद्वाक्यान्निश्चिता चेत्किमर्थं मां पृच्छसीत्याशङ्क्याह व्यामिश्रेणेवेति । बुद्ध्या युक्तो ययेत्यादिना कर्मप्रशंसा या निशा सर्वभूतानामित्यादिना ज्ञानप्रशंसा कर्मण्येवाधिकारस्ते इत्यादिना मम कर्मण्येवाधिकारबोधनं त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवाऽर्जुनेति ज्ञाननिष्ठाधिकारबोधनमित्येवं व्यामिश्रेण सङ्कीर्णेन किं श्रेष्ठं किमश्रेष्ठं क्व ममाधिकारः क्व नेतिसन्देहोत्पादकेन वाक्येन यद्यपि विविक्ताभिधायी भगवांस्तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभातीति वाऽर्थः । मम बुद्धेर्मोहापनयार्थं हि प्रवृत्तस्त्वङ्कथं मोहयस्यतो ब्रवीति बुद्धिं व्यामोहयसीव मे परमकृपालुत्वात्त्वं न मोहयस्येव मम तु स्वाशयदोषान्मोहो भवतीति वाऽर्थः । तथाचैकाधिकारित्वे विरुद्धयोः ज्ञानकर्मणोः समुच्चयानुपपत्तेरेकार्थत्वा-

भावेन च विकल्पानुपपत्तेरेकपुरुषानुष्ठानासम्भवाद्भिन्नाधिकारित्वं मन्यसे चेत्तर्हि तयोर्मध्ये तत् एकं ज्ञानं वा कर्म वा इदमेव तव योग्यमिति निश्चित्य वद कथय येन ज्ञानेन कर्मणा वा निश्चितेन श्रेयो मोक्षमहमाप्नुयां प्राप्तुं योग्यः स्यामित्यर्थः । एवं ज्ञानकर्मनिष्ठयोरेकाधिकारित्वे विकल्पसमुच्चयोरसम्भवादधिकारिभेदज्ञानायार्जुनस्य प्रश्न इति सिद्धम् ॥ १ ॥ २ ॥

मम बुद्धिदोषएवेति त्वया यदुक्तं तत्सत्यं पूर्वं यदुक्तं मया तत्त्वया न ज्ञातं तवैवायं बुद्धिदोषस्तव विद्याबुद्धिशक्त्यवस्थादौ विचार्यमाणे कर्मण्येवाधिकारो न तु संन्यासेऽतएवोक्तं मया कर्मण्येवाधिकारस्त इति तत्रापि चित्तशुद्धिद्वारा ज्ञानसिद्ध्यै कर्म कुरु न तु फलायेति सूचयितुं बुद्धौ शरणमन्विच्छ कृपणाः फलहेतव इत्युक्तं न तु कर्म त्यक्त्वा बुद्धिमाश्रयेत्युक्तं नाप्युभयं च कुर्विति ज्ञानकर्मणोः राजसूयबृहस्पतिसवादिवद्भिन्नकर्तृकत्वेनैकपुरुषानुष्ठेयत्वायोगादिदं पूर्वमेव सूचितं एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृण्विति तदेव पुनरुच्यते श्रूयतामित्याशयेन श्रीभगवानुवाच—

**श्रीभगवानुवाच ।**

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

लोकइति । अस्मिन् लोके ब्राह्मणादीनां स्वधर्मपराणां मुमुक्षूणां पुरा पूर्वकाले मया वेदरूपिणा सर्वज्ञेन सर्वधर्मोपदेष्ट्रा द्विविधा द्विप्रकारा निष्ठा शास्त्रीयस्यानुष्ठेयस्य धर्मस्यासाङ्कर्यं तथा नियमेन स्थितिर्व्यवस्था प्रोक्ता कृतेत्यर्थः । तत्कथमिति चेदुच्यते वेदान्तैस्सर्वैः सम्यक् ख्यायते तात्पर्येण प्रतिपाद्यत इति साङ्ख्यं निर्विशेषं परं ब्रह्म तदेव ह्यात्मत्वेन ये विदुस्ते साङ्ख्यास्तेषां साङ्ख्यानां यतीनां ज्ञानयोगेन ब्रह्मविद्ब्रह्मणा युज्यत एकीक्रियतेऽनेनेति योगः ज्ञानमेव योगो ज्ञानयोगस्तेन सर्वमिदमहं च ब्रह्मैवेति ब्रह्माकारवृत्त्या निष्ठा नैश्चल्येन स्थितिः प्रोक्ता सदैकरीत्या कर्तव्यत्वेन विहिता तमेवैकञ्जानथ आत्मानमन्या वाचो विमुञ्चथ ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् वेदान्तविज्ञानसुनिश्चितार्थाः । सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायेद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥

इत्यादिवाक्यैरतत्प्रवृत्तिं निषिध्य तेषां ब्रह्मनिष्ठैव कर्तव्यत्वेन प्रोक्तेत्यर्थः । योगिनां कर्मयोगिनां गृहिणां कर्मयोगेन युज्यतेऽभ्युदयोऽनेनेति योगः कर्मैव योगः कर्मयोगस्तेन निष्ठा नियमस्थितिः प्रोक्ता अहरहः सन्ध्यामुपासिता उदिते सूर्ये प्रातर्जुहोति वसन्ते ब्राह्मणोऽग्नीनादधीत कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः तस्मात्स्वाध्यायोऽध्येतव्यः ऋतञ्च स्वाध्यायप्रवचने च सत्यं च स्वाध्यायप्रवचने च अग्नयश्च स्वाध्यायप्रचने च अग्निहोत्रञ्च स्वाध्यायप्रवचने च सत्यं वद धर्मं चर तानि त्वयोपास्यानीति श्रौतस्मार्तकर्मनिष्ठैव कर्मिणां कर्तव्यत्वेन प्रोक्ता विहिता एवं निष्ठाद्वयं कर्मिणां गृहस्थानामकर्मिणां सन्यासिनां चात्रापि असङ्कीर्णं विभज्य प्रदर्शितं तत्त्वया न ज्ञातमतो व्यामिश्रेणेव वाक्येनेति वक्तुं नार्हसीत्यर्थः ॥ ३ ॥

नन्वेवं सति ज्ञानकर्मणोरुभयोरपीतरेतरानपेक्षयैव साक्षान्मोक्षहेतुत्वं प्राप्तमिति चेन्न न कर्मणा न प्रजयेत्यादिश्रुतिभिः कर्मणो मोक्षसाधनत्वनिषेधात् ज्ञानादेव कैवल्यमितीतरव्यावृत्तिपूर्वकं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वावधारणाच्च न कर्मणो मोक्षसाधनता सम्भवति । यद्यपि ज्ञानमेव समुत्पन्नं स्वयमन्यानपेक्षया पुरुषस्य सद्यो मुक्तिसुखं प्रयच्छति न तत्र कर्मणोऽपेक्षा तथापि सत्त्वशुद्धौ ध्रुवा स्मृतिरिति श्रवणात्सत्त्वशुद्धिं विना ज्ञानं नोदेति सत्त्वशुद्धिश्च ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेति श्रवणाद्यज्ञदानादिसत्कर्मानुष्ठानं विना न सिध्यत्यतो मुमुक्षोरनुत्पन्नात्मज्ञानस्यावश्यं सम्यक्चित्तशुद्धिपर्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्याण्यन्यथा चित्तशुद्ध्यभावे ज्ञानानुत्पत्तौ मोक्षो न सिध्यतीत्याह—

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

नेति । नित्यानां कर्मणामनारम्भादनाचरणान्नैष्कर्म्यं न यत्र कर्म तन्निष्कर्म ब्रह्म निष्कलं निष्क्रियमिति श्रुत्युक्तं तस्य भावो नैष्कर्म्यं निष्क्रियब्रह्मात्मनाऽवस्थानलक्षणां मुक्तिं पुरुषो नाश्नुते उपायाभावात्सत्येवोपाय उपेयं सिध्यति यत उपायभूतानां कर्मणामननुष्ठानादुपेयभूतं ज्ञानं तत्फलं च नैष्कर्म्यं पुरुषस्य न सिध्यत्यतो मुमुक्षुणा भगवदर्पणबुद्ध्या नित्यं नैमि-

त्तिकं च कर्मावश्यमनुष्ठातव्यं तेन ज्ञानं मोक्षश्च सिध्यतीत्यर्थः। ननु न कर्मणा न प्रजयेति श्रुत्यैव कर्मणां मोक्षसाधनत्वनिषेधात्संन्यासयोगाद्यतय इति संन्यासस्यैव यतीनां मुक्तिहेतुत्वश्रवणाच्च सर्वकर्मणां संन्यासमेव कृत्वाऽहं तूष्णीमासे न कदापि कर्म कुर्वे क्लेशभूयिष्ठत्वाद्धिंसाप्रधानत्वाच्च कर्मण इत्याशङ्कायामाह नचेति। कर्माणि क्लेशभूयस्त्वादिबुद्ध्याऽप्यलसत्वेन वाऽप्यायातवैराग्याद्वा संन्यसनादेव शिखायज्ञोपवीतत्यागमात्रादेव सिद्धिं नैष्कर्म्यसिद्धिं विदेहमुक्तिं मुमुक्षुर्न समधिगच्छति विनैव वेदान्तश्रवणजन्यज्ञानेन ज्ञानादेव कैवल्यमिति श्रुतिविरोधात्। ननु संन्यस्य मुक्त्यर्थं दहरोपास्तिं वा वैश्वानरोपास्तिं वा शिवस्य रामस्य वा पूजां तन्नामकीर्तनं वा कुर्यामिति चेत् नाद्यः सत्यकामः सत्यसङ्कल्प इति दहरोपासनस्य सत्यकामत्वादिगुणवत्त्वश्रवणाद्गुणवदुपास्त्या तद्भावापत्तिप्रसङ्गात्। न द्वितीयः स सर्वेषु भूतेष्वन्नमत्तीति श्रवणाद्वैश्वानरोपास्त्या सर्वभूतात्मनाऽन्नादनमात्रफलप्रसङ्गात्। न तृतीयः देवो भूत्वा देवानप्येतीतिश्रवणात्तल्लोकप्राप्तिप्रसङ्गात्। नापि चतुर्थः नास्ति पातकमहो कलिकाले नामकीर्त्तनपरेषु नरेषु पुण्यश्रवणकीर्त्तनमित्यादिवचनान्नामकीर्तनस्य पापक्षयमात्रप्रयोजनसिद्धेः। यद् दृश्यं तदसदित्यव्याकृतादेः स्थूलान्तस्य सगुणस्य सर्वस्य दृश्यत्वेनासत्त्वावगमात् उपास्यस्य सर्वस्यापि सगुणत्वेनासत्त्वात् व्यभिचारात् सदुपास्त्या त्वसद्भावएव फलं सिध्यति न क्वचिदपि सद्भावः उपासनानुरूपत्वात्फलसिद्धेः तं यथा यथोपासते तथैव भवति असन्नेव स भवति असद्ब्रह्मेति वेद चेदित्यादिश्रुतेः ये यथा मां प्रपद्यन्त इति स्मृतेश्च। किं च असूर्या नाम ते लोका इति नचेदिहावेदीन्महती विनिष्टिरित्यात्मतत्त्वज्ञानेन आसुरलोकप्राप्तिरूपमहानर्थश्रवणात् अरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छमिति वेदान्तविमुखानां यतीनामिन्द्रभयश्रवणाच्च।

प्रत्यक्तत्त्वविवेकाय संन्यासः सर्वकर्मणाम्।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्॥ इति

यतेः स्वरूपविवेकाभावे पतितत्वस्मरणात् संन्यासस्यापि कर्मत्वाविशेषात्तावन्मात्रेण मोक्षासम्भवाच्च तस्माद्यतेर्मुमुक्षोस्सर्वथा वेदान्तश्रवणेन ज्ञानं प्रयत्नेन सम्पादनीयमिति सूचितम्भगवता। न च संन्यसनादेव सिद्धिं समधिगच्छतीति चकारस्त्वर्थः संन्यासयोगा-

यतय इत्यत्र ब्रह्मविदां यतीनां ब्रह्मण्यारोपितनामरूपग्रहणत्यागः संन्यासशब्देनोच्यते न तु कर्मसंन्यासः यतय इति यतिपदेनैव संन्यासस्य सिद्धत्वादन्यथा पुनरुक्तिप्रसङ्गस्तस्माद्यतेः संन्यासस्य फलं वेदान्तश्रवणजन्यज्ञानमेवेति सिद्धम् ॥ ४ ॥

अन्येतु इदं श्लोकद्वयमित्थं योजयन्ति तथाहि एवमधिकारिभेदेऽर्जुनेन पृष्टे तदनुरूपमुत्तरं श्रीभगवानुवाच लोके इति हेऽनघ निष्पाप अस्मिन् शास्त्रोक्तानुष्ठानाधिकृते लोके शुद्धाशुद्धान्तःकरणभेदेन द्विविधे जने द्विविधा उपायोपेयभेदेन द्विप्रकारा निष्ठाऽनुष्ठेयतात्पर्यं ज्ञानपरत्वं कर्मपरत्वं चेत्यर्थः। एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा न तु द्वे एव तन्त्रनिष्ठे इति कथयितुं निष्ठेत्येकवचनं पुरा सर्गादौ मया सर्वज्ञेनेश्वरेण प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयससाधनवेदार्थसम्प्रदायमाविःकुर्वता प्रोक्ता प्रकर्षेण स्पष्टत्वलक्षणेनोपदिष्टा सैवेह पूर्वाध्याये तवात्यन्ताहितकारिणा प्रोक्ता त्वां प्रत्युपदिष्टा तथाचाधिकार्यैक्यशङ्कया मा ग्लासीरिति भावः। भवच्चित्तशुद्ध्यर्थमेव त्वां स्वधर्मे नियोजयामि न स्वार्थमितिसूचनार्थमनघेति सम्बोधनम्। उद्देश्ययोग्यतासूचनायेत्यन्ये। निष्ठा द्विप्रकारत्वमेवाह सङ्ख्या संशयविपर्ययादिरहितात्मतत्वबुद्धिस्तद्वतां साङ्ख्यानां ज्ञानभूमिमारूढानां युज्यते ब्रह्मणाऽनेनेति योगः ज्ञानमेव योगस्तेन ज्ञानयोगेन निष्ठोक्ता तानि सर्वाणि संयम्य युक्त आसीत मत्पर इत्यादिना। योगिनामशुद्धान्तःकरणानां ज्ञानभूमिमनारूढानां कर्माधिकारयोगिनां कर्मयोगिनां युज्यतेऽन्तःकरणशुद्ध्याऽनेनेति योगः कर्मैव योगस्तेन निष्ठोक्ताऽन्तःकरणशुद्धिद्वारा ज्ञानभूमिकारोहणार्थं धर्म्याद्धि युद्धादित्यादिना। अतो न ज्ञानकर्मणोः समुच्चयो विकल्पो वा किन्तु निष्कामकर्मणा शुद्धचित्तानां सर्वकर्मसंन्यासेनैव ज्ञानमिति चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैकमेव त्वां प्रति द्विविधा निष्ठोक्ता एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणिवति अतो भूमिकाभेदेनैकमेव प्रत्युभयोपयोगान्नाधिकारभेदेप्युपदेशवैयर्थ्यमित्याशयः ॥ ३ ॥

तत्किङ्कर्मणि घोरे मां नियोजयसि केशवेति वदन्तं खिन्नचित्तमर्जुनं क्लेशात्मकं कर्म न कर्तव्यमित्येवं मन्वानमालक्ष्याह नेति। यद्वा निष्ठेत्येकवचनेन सूचितं कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थसाधनत्वं ज्ञाननिष्ठायास्तु कर्मनिष्ठोपायलब्धस्वरूपायाः स्वातन्त्र्येणैव पुरुषार्थहेतुत्वं च स्पष्टं वक्तुमारभते नेति। कर्मणां तमेतं वेदानुवचनेन ब्राह्मणा

विविदिषन्ति यज्ञेन दानेन तपसा नाशकेनेति श्रुत्या ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण इति स्मृत्या सर्वापेक्षा च यज्ञादिश्रुतेरिति सूत्रेण च चित्तशुद्धिद्वारा ज्ञानं पायत्वेनविहितानामनारम्भादकरणाच्चित्तशुद्ध्यभावेन ज्ञानायोग्यो बहिर्मुखः पुरुषो नैष्कर्म्यं सर्वकर्मशून्यत्वं ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानं नाश्नुते न प्राप्नोति किन्तु तेषामनुष्ठान-चितशुद्धिद्वारा ज्ञानप्राप्त्या प्राप्नोतीत्यर्थः। नैष्कर्म्यं ज्ञानं चित्तशुद्ध्यभावान्न प्राप्नोतीति वाऽर्थः । नन्वभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेदिति कर्मसंन्यासादपि नैष्कर्म्यप्राप्तिश्रवणात्तदर्थिनः किं कर्मारम्भेणेति चेत्तत्राह संन्यसनात् ज्ञानशून्याच्चित्तशुद्धिशून्याद्वा कर्मत्यागमात्रात् सिद्धिं मोक्ष-लक्षणां ज्ञाननिष्ठालक्षणां वा सम्यक्फलपर्यवसायित्वेन न चाऽधिगच्छति नैव प्राप्नोतीत्यर्थः । कर्मजन्यां चित्तशुद्धिं विना संन्यास एव न सम्भ-वति यथाकथंचिदौत्सुक्यमात्रेण कृतोऽपि न फलपर्य्यवसायीति भावः ॥ ४ ॥

यदुक्तं सर्वकर्मसंन्यासं कृत्वाऽहं तूष्णीं सुखमास इति तन्न रजःप्रवृत्तेः क्रियाया निःशेषत्यागायोगाद् वृत्त्यरालम्बनाभावाच्च तूष्णीमासनं ब्रह्म-निष्ठां विना न कस्यापि घटत इत्याशयेनाह—

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**

**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

नहीति । अत्र लोके जातु कदाचिदपि कश्चिद्यो वा को वापि प्राणी क्षणं क्षणार्धमप्यकर्मकृत् किमपि कर्माकुर्वन्न तिष्ठति किन्तु सुषुप्तिं विना जाग्रत्स्वप्नयोः कायेन वा मनसा वा वाचा वा चक्षुरादिभिर्वा यत्किञ्चित्कर्म कुर्वन्नेव तिष्ठति न क्वचिदपि तूष्णीमित्यर्थः । इदं सर्वं प्रत्यक्षमिति प्रसिद्धिद्योतनार्थो हिः । कस्मात्तूष्णीं स्थातुं न शक्नोतीत्याकांक्षायामाह कार्यत इति । हि यस्मात्कारणात्सर्वोपि प्राणि-वर्गः प्रकृतिजैः सत्वरजस्तमोगुणात्मिका मूलप्रकृतिस्तस्याः सकाशा-ज्जाताः प्रकृतिजास्तैर्गुणैः गुणाः द्रव्यवासना गुणवासनाः कर्मवासना जाति-वासना रागद्वेषादयश्च तैः प्रकृतिजैर्गुणैरन्तः प्रेर्यमाणोऽवशो ऽस्वतन्त्रः सन्नेव बहिरन्तः कर्म नानाव्यापाररूपं कार्यते वासनात्मिकायाः प्रवृत्तेर्वशो भूत्वा न कोऽपि तूष्णीं स्थातुं शक्नोति विना ब्रह्मविद्वर्यं ब्रह्मविद्वर्यस्तु निर्विक-ल्पसमाध्यग्निना निर्मूलितप्रकृतिगुणतत्कार्यतूलपटलत्वाद्वायुना मेरुरिव

स्वयं गुणैर्न चाल्यते किन्तु निष्क्रियब्रह्मात्मना तूष्णीमेव तिष्ठति उदासीनवदासीनो गुणैर्यो न विचाल्यत इति स्मरणात्ततो ब्रह्मविद्वर्य एक एव तूष्णीं स्थातुं शक्नोति न ततोऽन्य इत्यर्थः ॥ ५ ॥

ननु सर्वं कर्म संन्यस्य करपादादीन्द्रियग्रामं रुद्ध्वा बहिस्तूष्णीं स्थाणुवन्निश्चल्येन स्थातुं शक्यत एवेत्याशङ्कायां बन्धमोक्षयोर्गतिं स्वाधिकारं वा विज्ञाय किं कर्मणा निष्फलक्लेशभूयिष्ठेनेति दुरहङ्कारेण मुक्तिसाधनं सर्वं कर्म संन्यस्य यस्तूष्णीं तिष्ठति स दम्भाचार इत्याह—

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**

**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥६॥**

कर्मेन्द्रियाणीति । विमूढः कार्यविवेकरहित आत्मा मनो यस्य स विमूढात्मा सन् स्वस्य कर्त्तव्यं मुक्तिसाधनं कर्म परित्यज्य बहिः कर्मेन्द्रियाणि संयम्य निरुद्ध्य चक्षुर्षा निमील्यान्तरिन्द्रियार्थान् शब्दादीन् स्मरन् चिन्तयन् य आस्ते ब्रह्मविदहमेव कर्मसंन्यासेन कृतार्थोऽस्मीति स मिथ्याचारोऽसदाचारः कपटचारित्र आत्मवञ्चक इति सद्भिरुच्यत इत्यर्थः । एतेन श्रवणार्थं वाऽन्यथा वा संन्यस्य श्रवणादिकमकृत्वा वेषेण जीवनं कुर्वन्संन्यासेनैव कृतार्थोऽहमिति यो यतिर्मन्यते सोऽपि मिथ्याचारएवेति सूचितं भवति ॥ ६ ॥

अनात्मज्ञस्य मुमुक्षोः कर्मसंन्यासापेक्षया कर्मयोग एव श्रेष्ठ इत्याह—

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**

**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

यस्त्विति । तु शब्दः पूर्वस्मादस्य श्रेष्ठत्वद्योतनार्थः यस्त्वनात्मज्ञो मुमुक्षुर्विचक्षणः कर्मसंन्यासमकृत्वैव चक्षुरादीनीन्द्रियाणि रागद्वेषादिगोचराणि यथा न भवेयुस्तथान्तर्नियम्य स्वयमसक्तः फलाभिसन्धिरहितो भूत्वेश्वरार्पणबुद्ध्या कर्मेन्द्रियैर्वागादिभिः कर्मयोगं श्रौतं स्मार्तं वाऽऽरभते श्रद्धया चित्तशुद्ध्यै करोति स विशिष्यते मोक्षसाधनीभूतकर्मयोगनिष्ठत्वात्कर्मयोगी पूर्वोक्तदाम्भिककर्मसंन्यास्यपेक्षया श्रेष्ठ इत्यर्थः ।

अन्ये तु इदं त्रयमित्थं योजयन्ति कस्मात्पुनः कारणात्कर्मसंन्यासमात्रान्न सिद्धिं प्राप्नोतीति हेत्वाकांक्षायामाह नहीति । हि यस्मात् क्षणमपि कालं

जातु कदाचिदप्यशुद्धचित्तोऽज्ञः पुरुषोऽकर्मकृत्कर्माण्यकुर्वन्सन्न तिष्ठत्यपि तु लौकिकवैदिककर्मानुष्ठानसंलग्न एव तिष्ठति तस्मादशुद्धचित्तस्य संन्यासो न सम्भवतीत्यर्थः । कस्मात्पुनरज्ञो कर्माण्यकुर्वाणो न तिष्ठति हि यस्मात्सर्वो जनोऽज्ञोऽशुद्धचित्तोऽवशो स्वतन्त्र एव सन् प्रकृतिजैः प्रकृतेरभिव्यक्तैः कार्याकारेण सत्वरजस्तमोभिः स्वभावप्रभवैर्वा रागद्वेषादिभिर्गुणैः कर्म लौकिकं वैदिकं वा कार्यते कर्मणि प्रवर्त्यतेऽतः कर्माण्यकुर्वाणो न कश्चिदपि तिष्ठतीत्यर्थः । यतो गुणैश्चाल्यमानोऽत एव तत्परवशतया सर्वदा कर्माणि कुर्वतोऽज्ञस्याशुद्धबुद्धेः सर्वकर्मसंन्यासो न सम्भवत्यतएव च तन्निबन्धना ज्ञाननिष्ठाऽपि तन्निबन्धनं नैष्कर्म्यं च न सम्भवति ततस्तस्य निष्कामकर्मण्येवाधिकारः विदुषस्तु गुणातीतत्ववचनात्तत्प्रयुक्तचलनाभावान्न कर्मयोगः सम्भवतीति भावः ॥ ५ ॥

ननु हठात्कर्मेन्द्रियाणि संयम्याकर्मकृद्भविष्यतीत्याशङ्क्य यस्त्वनात्मज्ञोऽशुद्धचित्तो हठात्कर्मेन्द्रियाणि नियम्य विहितकर्म न करोत्यौत्सुक्यमात्रेण तु तत्संन्यस्यति स तूभयभ्रष्ट इत्याह कर्मेन्द्रियाणीति । यो विमूढात्मा रागद्वेषादिदूषितान्तकरणः औत्सुक्यमात्रेण वाक्पाण्यादीनि कर्मेन्द्रियाणि संयम्य हठान्निगृह्य तैर्विहितं कर्माकुर्वन् रागादिप्रेरितेन मनसा शब्दादीनिन्द्रियार्थान्स्मरन्नास्ते कृतसंन्यासोऽहमित्यभिमानेन कर्मशून्यास्तिष्ठति नत्वात्मतत्त्वं स्मरन्नास्ते स मिथ्याचारः चित्तशुद्ध्यभावेन फलायोग्यत्वादसदाचारः पापाचार उच्यते ।

त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्येह विहितो यस्मात्तत्यागी पतितो भवेत् ॥

इत्यादिधर्मशास्त्रेण अतो न च संन्यसनादेवाशुद्धचित्तः सिद्धिं समधिगच्छतीत्युपपन्नम् ॥ ६ ॥

अनात्मज्ञस्य विहितं कर्माकुर्वतो जाग्रतो विषयान्तरदर्शनध्रौव्यान्मिथ्याचारत्वेन प्रत्यवायित्वमुक्त्वा तस्यैव विहितं कुर्वतो निष्कामस्य सदाचारत्वेन वैशिष्ट्यमाह यस्त्विति । तु शब्दो शुद्धचित्तकर्मत्यागिभेदार्थः हेऽर्जुन यस्त्वज्ञः कर्मण्याधिकृतः विवेकवैराग्ययुक्तेन मनसा ज्ञानेन्द्रियाणि श्रोत्रादीनि नियम्य पापहेतुशब्दादिविषयासक्तेर्निवर्त्य कर्मेन्द्रियैर्वाक्पाण्यादिभिः कर्मयोगं चित्तशुद्धिहेतुतया विहितं कर्मारभते करोत्यसक्तो निष्कामः सन्स इतरस्मान्मिथ्याचाराद्विशिष्यते परिश्रमसाम्येऽपि फलातिशयभाक्त्वेन श्रेष्ठो भवति हेऽर्जुनात्याश्चर्यमिदं पश्य यदेकः कर्मेन्द्रियाणि

नियमन् ज्ञानेन्द्रियाणि व्यापारयन्पुरुषार्थशून्यो परस्तु ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियाणि व्यापारयन्परमपुरुषार्थभाग्भवतीति त्वमप्येवमेव कुर्वन् शुद्धचित्तो भविष्यसीति सूचनाय सम्बोधनमर्जुनेति ॥ ७ ॥

नित्यं कर्म नियमेन कर्तव्यमित्यत्र हेतुमाह—

**नियतङ्कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**

**शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

नियतमिति । त्वं प्रागकृतचित्तशुद्धिहेतुकर्मा नियतं विध्युद्देशेन फलसम्बन्धशून्यतया नियतं निमित्तेन विहितं कर्म श्रौतं स्मार्तं च नित्यमितिप्रसिद्धं सन्ध्योपासनादि कुरु । कुतोऽशुद्धचित्तेन कर्मैव कर्तव्यं हि यस्मादकर्मणः कर्माकरणात्कर्मैव ज्यायः श्रेष्ठतरम् । न केवलं कर्माकरणे तव चित्तशुद्धिरेव न स्यादपि त्वकर्मणो युद्धादिकर्मरहितस्य ते तव शरीरयात्रा देहनिर्वाहोऽपि प्रकर्षेण क्षात्रवृत्त्या न सिद्ध्येत् चित्तशुद्धिरपि न स्यादित्यपिचेतिनिपातयोरर्थः ।

अन्ये तु मुमुक्षोर्नैष्कर्म्यसिद्धये मिथ्याचारत्वदोषनिवृत्तये चावश्यं कर्म कर्तव्यमितिसूचयितुमाह नियतमिति । हि यस्मात्कारणादकर्मणः पुरुषस्य कर्मबन्धो येन न सम्भाव्यते सोऽकर्म कर्मसंन्यासस्तस्मादकर्मणो मूढकर्तृकाद्विवेकवता मोक्षसाधनत्वेन क्रियमाणं कर्म ज्यायः श्रेष्ठम् । यद्यपि संन्यासएवात्यरेचयदिति संन्यासस्यैव सर्वोत्कृष्टतमत्वं श्रूयते तथापि योग्यप्रयुक्तं साधनं कार्यसाधकमिति न्यायेन नाऽहं कर्म करोमीत्यभिमानवन्मूढतमकृतत्वात्संन्यासस्य तदपेक्षया परमेश्वरमाराध्याहं तरिष्यामीतीश्वरार्पणबुद्ध्या निरभिमानिना मुमुक्षुणा क्रियमाणत्वात्कर्म ज्याय इत्युपचर्यते न तु संन्यासो दूष्यते किन्तु विद्वत्संन्यासाद्विविदिषासंन्यासाद्विलक्षणः संन्यासः स्वस्थेन न कर्तव्य इत्युच्यते तत्र विध्यभावाद् यत आत्मतत्त्वमज्ञात्वैव केवलमूढेनाविविदिषुणा कर्मसंन्यासः कृतश्चेत्तेन प्रत्यवाय एकोऽनर्थः नरकपातो द्वितीयः दुर्योनिस्तृतीयः मोक्षाभावश्चतुर्थः कृते तु कर्मणि प्रत्यवायाभावः ईश्वरप्रसादश्चित्तशुद्धिर्ज्ञानं मोक्षश्च सिध्यत्यतः फलभूयस्त्वात्कर्मणस्त्वं नियतं विद्ध्युक्तं कर्म नित्यं वा नैमित्तिकं वेश्वरप्रीत्यर्थं चित्तशुद्ध्यर्थं च कुर्वित्यर्थः । न केवलमामुष्मिकफलार्थमेव कर्म कर्तव्यं किन्त्वैहिकार्थमपि कर्तव्यमित्याह शरीरेति । निश्चलात्मना स्थाणुवत्तूष्णीमवस्थानं खल्वकर्म कर्मसंन्यासस्तस्मादकर्मणो निःशेषक-

र्मपरित्यागात्ते शरीरयात्राऽपि न प्रसिद्ध्येत् सुखेन न सिध्यतीत्यर्थः न हि बृहच्छिलावद् गुहायां कन्दरे वा तूष्णीं तिष्ठतः शरीरयात्रा सिद्ध्यति यत्किञ्चित्तदनुकूलं व्यापारं विना ततस्तदर्थमपि कर्म कर्तव्यमेव । ननु यावत्कर्मणा शरीररक्षणं सिध्येत्तावत्कर्म कुर्यां न ततोऽतिरिक्तमिति चेत् ततएव भवानतिमूढः संन्यासानर्हश्च यतः स्वेतरस्यैवानात्मनो देहस्य रक्षणं कर्तुमिच्छति न त्वात्मनः तवायमात्मा जननमरणप्रवाहे पतित्वा मुहुर्मुहुर्निमज्योन्मज्जन्निरन्तरं दुःखेन क्लिश्नाति त्वमात्मनस्त्राणमकृत्वाऽनात्मनः शरीरेव त्राणाय यतसे इतोऽपि वा दुरभिमानं त्यक्त्वा कर्मणा शरीरत्राणमत्यन्तास्थया यथा करोषि तथा विहितानि कर्माण्यनुष्ठाय तेन प्राप्तचित्तशुद्ध्याऽत्मज्ञानमपरोक्षलक्षणं सम्पाद्यात्मानं दुःखसागरादुद्धारय उद्धरेदात्मानमितिवचनादात्मनो मोक्षार्थमेव कर्म कुरु न क्वचिदप्यन्यार्थमित्यर्थ इत्याहुः ॥ ८ ॥

सर्वमपि कर्म बन्धकत्वान्न कार्यमिति साङ्ख्या वदन्ति तान्निषेधयति—

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

यज्ञार्थादिति । यज्ञो वै विष्णुरिति श्रवणाद्यज्ञो विष्णुस्तस्य यज्ञस्य श्रीविष्णोः परमेश्वरस्यार्थे सन्तुष्टिनिमित्तं यत्कर्म क्रियते वैदिकं तद्यज्ञार्थमित्युच्यते तस्माद्यज्ञार्थात्कर्मणो नित्यादीश्वरप्रीतिहेतोरन्यत्र काम्यादौ कर्मणि प्रसक्तोऽयं लोको ब्राह्मणाद्यधिकारी जनः कर्मबन्धनो भवति कर्मैव बन्धनं जन्मादेर्निबन्धनं हेतुर्यस्य स कर्मबन्धनो भवति विहिताकरणेन वा काम्येन निषिद्धेन वा कृतेन कर्मणा नरो बन्धनवान्भवति नत्वीश्वरप्रीत्यै क्रियमाणेन कर्मणा तत्कर्म यन्न बन्धायेतिस्मरणादीश्वराराधनात्मकमेव कर्माबन्धकं तदन्यत्तु बन्धकमित्यर्थः . ततस्तदर्थमीश्वरप्रीत्यर्थमवश्यं त्वं मुक्तसङ्गः फलाभिलाषरहितो भूत्वा विहितं कर्म समाचर सम्यगनुतिष्ठ तेन तुष्टेश्वरप्रसादात् शुद्धात्मा सन् ज्ञानं प्राप्य मुक्तो भविष्यसीत्यर्थः। अनीश्वरसाङ्ख्यमतन्त्वप्रमाणकत्वादनादेयमग्रे भगवतैव दूषितत्वादिति ध्येयम् ।

अन्ये तु इत्थं योजयन्ति ननु कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते इति स्मृत्या कर्मणो बन्धकत्वोक्तेर्न तत्कर्तव्यमित्याशङ्क्याह यज्ञार्थादिति । हे कौन्तेय यज्ञो वै विष्णुरिति श्रुतेः यज्ञार्थादीश्वरार्थात्क-

र्मणोऽन्यत्रान्येन कर्मणाऽयं लोकः कर्माधिकृतो जनः कर्मबन्धनः कर्मबन्धनं यस्य सः अन्यत्र कर्मणि प्रवृत्तोऽयं लोकः कर्मणा बध्यते नत्वीश्वराराधनार्थेनेति कर्मबन्धन इत्यपरे । अतस्त्वं कर्मण्यधिकृतो मुक्तसङ्गः निष्कामस्सँस्तदर्थं यज्ञार्थं कर्म समाचर सम्यक् श्रद्धादिपूर्वकं कुरु स्वपक्षग्रहणोत्साहार्थं सम्बोधनम् ॥ ९ ॥

प्रजापतिवचनादप्यधिकृतेन कर्म कर्त्तव्यमित्याह चतुर्भिः सहयज्ञा इत्यादिभिः—

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥**

प्रजापतिः प्रजास्रष्टा सह यज्ञेनावश्यकेन विहितकर्मणा वर्तन्ते इति सहयज्ञाः कर्माधिकृताः प्रजाः त्रैवर्णिकान्पुरा कल्पादौ सृष्ट्वोत्पाद्योवाचोक्तवान् । किमुवाचेत्यत्राह अनेन यज्ञेन स्वाश्रयोचितधर्मेण प्रसविष्यध्वं उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः । कथमनेन वृद्धिः स्यादत्राह एष यज्ञाख्यो धर्मः वो युष्माकं इष्टकामधुक् इष्टानभिमतान्कामान्काम्यानि फलानि दिग्धि प्रापयतीति तथा अभीष्टभोगप्रदोऽस्त्वित्यर्थः । नन्वत्र काम्यकर्मणोऽप्रकृतत्वान्मा कर्मफलहेतुर्भूरित्यनेन निराकृतत्वाच्च यज्ञग्रहणमावश्यककर्मोपलक्षणार्थमत एष वोऽस्त्विष्टकामधुगिति कथमिति चेन्नित्यकर्मणामप्यानुषङ्गिकफलसद्भावादेतदुपपद्यत इत्यवेहि ॥ १० ॥

कर्मणामिष्टकामदोग्धृत्वप्रकारमेवाह—

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**

देवानिति । हे प्रजाः अनेन यज्ञेन यूयं देवानिन्द्रादीन् भावयत हविर्भागैः संवर्द्धयत समर्पयत ते देवा युष्माभिर्भाविताः सन्तो वो युष्मान्भावयन्तु वृष्ट्यादिनान्नोत्पत्तिद्वारेण संवर्द्धयन्तु एवमन्योन्यं संवर्द्धयन्तो देवाश्च यूयं च परं श्रेयोऽभिमतमर्थं प्राप्स्यथ देवास्तृप्तिं प्राप्स्यान्ति यूयं च स्वर्गाख्यं परश्रेयः प्राप्स्यथेत्यर्थः ॥ ११ ॥

न केवलं पारत्रिकमेव फलं किन्त्वैहिकमपीति वदन् तदकरणे दोषमाह—

**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥**

इष्टानिति । हि यस्मात् यज्ञैर्भाविताम्तोषिताः सन्तो देवा वो युष्मभ्यं इष्टानभिलषितान्भोगान् पशुपुत्रान्नसुवर्णादीन् दास्यन्ते तैर्देवैर्ऋणवद्दत्ता-न्भोगानेभ्यो देवेभ्योऽप्रदाय यज्ञेषु देवोद्देशेनाहुतीरसम्पाद्य यो भुङ्क्ते देहे-न्द्रियाण्येव तर्पयति स स्तेनएव तस्करएव देवर्णानपाकरणादित्यर्थः ॥ १२ ॥

देवानामृषीणां पितृणां च यज्ञेन ब्रह्मचर्य्येण प्रजया च सन्तोषमना-पाद्य स्वकीयं कार्यकारणसङ्घातमेव पोष्टुं भुञ्जानस्तस्करो भवतीति देवादिभ्यः संविभागमकृत्वा भुञ्जानानां प्रत्यवायित्वमुक्त्वा तदन्येषां सर्व-दोषराहित्यं दर्शयति—

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**

**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

यज्ञेति । ये पुनर्यज्ञान् अध्यापनमध्ययनं च ब्रह्मयज्ञः होमो देवयज्ञः तर्पणं श्राद्धं च पितृयज्ञः भूतेभ्यो बलिप्रदानं भूतयज्ञः अतिथिपूजनं नृयज्ञः इत्युक्तान् कृत्वा तच्छिष्टममृतमशितुं शीलं येषान्ते तादृशाः सन्तः । सर्वकिल्बिषैः—

कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी ।
पञ्चसूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥

इतिस्मृत्युक्तेः पञ्चसूनाकृतैरन्यैश्च सर्वपापैर्मुच्यन्ते भूतभाविपातकासं-सर्गिणो भवन्तीत्यर्थः । ये त्वन्ये पापाः पञ्चसूनानिमित्तेन प्रमादकृत-हिंसादिनिमित्तेन च कृतपापाः सन्तश्चात्मकारणात् स्वोदरपूरणार्थं न तु वैश्वदेवाद्यर्थं पाकं कुर्वन्ति तेऽघं पापं भुञ्जते पञ्चसूनादिकृतपाप विद्यमान एव वैश्वदेवादिनित्यकर्माकरणनिमित्तमपरं पापमाप्नुवन्तीत्यर्थः तथाचाधिकृतेन नित्यानि कर्माण्यवश्यमनुष्ठेयानीति प्रजापतिवचनतात्पर्यं बोध्यम् ॥

अन्ये तु पूर्वं नैष्कर्म्यसिद्धये मिथ्याचारत्वनिवृत्तये शरीरयात्रा-सिद्धये चावश्यं कर्म कर्तव्यमित्युक्त्वेदानीं धर्मज्ञसमयः प्रमाणमिति सूत्रोक्तरीत्या धर्मज्ञतमेन ब्रह्मणा प्रोक्तः प्रामाणिकोऽयं परमो धर्मो मुमुक्षू-णामवश्यं कर्त्तव्य इन्द्रादिदेवताप्रसादसिद्ध्य इत्याह सहेति द्वाभ्यां । पुरा सृष्ट्यादौ प्रजापतिर्ब्रह्मा श्रुत्युक्तैर्यज्ञैः सहप्रजा ब्राह्मणादिवर्णान् सृष्ट्वा ताः प्रजा उवाच भो प्रजा यूयं अनेन श्रौतेन स्मार्त्तेन च यज्ञेन प्रसविष्यद्ध्वं चरुपुरोडाशाद्रिद्रव्यैर्देवानां प्रीतिमुत्पादयद्ध्वं पुत्रपौत्रादयुत्तरोत्तराभिवृद्धिं

भजद्ध्वमिति वा तत्र हेतुः एष देवानुद्दिश्य श्रद्धया कृतो यज्ञोऽपि वो युष्माकं इष्टानिच्छाविषयभूतान्काम्यन्त इति कामाः फलविशेषास्तान्दोग्धीतीष्टकामधुक् भवति निष्कामानां ज्ञानप्रतिबन्धकदुरितक्षयाय सकामानां स्वर्गसुखाय भवेदित्यभिप्रायः ॥ १० ॥

कथमयमस्माकमिष्टार्थाय भवतीत्यत आह । अनेन श्रौतेन स्मार्तेन च यज्ञेन यूयं देवानिन्द्रादीन्भावयत सम्भावयत चरुपुरोडाशादिभिः सन्तुष्टान्कुरुतेत्यर्थः । अनेन सम्भावितास्तुष्टाः सन्तस्ते देवा इन्द्रादयो वो युष्मान्भावयन्तु इष्टार्थप्रदानेन सन्तोषयन्तु एवं परस्परं भावयन्तस्सन्तो यूयं देवानां प्रसादेन निःशेषविनष्टप्रतिबन्धा भूत्वा सत्त्वशुद्ध्या सम्यग्ज्ञानं प्राप्य परं निरतिशयानन्दलक्षणं श्रेयो विदेहकैवल्यमवाप्स्यथ यद्यप्यत्र परस्परं भावयन्तः श्रेयः परमवाप्स्यथेत्युभयेषां परमश्रेयःप्राप्तिविधिः प्रतीयते तथापि विचार्यमाणे प्रजानामेव धर्मोपदेशविषयत्वेनोक्तधर्मानुष्ठानलभ्यपरमश्रेयःप्राप्तिविधिर्न तु तदनुग्राहकाणां देवानां तेषामुपदेशाविषयत्वात्स्वयंप्रभातविज्ञानत्वाज्जीवन्मुक्तत्वाच्च न श्रेयोविधिरुपयुज्यतेऽतः सम्भावनायामेव परस्परपदस्य सम्बन्धो न तु परमश्रेयःप्राप्तिविधाविति ज्ञेयम् ॥ ११ ॥

यज्ञैः सम्भाविताः देवाः मुमुक्षूणां न केवलमामुष्मिकमेव सुखं प्रयच्छन्ति किन्त्वैहिकसम्पत्सुखमप्यतस्तेषां प्रीत्यै यज्ञाद्यवश्यं कर्त्तव्यमन्यथा प्रत्यवायी भवतीति सूचयितुमाह इष्टानिति । यज्ञैः श्रौतैः स्मार्तैश्च भाविताः सम्भाविता देवा वो युष्मभ्यमिष्टानिच्छाविषयभूतान्भोगान्पशुपुत्रकलत्रधनधान्यादीन् दास्यन्ते वितरिष्यन्ते एवं तैर्देवैर्दत्तान्पदार्थान्पुनश्चरुपुरोडाशादिरूपेणैभ्यो देवेभ्योऽप्रदायादत्त्वा देवानामृषीणां पितॄणां च यज्ञेन ब्रह्मचर्येण प्रजया चानृण्यमकृत्वा यः स्वशरीरमेव पोष्टुं भुङ्क्ते सः स्तेनो देवादीनां चोर एव भवति शिष्टानां निन्द्यश्च देवब्रह्मस्वहारिणस्तस्करस्य या गतिस्तां च गच्छतीत्यर्थः ॥ १२ ॥

ये तु पञ्च महायज्ञान्कृत्वाऽवशिष्टान्नाशिनो भवन्ति ते सर्वपापैर्मुक्ता भवन्ति ये तु देवतातिथ्यादीननुद्दिश्य स्वार्थमेव पचन्ति ते पापाशिन एवेति पञ्चमहायज्ञानुष्ठानाननुष्ठानयोः फलं प्रतिपादयति यज्ञेति । पञ्चमहायज्ञानां दैनन्दिनत्वेनावश्यकर्तव्यत्वदार्ढ्याय ब्राह्मणादयो यज्ञशिष्टाशिनः सन्तो देवयज्ञः पितृयज्ञ इतिश्रुत्युक्तपञ्चमहायज्ञाननुष्ठाय तच्छेषान्नभाजिनो भूत्वा सर्वकिल्बिषैः—

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥**

कर्मेति । कर्म वेदविहितमपूर्वसाधनं ब्रह्मोद्भवं ब्रह्म वेद उद्भवः प्रमाणं यस्य तथा विद्धि जानीहि तच्च ब्रह्माक्षरसमुद्भवं अक्षरात्परमात्मनो निर्दोषात्पुरुषानिश्वासन्यायेनाबुद्धिपूर्वं समुद्भव आभिर्भावो यस्य तदक्षरसमुद्भवं अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इत्यादिश्रुतेः तथा चापौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कं वेदवाक्यमेवातीन्द्रियेऽर्थे प्रमाणं न तु भ्रमप्रमादादिदोषवत्प्रणीतं पाखण्डवाक्यमिति भावः । यस्मात्साक्षात्परमात्मसमुद्भवं तस्मात् सर्वार्थप्रकाशकत्वात् सर्वगतमपि सद्ब्रह्म वेदाख्यं नित्यं सदा यज्ञे धर्माख्ये प्रतिष्ठितं तात्पर्येण विधिप्रधानत्वात्तस्येत्यर्थः तथा च पाखण्डोक्तोपधर्मत्यागेन वेदबोधित एव धर्मोऽनुष्ठेय इति भावः ॥ १५ ॥

अधिकृतेनाध्ययनादिद्वारा जगच्चक्रमनुवर्तनीयमन्यथेश्वराज्ञातिलङ्घिनस्तस्य प्रत्यवायः स्यादित्याह—

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघम्पार्थ स जीवति ॥१६॥**

एवमिति । आदौ परमेश्वरात्सर्वावभासकान्नित्यनिर्दोषवेदाविर्भावः ततः कर्मज्ञानं ततस्तदनुष्ठानाद्धर्मोत्पादस्ततोवृष्टिस्ततोऽन्नं ततो भूतानि पुनस्तथैव भूतानां कर्मप्रवृत्तिरित्येवं परमेश्वरेण प्रवर्त्तितं चक्रं सर्वजगन्निर्वाहकं यो नानुवर्तयति नाऽनुतिष्ठति स अघायुः पापजीवनो मोघं व्यर्थमेव जीवति तस्य जीवनान्मरणमेव वरं जन्मान्तरे धर्मानुष्ठानसम्भवादित्यर्थः । ब्रह्मविदं व्यावर्तयन्हेतुमाह यत इन्द्रियैर्विषयेष्वारमते इतीन्द्रियारामः अतः कर्माधिकारी संस्तदकरणात्पापमेवाचिन्वन्व्यर्थमेव जीवतीति भावः । त्वाया तु जगच्चक्रप्रवर्तकस्य ममानुसरणेनावश्यं कर्म कर्तव्यमिति सम्बोधनाशयः ॥

अन्ये तु मुच्यन्ते सर्वकिल्विषैरिति नैष्कर्म्यं पुरुषोऽश्नुत इति कर्मणो मोक्षहेतुत्वं प्रतिपादितं जगत्स्थितिहेतुत्वमिदानीं निरूप्यते त्रयेण ।

अग्नौ प्रास्ताऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

बहोर्णीष्ठे भूय् ॥ २ । ३ । ५४ ॥

बहु इत्येतस्य णीष्ठयोः भूय् इत्यादेशो भवति । भूययति । भूयिष्ठः ।

भूलुक् चेः ॥ २ । ३ । ५५ ॥

बहोरीयसाविमनि च परतः भू इत्यादेशो भवति अनयोश्च इवर्णस्य लुग्भवति । भूयान् । भूयांसौ । भूयांसः । भूमा । भूमानौ । भूमानः । अवस्वयंभुव इत्यवादेशे प्राप्ते भू ऊरित्यूकारप्रश्लेषादवादेशो न भवति ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य स्वादेरेङ् चेकः ॥२। ३।५६ ॥

स्थूलादीनां णीष्ठेयस्सु इमनि च परतः लरवादेर्लुग्भवति एङ् चेकः । स्थवयति । स्थविष्ठः । स्थवीयान् । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति । एवं शेषेष्वपि योज्यं । ह्रस्वक्षिप्रौ पृथ्वादी ।

अन्त्याजादेः ॥ २ । ३ ५७ ॥

तृ प्रत्ययस्यान्त्याजादेश्चावयवस्य णीष्ठेयस्सु इमनि च परतः लुग्भवति । कर्तृमन्तमाचष्टे करयति । करिष्ठः । करीयान् । करिमा । पटयति । पटिष्ठः । पटीयान् । पटिमा । लघयति । लघिष्ठः । लघीयान् । लघिमा ।

नैकाचः ॥ २ । ३ ॥ ५८ ।

एकाचः शब्दरूपस्य योऽन्त्याजादिरवयवस्तस्य णीष्ठेयस्सु इमनि च परतः लुग्न भवति । स्रग्विणमाचष्टे स्रजयति । स्रग्वितमः । स्रजिष्ठः । स्रग्वितरः । स्रजीयान् । स्रजिमा । स्रुग्वंतमाचष्टे स्रुचयति । स्रुचिष्ठः । स्रुचीयान् । स्रुचिमा । योगविभागात् एरित्यस्यापि निषेधः । श्रेष्ठः । श्रेयान् ।

दण्डिहस्तिनः फे ॥ २ । ३ । ५९ ॥

दण्डिन्हस्तिनोः फप्रत्ययेऽन्त्याजादेर्लुग्न भवति। नोऽप-दस्येति प्राप्तिः । दण्डिनोऽपत्यं दाण्डिनायनः । हास्तिनायनः । फ इति किम् ? दण्डिनां समूहो दाण्डम् । हस्तिनां समूहो हास्तिकम् ।

वाशिजिह्माश्यध्वाथर्वयूनः फिढखठाके ॥ २ । ३ । ६० ॥

वाशिनाऽऽदीनां यथासंख्यं फयादिषु प्रत्ययेष्वन्त्याजा-देर्लुग्न भवति । वाशिनोऽपत्यं वाशिनायनिः । दोर्वा वृद्धादि-ति फिञ् । जिह्माशिनोऽपत्यं जैह्माशिनेयः । शुभ्रादिढण् । अध्वानमलंगामी—अध्वनीनः । अध्वानं यखौ । अथर्वणो वोढा ऽध्येता वा आथर्वणिकः । न्यायादिठण् । यूनो भावः यौव-निका । चौरादि वुञ् ।

येऽनोऽत्ये ॥ २ । ३ । ६१ ॥

अनित्येतदन्तस्य त्यवर्जिते ये प्रत्ययेऽन्त्याजादेर्लुग्न भवति । सामन्यः । वेमन्यः । तत्र साधाविति यः । मूर्धनि भवः मूर्धन्यः । तक्षणोऽपत्यं ताक्षण्यः । कुर्वादेर्ण्यः । अत्य इति किम् ? राज्ञो भावः कर्म वा राज्यम् ।

अणि ॥ २ । ३ । ६२ ॥

अन्नन्तस्याणि तद्धितेऽन्त्याजादेर्लुग्न भवति । सुत्वनो-ऽपत्यं सौत्वनः । सामदेवताऽस्य सामनम् । योगविभाग उत्तरार्थः ।

गाथिविदथिकेशिपणिगणिसंयोगादेरिनः ॥ २ । ३ । ६३ ॥

गाथिन्नित्यादीनां संयोग आदिर्यस्य इनस्तदंतस्य चाणिपरे ऽन्त्याऽजादेर्लुग्न भवति । गाथिनोऽपत्यं गाथिनः ।

वैदथिनः । कैशिनः । पाशिनः । पाशिनः । संयोगादेः । स्रग्विणः—स्राग्विणः । माद्रिणः । भाद्रिणः । चाक्रिणः । वाज्रिणः ।

अनपत्ये ॥ २ । ३ । ६४ ॥

इन्नन्तस्यानपत्ये योऽण् तस्मिन् परतोऽन्त्याजादेर्लुग्न भवति । सांराविणम् । गुणिन इदम्—गौणिनम् । मैधाविनम् । गर्भिणीनां समूहः गार्भिणम् । अनपत्य इति किम्? मैधावम् ।

ओऽवर्मणः ॥ २ । ३ । ६५ ॥

मन्नन्तस्यानपत्ये एवाण्यन्त्याजादेर्लुग्न भवति वर्मन् शब्दं वर्जयित्वा । चर्मणाच्छन्नः—चार्मणो रथः । सामदेवताऽस्य सामनम् । अणित्येव सिद्धे ओऽनपत्य एवेति नियमः सुषाम्नोऽपत्यं सौषामः । भाद्रसामः । अवर्मण इति किम्? चक्रवर्मणोऽपत्यं चाक्रवर्मणः ।

ब्राह्मम् ॥ २ । ३ । ६६ ॥

ब्रह्मन्शब्दस्यानपत्येऽण्यन्त्याजादेर्लुग् निपात्यते । ब्रह्मण इदं ब्राह्मम् वस्त्रम् । ब्राह्मो मंत्रः ।

जातौ ॥ २ । ३ । ६७ ॥

जातावभिधेयायां ब्राह्मनित्यनपत्ये एवाण्याजादेर्लुग्नि-पात्यते । ब्राह्मी ओषधिः । पूर्वेण सिद्धेऽनपत्य एवेति नियमो नापत्य इति निषेधो वायम् । तेन-ब्रह्मणोऽपत्यं ब्राह्मणः । अजातौ लुगेव—ब्रह्मणोऽपत्यं ब्राह्मो नारदः ।

औक्षम् ॥ २ । ३ । ६८ ॥

उक्षन्शब्दस्यानपत्येऽण्यन्त्याजादेर्लुग् निपात्यते । उक्ष्ण इदं औक्षं पदम् । अनपत्य इति किम्? औक्ष्णः ।

सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतलिजाजलि-
लाङ्गलिशिलालिशिखण्डिशूकरसद्मसुपर्व-
णोऽपदस्य ॥ २ । ३ । ६९ ॥

सब्रह्मचारिन्नित्यादीनां नकारान्तानां चापदसंज्ञानां तद्धिते परे अन्त्याजादेर्लुग् भवति। सब्रह्मचारिण इमे साब्रह्मचाराः । पीठसर्पिण-:पैठसर्पाः । कलापिप्रोक्तमधीयानाः । कालापाः । कुथुमिनः इमे-कौथुमाः । तैतलिना कृतो ग्रंथः तैतलिशब्देनोपचर्यते । तमधीयानाः। तैतलाः ।एवं जाजलिना-जाजलाः । लांगलिना-लांगलाः । शिलालिन इमे शैलालाः । शिखंडिन इमे शैखंडाः । शूकरसद्मनः इमे शौकरसद्माः । सुपर्वण। इमे-सौपर्वाः । नः-दूष्यहः । ष्यहः परमाह्नः । मेधाविनोऽपत्यं-मैधावः । औडुलोमिः । आग्निशर्मिः । हस्तिनां समूहो हास्तिकम् । अपदस्येति किम्? मेधाविरूपम् । मेधाविमयम् । न इत्येव सिद्धे—सब्रह्मचार्यादिग्रहणं येऽनोऽस्य इत्यादिप्रतिषेधबाधनार्थम् ।

चर्मशुनः कोशसंकोचे ॥ २ । ३ । ७० ॥

चर्मशुनोरपदयोः यथासंख्यं क्रमेण विकारे कोशे संकोचे चार्थे तद्धिते परे ऽन्त्याजादेर्लुग्भवति । चर्मणः अयं चार्मः कोशः । चार्मणोऽन्यः । शुनः संकोचे शौवः संकोचः । शौवनोऽन्यः

विकारापत्येऽश्महितनाम्नो वा ॥ २ । ३ । ७१ ॥

अश्मन् हितनामन् इत्येतयोरपदयोर्यथासंख्यं विकारे अपत्ये चार्थे तद्धितेऽन्त्याजादेर्लुग्वा भवति । अश्मनो विकारः—आश्मः, आश्मनो वा । हितनाम्नोऽपत्यं हैतनामः । हैतनामनो वा ।

स्वरादीनाम् ॥ २ । ३ । ७२ ॥

स्वर इत्येवमादीनामपदान्तानां तद्धिते परेऽन्त्यादेर्लुग् भवति । स्वर् भवः-सौवः । बहिर् भवः-वाह्यः । वाहीकः। सायंप्रातिकः । पौनःपुनिकः । पौनःपुन्यम् । आदिशब्दः प्रकारे प्रयोगानुसरणार्थः । तेन-आरातीयः । शाश्वतिकः । शाश्वतः । पार्थक्यमित्यादिषु न भवति ।

विंशतेस्तेर्डिति ॥ २ । ३ । ७३ ॥

विंशतिशब्दस्यापदस्य यस्तिशब्दस्तस्य डिति तद्धिते लुग्भवति । आसन्ना विंशतिर्येषां ते आसन्नविंशाः । विंशत्याक्रीतम्-विंशतिकम् । विंशतिरभ्यधिका अस्मिन् विंशं शतं । विंशतेः पूरणः विंशः । एकविंशः ।

एः ॥ २ । ३ । ७४ ॥

अश्च इश्च एस्तस्यावर्णान्तस्येवर्णान्तस्य चापदस्य तद्धिते लुग् भवति । अस्य-दाक्षिः । प्लाक्षिः । वाढिः । वात्सः । बलाकिः । एः-नाभेयः । नैधेयः । श्यैनेयः । रौहिणेयः ।

अन्होऽखाटि ॥ २ । ३ । ७५ ॥

अहन्नित्येतस्यापदस्य ख अट् इत्येतद्वर्जिते तद्धिते यद्-वर्णं तस्य लुग् भवति । अन्हा निर्वृत्तं आह्निकं । अन्हां समूहः आह्नः । येनाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति न्यायेनोपान्त्याकारस्य लुग्भवति । अखाटीति किम् ? द्वाभ्यामहोभ्यां निर्वृतः द्व्यहीनः । त्र्यहीणः । अटि-उत्तमाहः । द्वयोरन्होस्समाहारः द्व्यहः ।

षन्हन्धृतराज्ञोऽणि ॥ २ । ३ । ७६ ॥

षन् हन्नित्येतदन्तस्य धृतराजन्नित्येतस्य चापदस्याणि

तद्धिते यद्वर्णन्तस्य लुग्भवति । पौष्णम् । ताष्णम् । औणध्नं धार्तराष्ट्रं ।

तैषपौषं भात् ॥ २ । ३ । ७७ ॥

तिष्यपुष्ययोर्भाद्णि पत्तिपदं नक्षत्राद्‌ विहितेऽणि लुग् निपात्यते । तिष्येण गुरूदयेन युक्तस्संवत्सरः=तैषः । पुष्येण पौषः संवत्सरः । तैषमहः तैषी रात्रि । तिष्ये जातः तैषः । पौषः । भादिति किम् ? तिष्यो देवताऽस्येति तैष्यः । पौष्यश्चरुः ।

बिल्वकां छस्य ॥ २ । ३ । ७८ ॥

बिल्वमित्येवमादीनामवयवस्य छकारस्यापदस्य तद्धिते लुग्भवति । बिल्वा अस्यां सन्तीति बिल्वकीया नदी । नडादिः -कछः । तस्यां भवः बैल्वकः । वेणुकीयायां भवः वैणुकः । वेत्रिकायां भवः-वैत्रकः इत्यादयः ।

हलो यश्च्विक्यानात्यापत्यस्य ॥ २ । ३ । ७९ ॥

अपत्ये विहितस्य प्रत्ययस्यापदस्य यो यकारो हलः परस्तस्य च्वौ क्येऽनाति अनाकारादौ च तद्धिते परे लुग्भवति । च्वौ—गार्गीभूतः । वात्सीभूतः । क्ये—गार्गीयति । वात्सीयति । गार्गायते । वात्सायते । अनाति—गर्गाणां समूहो-गार्गकम् । वात्सकम् । गर्गस्यायं गार्गीयः । वात्सीयः । आकारादेर्न भवति । गार्ग्यायणः । वात्स्यायनः ।

राजन्यमनुष्ययोर्नाके ॥ २ । ३ । ८० ॥

राजन्यमनुष्ययोर्यकारस्याकप्रत्यये लुग्न भवति । राजन्यकम् । मानुष्यकं ।

ओर्देऽकद्रुवाः ॥ २ । ३ । ८१ ॥

कद्रूशब्दवर्जितस्योवर्णान्तस्यापदस्य ढे तद्धिते लुग् भवति । कमण्डल्वाः अपत्यं कामण्डलेयः । जांबेयः । शुभ्रादिढण् । अकद्र्वा इति किम् ? काद्रवेयः ।

अवस्वयम्भुवः ॥ २ । ३ । ८२ ॥

स्वयंभूशब्दवर्जितस्यापदस्योवर्णस्य तद्धिते अवादेशो भवति । औपगवः । वाभ्रव्यः । शङ्कव्यं दारु । अस्वयंभुव इति किम् ? स्वायंभुवं ।

केकयमित्रयुप्रलयस्येय्यादेर्ङिणिति ॥ २ । ३ । ८३ ॥

केकयादीनां ङिति णिति च तद्धिते परे यादेः शब्दस्वरूपस्य इयादेशो भवति । केकयस्यापत्यं कैकेयः । राष्ट्रराज्ञ इत्यञ् । मित्रयोर्भावेन मैत्रेयिकया श्लाघते । गोत्रे वुञ् । प्रलयादागतं प्रालेयम् । अण् ।

आरैचोऽक्वादेः ॥ २ । ३ । ८४ ॥

ञिति णिति च तद्धिते यः पूर्वस्तदासन्नः प्रकृतिभागस्तस्याचां मध्ये य आदिरच् तस्य स्थाने आ आर् ऐच् ऐकार औकार इत्येते आदेशा भवन्ति । ञिति—दाक्षिः । कार्ष्णिः । नैचाकविः । चौलिः । णिति—कापटवः । भार्गवः । शैवः । औपगवः । श्रीर्देवताऽस्य श्रायः स्थालीपाकः ।

देविकाशिंशपादीर्घसत्रश्रेयसां तत्प्राप्तेराः ॥ २ । ३ । ८५ ॥

देविकादीनामक्वादेरचः तत्प्राप्तेस्तेषामारैचां प्राप्तिर्यस्य तस्य ञिति णिति तद्धिते निमित्ते आकारादेशो भवति । देविकाया भवं दाविकमुदकम् । देविकाकूले भवाः दाविकाकूलाः शालयः । पूर्वदेविकानाम प्राग्ग्रामस्तत्र भवः पूर्वदाविकः पुरुषः । शिंशपायाः विकारः शांशपः स्तंभः । शिंश-

पास्थले भवाः । शांशपास्थलाः देवाः । पूर्वशांशपः पुरुषः । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयोऽधिकृत्य कृतम्–श्रायसम् द्वाद-शाङ्गम् । तत्प्राप्तेरिति किम् ? सुदेविकायां भवः सौदेविकः ।

वहीनरस्यैत् ॥ २ । ३ । ८६ ॥

वहीनरशब्दस्य ञ्णिति तद्धिते परेऽचामादेरचः स्थाने ऐकारादेशो भवति । वहीनरस्यापत्यं वैहीनरिः । वहीनर-स्येदं वैहीनरं ।

पदे य्वष्टैच् ॥ ८७ ।

ञ्णिति तद्धिते तत्प्राप्तेरिवर्णस्योवर्णस्य स्थाने यौ यकारवकारौ तयोः पदे परतः ऐजागमो भवति । यकारस्य ऐकारः । वकारस्य औकारः । व्यसने भवं वैयसनं । व्याकर-णस्य बोद्धाऽध्येता वा वैयाकरणः । न्यायस्य—नैयायिकः । पूर्वन्यलिन्दे भवः–पूर्वनैयलिन्दः । स्वागमस्य बोद्धाऽध्येता वा सौवागमिकः । स्वश्वस्यापत्यं सौवश्वः । शिवाद्यण् । पद इति किं ? यत इमे याताः । तात्राः । यत् इति इणः शत्रतं । तत्प्राप्तेः किं ? दाध्यश्विः । माध्वश्विः ।

द्वारादेः ॥ ८८ ॥

द्वारादीनां यो यकारो वकारश्चतत्प्राप्तिमवतोऽच्चादेः समी-पस्य ञ्णिति तद्धिते टैजागमो भवति । द्वारे नियुक्तः दौवा-रिकः । द्वारपालस्यापत्यं दौवारपालिकः । स्वस्येदं सौवं । स्वग्रामे भवः सौवग्रामिकः । इत्यादि । अध्यात्मादि ठण् । तत्प्राप्तेः समीपस्येति किं ? व्यल्करे भवः वैयल्करः । वका-रस्य न भवति ।

न्यग्रोधस्य प्रकृतेः २ । ३ । ॥ ८८ ॥

न्यग्रोधशब्दस्य प्रकृतिभूतस्य यो यकारस्तत्प्राप्तिरादेरैच् प्राप्तिभूतोऽश्वादेश्चः स्थाने समीपे वा तस्य ञ्णिति तद्धिते ऐजागमो भवति । न्यग्रोधस्य विकारो नैयग्रोधो दंडः । नैयग्रोधः कषायः । प्रकृतेरिति किं? न्यग्रोधमूले भव--न्याग्रोधमूलाः शालयः ।

जस्वङ्गादेः ॥ २ । ३ । ९० ॥

आरैच इति वर्तते । अप्रत्ययांतस्य स्वङ्गादेश्च ञ्णिति तद्धितेऽश्वादेश्चः स्थाने आरैजागमो भवति । जस्य-व्यति हारे जः–व्यावक्रोशी । व्यावलेखी । व्यात्युखी । स्वंगादेः-स्वंगस्यापत्यं–स्वांगिः । व्यांगिः । व्याङ्दिः । स्वागतमित्याह स्वागतिकः । व्यवहारेण भवति-व्यावहारिक इत्यादि । ऐजपवादः ।

श्वादेरौ ॥ ३ । । २ ९१ ॥

श्वन् शब्द आदिरवयवो यस्य तस्य शब्दरूपस्य इकारादौ ञ्णिति तद्धितेऽश्वादेराकार आदेशो भवति । श्वभस्त्रस्यापत्यं-श्वाभस्त्रः ।

इञः ॥ २ । ३ । ९२ ॥

श्वादेरिञ्प्रत्ययस्तस्य ञिणति तद्धितेऽचामादेश्चः स्थाने आकारो भवति । श्वाभस्त्रेरिदं-श्वाभस्त्रं । श्वाकर्णं ।

पदस्यानौ वा । २ । ३ ॥ ९३ ॥

श्वादेः पदशब्दांतस्यानिकारादौ ञ्णिति तद्धितेऽश्वादेराकारो वा भवति । श्वापदस्येदं श्वापदं । शौवपदं । अनाविति किं? श्वपदैश्चरति श्वापदिकः ।

प्रोष्ठभद्राज्जाते । २ । ३ ॥ ९४ ॥

प्रोष्ठभद्रशब्दाभ्यां परस्य पदस्याक्ष्वादेराकारो भवति जाते ञिणति तद्धिते परतः । प्रोष्ठपदासु जातः—प्रौष्ठपादः भाद्रपादः, माणवकः ।

अंशांदृतोः । २ । ३ ॥ ८५ ॥

ञिति णिति तद्धिते यः प्रकृतिभागः तदवयवादवयव-वाचिनः परस्य ऋतुवाचिनः शब्दस्याक्ष्वादेरारैचो भवन्ति । पूर्वासु वर्षासु भवः पूर्ववार्षिकः । अपरवार्षिकः । वर्षाकालेभ्य-ष्ठण् । पूर्वशारदः । पूर्वनैदाघः । अपरहैमनः । ऋत्वण् ।

सुसर्वार्धाद्राष्ट्रस्य । २ । ३ ॥ ८६ ॥

स्वादिभ्यः प्रकृत्यवयवेभ्यः परस्य राष्ट्रवाचिनो ञिति णिति तद्धिते अक्ष्वादेरारैचो भवन्ति । सुपंचालेषु भवः सुपांचालकः । सर्वपांचालकः । अर्धपांचालकः । एवं सुमागधक इत्यादि । बहुविषयेभ्य इति वुञ् ।

दिशोऽमद्रस्य ॥ २ । ३ । ८७ ॥

दिग्वाचिनः परस्य राष्ट्रवाचिनो मद्रशब्दवर्जितस्य ञिति णिति तद्धिते अक्ष्वादेरारैचो भवन्ति । पूर्वपांचालकः । अपरपांचालकः । उत्तरपांचालकः । अमद्रस्येति किम् ? पौर्वमद्रः ।

प्राग्ग्रामाणाम् ॥ २ । ३ । ८८ ॥

प्राग्देशग्रामवाचिनां योऽवयवो दिक्छब्दस्ततः परस्या-वयवस्य दिशः परेषां च प्राग्ग्रामाणां ञिति णिति तद्धिते-ऽक्ष्वादेरारैचो भवन्ति । पूर्वकृष्णमृत्तिका नाम प्राग्ग्रामस्तत्र भवः पूर्वकार्ष्णमृत्तिकः । पूर्वस्मिन्कान्यकुब्जे भवः पूर्वका-न्यकुब्जः । पूर्वपाटलिपुत्रः ।

संख्याधिकाभ्यां वर्षस्याभाविनि । २ । ३ । ८९ ॥

संख्याया अधिकशब्दाच्च उत्तरस्य वर्षशब्दस्य ञिति णिति तद्धितेऽक्ष्वादेराकारो भवति न चेत्स तद्धितो भावीत्यस्मिन्नर्थे विहितो भवति । द्वाभ्यां वर्षाभ्यां निर्वृत्तो भृतोऽधीष्टो वा द्विवर्षं भूतो वा द्विवार्षिकः । त्रिवार्षिकः । अधिकवार्षिकः । अभाविनीति किम्? द्वे वर्षे भावि द्वैवर्षिकम् । त्रैवर्षिकं धान्यं ।

## मानसंवत्सरस्याशाणकुलिजस्यानाम्नि । २ । ३ ॥ १००॥

मीयते परिच्छेद्यते येन तन्मानम् । संख्यादिकाभ्यां परस्य शाणकुलिजवर्जितस्य मानवाचिनः संवत्सरशब्दस्य च ञिति णिति तद्धितेऽक्ष्वादेरारैचो भवंति अनाम्निविषये । द्वौ कुडवौ प्रयोजनमस्येति द्विकौडविकः । त्रिकौडविकः । द्वाभ्यां सुवर्णाभ्यां क्रीतम् द्विसौवर्णिकम् । द्विनैष्किकम् । द्वाभ्यां षष्टिभ्यां निर्वृत्तो भृतोऽधीष्टो द्वेषष्टीभूतो भावी वा द्विषाष्टिकः । अधिकषाष्टिकः । द्विषष्ट्यादिस्संख्येये काले वर्तत इति कालाधिकारविहितप्रत्ययः । संवत्सरस्य-द्वाभ्यां संवत्सराभ्यां निवृत्तादौ-द्विसांवत्सरिकः । अधिकसांवत्सरिकः । संवत्सरग्रहणात्कालो न मानं । तेन-द्वैसमयिकः । त्रैरात्रिकः । अशाणकुलिजस्येति किम्? द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम् । त्रैशाणम् । द्वे कुलिजे पचन् संभवन् अवहरन्वा द्वैकुलिजिकः । अनाम्नि इति किम्? पंच लोहिन्यः परिमाणमस्य पांचलोहितिकम् । पांचकलायतिकम् । तद्धितांतं नाम

## परिमाणस्यानतोऽर्धाद्वादेः । २ । ३ । १०१ ।

अर्धशब्दात्परस्य परिमाणवाचिनः कुडवादेः शब्दस्य । ञिति णिति तद्धितेऽक्ष्वादेरचोनतोऽनकारस्यारैचो भवन्ति । आदेः परिमाणात्पूर्वस्य त्वर्धशब्दस्य वा भवति । अथ

कुडुवेन क्रीतमार्धकौडुविकम् । अर्धकौडुविक । अर्धद्रौणिकम् । आर्धद्रौणिकम् । अनत इति किम्? अर्धप्रस्थिकम् । आर्धप्रस्थिकम् । अर्धचमसिकम् । आर्धचमसिकम् । आदिशब्दविकल्प उत्तरविध्यनपेक्ष एवेति भवति ।

प्राद्वाहणस्य ढे । । २ ३ । १०२ ।

प्रशब्दात्परस्य वाहणशब्दस्य ढप्रत्यये ञिति णिति तद्धितेऽचवादेराकारो भवति । आदेः प्रशब्दस्य वा भवति । प्रवाहयतीति प्रवाहणस्तस्यापत्यं प्रवाहणेयः, प्रावाहणेयः प्रवाहेणेयीभार्यः । शुभ्रादि ढण् । नाचारैच् तद्धित इति घभावनिषेधः ।

ढस्य । २ । ३ । १०३ ।

ढप्रत्ययान्तस्यावयवात् प्रशब्दात् परस्य वाहनस्य ञिति णिति तद्धितेऽचवादेराकारो भवति । आदेस्तु वा भवति । प्रवाहणेयस्यापत्यं प्रवाहणेयः प्रावाहणेयिः । प्रवाहणेयस्येदं प्रवाहणेयकम् । प्रावाहणेयकम् ।

नञश्चेश्वरक्षेत्रज्ञकुशलचपलनिपुणशुचेः ।२।३।१०४।

नञः परेषामीश्वरादीनां प्रकृत्यवयवानां ञिति णिति तद्धितेऽचवादेरारैचो भवन्ति वा । आदेर्नञस्त्वाकारो भवति वा । अनैश्वर्यम्, आनैश्वर्यं । अक्षैत्रज्ञम् । आक्षैत्रज्ञम् । राजादित्यण् अकुशलस्येदं अकौशलम् । आकौशलम् । अचापलम् । आचापलम् । अनैपुणम् । आनैपुणम् । अशुचेरिदं अशुचेर्भावो वा अशौचम्, आशौचम् । चेन वानुकृष्यते । आयथातथ्यमिति समासात्प्रत्ययः । अयथातथ्यमिति प्रत्ययान्तेन समासः । एवमायाथापुर्यम् । अयथापुर्यम् । अयाथापुर्यम् । आचतुर्यम् । अचातुर्यम् ।

जङ्गलधेनुवलजस्य वोत्तरपदस्य च । २ । ३ । १०५ ।

जंगलाद्यन्तानां प्रकृतिभागानामादेः पूर्वपदस्याऽच्चादेरा-ऐचौ भवन्ति ञिति णिति तद्धिते उत्तरपदस्य वा । कुरुजंगलेषु भवः कौरुजंगलः । वैश्वधेनवः । वैश्वधैनवः । सौवर्णवालजः । सौवर्णवालजः ।

हृद्भगसिन्धोः । २ । ३ । १०६ ।

हृदाद्यन्तानां प्रकृतिभागानां ञिति णिति तद्धिते आदेः पूर्वपदस्योत्तरपदस्य वाऽच्चादेरारैचौ भवन्ति नित्यम् । सुहृदः, सुहृदयस्य वा इदम्—सौहार्दम् । तस्य—भावः कर्म सौहार्द्यं । सुभगस्य भावः सौभाग्यम् । सुभगाया अपत्यं सौभागिनेयः । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तत्र भवः साक्तुसैन्धवः । लावणसैन्धवः । कच्छादित्वादण् ।

नगरस्य प्राक्षु ॥ २ । ३ । १०७ ॥

नगरान्तस्य प्रकृतिभागस्य प्राक्षु देशेषु वर्तमानस्य ञिति णिति तद्धिते आदेःपूर्वपदस्योत्तरपदस्य चाच्चादेरारैचौ भवन्ति । सुह्मनगरे भवः सौह्मनागरः । पौंड्रनागरः । वैराटनागरः ।

अनुशतिकादीनाम् ॥ २ । ३ । १०८ ॥

अनुशतिक इत्येवमादीनां प्रकृतिभागानां ञिति णिति तद्धिते पूर्वपदस्योत्तरपदस्य चाच्चादेरारैचौ भवन्ति । अनुशतिकस्येदमानुशातिकम् । परलोके भवं पारलौकिकम् । इत्यादयः ।

राजपौरुष्यं ॥ २ । ३ । १०९ ॥

राजपुरुषस्य ष्यणि पूर्वोत्तरपदयोरारैचू निपात्यते । राजपुरुषस्य भावः कर्म वा राजपौरुष्यं ।

देवतादादौ ॥ २ । ३ । ११० ॥

देवतार्थानां प्रकृतिभागानामात्वादौ विषये ञिति णिति तद्धिते आदेः पूर्वपदस्योत्तरपदस्य चाच्वादेरारैचौ भवंति । अग्निश्च विष्णुश्च देवतास्य आग्नावैष्णवम् । आग्निमारुतं । आग्निमारुतम् । नाप्यविष्टिवद्देति आत्वेत्वयोर्निषेधः । इंद्रासोमादिष्वत्यतः प्रभृत्या दिवः पृथिव्यां वेत्यतो विधिर्दे वता दादिः ।

नेन्द्रवरुणस्यात् ॥ २ । ३ । १११ ॥

अरुणान्तःत्पूर्वपदात् परयोरिन्द्रवरुणयोरुत्तरपदयोर-च्वादेरारैचौ भवन्ति । अग्नीन्द्रौ देवताऽस्य आग्नेंद्रम् । ऐंद्राव-रुणम् । मैत्रावरुणम् ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयम् ॥ २।३।११२ ॥

भ्रौणहत्यादयः शब्दाः ष्यणादिप्रत्ययान्ताः कृततत्वादयो निपात्यंते । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्यम् । धीव्नो धै-वत्यम् । सरय्वां भवं सारवमुदकम् । इक्ष्वाकोरपत्यं ऐक्ष्वाकवः । इक्ष्वाकोरिदम्–ऐक्ष्वाकं । मित्रयोरपत्यं मैत्रेयः । हिरण्यस्य विकारः हिरण्मयम् ।

वान्तमान्तितमान्तितोऽन्तियान्तिषद् । २ । ३ । ११३ ॥

अन्तमादयः शब्दास्तमादिषु कृततिकादिलोपादयो वा निपात्यन्ते अयमेषामतिशयेनान्तिकः–अन्तमः । अन्तितमः । अन्तिकतमः । अन्तिकादागच्छति अन्तितः अन्तिकतः । अन्तिके साधुः अन्तियः । अन्तिक्यः । अन्तिके सीदतीति अन्तिषद् अन्तिकषद् ।

इति शब्दानुशासने चिन्तामणौ वृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ।

* * * * * *

वाद्यात् ॥ २ । ४ । १ ॥

वा इति चाद्यादिति चाधिक्रियते । तत्र वाधिकाराद्वक्ष्यमाणाः प्रत्ययाः विकल्प्यन्ते । तेन पक्षे यथाप्राप्तं वाक्यं समासश्च भवति । उपगोरपत्यमुपग्वपत्यमित्याद्यादित्याधिकारात् सूत्रे यत्पूर्वं निर्दिष्टं तत्प्रत्ययमुत्पादयति न परमिति । साऽस्य पौर्णमासी । देवतेत्यादौ सेति प्रकृतिरस्येति प्रत्ययार्थो व्यवतिष्ठते । इन्द्रो देवताऽस्य ऐन्द्रम्—हविः । ऐन्द्रो मंत्रः ।

गोत्रोत्तरपदाद्गोत्रादिवाजिह्वाहरितकात्यात् ॥२।४।२॥

जिह्वाकात्यहरितकात्यवर्जिताद्गोत्रोत्तरपादात् यत् गोत्रमुत्तरपदं तस्मात् विवक्षमाणः प्रत्ययो भवति । गोत्रमपत्यम् । कंबलचारायणीयाः । ओदनपाणीयाः । दोश्छः । पैंगलकाण्वाः । शकलादेर्वृद्धादित्यञ् । अजिह्वाहरितकात्यादिति किम् ? जिह्वाचपलःकात्यः—जिह्वाकात्यः । हरितभक्षः कात्यः हरितकात्यः । तयोरिदं जैह्वाकाताः । हारीतकाताः ।

गोर्योऽचि ॥ २ । ४ । ३ ॥

गोशब्दादजादिप्रत्ययप्रसंगे यः प्रत्ययो भवति इत्ययमधिकारः । गवि भवं गव्यम् । गोःस्वम्—गव्यम् । गौः देवताऽस्य गव्यम् । गवा चरन्—गव्यः । अचीति किम् ? गोरूप्यम् । गोमयम् ।

प्राग् जितादण् ॥ २ । ४ । ४ ॥

प्राग्जिताद्यर्थास्तेष्वण् प्रत्ययो वा भवति । अधिकारः परिभाषा विधिर्वायं पक्षत्रयेप्यपवादविषयं परिहृत्य वर्तते उपगोऽरपत्यमौपगवः । भिक्षाणां समूहो भैक्षम् । कषायेण रक्तम्—काषायम् ।

धनादेः पत्युः ॥ २ । ४ । ५ ॥

धनादिभ्यः परो यः पतिशब्दस्तदन्ताद्धनपत्यादेः प्राग्जितीयेऽर्थे अण् प्रत्ययो वा भवति। ञ्यच्छापवादः। धनपतेरपत्यं धानपतः आश्वपतः। राष्ट्रपतेरिदम्—राष्ट्रपतम्। धान्यपतमित्यादौ।

**पत्युत्तरपदयमादित्यदित्यदितेर्ञ्योऽणपवादे चास्वे ॥ २ । ४ । ६ ॥**

पतिशब्दोत्तरपदात् यमादिभ्यश्च प्राग्जितीयेऽस्वे स्ववर्जितेऽर्थेऽपत्यादौ योऽणपवादः तद्विषये च ञ्य प्रत्ययो वा भवति। बृहस्पतेरपत्यं बार्हस्पत्यः। प्राजापत्यः। बृहस्पतिर्दैवताऽस्य बार्हस्पत्यम्। यमादि—याम्यम्। आदित्यम्। दैत्यम्। दितेरपत्यं दैत्यः। आदित्यः। अणपवादे च आदित्यस्यापत्यमादित्यः। अत्र अत इञ् स्यात्। अस्वे इति किम्? उष्ट्रपतिर्नाम वाहनं तस्य स्वम्—औष्ट्रपतम्। वाहनादित्यञ्।

**बहिषष्टीकण् च ॥ २ । ४ । ७ ॥**

बहिष्इत्येतस्मात्प्राग्जितीयेऽर्थे टीकण् वा भवति। ञ्यश्च। बाह्यः। बाहीकः। बाह्या। बाहीकी।

**कल्यग्नेर्ढण् ॥ २ । ४ । ८ ॥**

कलि अग्नि इत्येताभ्यां प्राग्जितीयेऽर्थेऽणपवादविषये च ढण् वा भवति। कलिर्दैवताऽस्य, कलौ भवम्, कलेरागतं कलेःस्वम्--वा कालेयम्। आग्नेयम्।

**पृथिव्या ञाञ् ॥ २ । ४ । ९ ॥**

पृथिवीशब्दात् प्राग्जितीयेऽर्थेऽणपवादे च ञाञौ प्रत्ययौ भवतः। पृथिव्या अपत्यं तत्र भवा स्त्री पार्थिवा पार्थिवी। ङी बहुषु श्लुक्। संघादिष्वणिति प्रयोजनमञ्विधानस्य।

उत्सादेरञ् ॥ २ । ३ । १० ।

उत्सादिभ्यः प्राग्जितीयेर्थेऽणपवादे चाञ् वा भवति । उत्सस्येदमौत्सम् । औदपानम् । अणपवादे च । उत्सस्यापत्यमौत्सः । औदपानः । तरुणयास्तारुणः । पंचालेषु भवः पांचालः । अत्र इञ् ढण् ढञ् ञ्यञ् च प्राप्नुवन्ति । कुरोरपत्यं कौरव्य इति ञ्यविधौ कुरुशब्दोपादानस्यानवकाशत्वात् भवति । कौरव इति तु स्वत्वविवक्षायां वष्कयादसमासे इति निषेधादिह समासेऽपि प्रत्ययः । तेन गोधेनुभ्यः आगतम्—गौधेनवं । मयट्रूप्यौ न भवतः ।

वष्कयादसमासे ॥ २ । ४ । ११ ॥

वष्कयादसमासे प्राग्जितीयेऽणपवादे चाञ् वा भवति । वष्कयस्यापत्यं वाष्कयः । अन्यत्र सौवष्कयिः ।

देवाद्यञ्च ॥ २ । ४ । १२ ॥

देवशब्दात्प्राग्जितीयेऽर्थेऽणपवादे च यञञौ वा भवतः । दैवम् । दैव्यम् । दैवी वाक् ।

स्थाम्नोऽत् । २ । ३ । १३ ।

स्थामन्शब्दान्तात् प्राग् जितीयेऽर्थे अकारप्रत्ययो वा भवति । अश्वत्थाम्नोऽपत्यं अश्वत्थामः ।

लोम्नोऽपत्येषु ॥ २ । ४ । १४ ॥

लोमन्नन्तादपत्येषु बहुष्वप्रत्ययो वा भवति । उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः । शरलोमाः । बहुत्वं किम्? औडुलोमिः । औडुलोमी ।

श्लुग् द्विगोरलुचोऽनपत्येऽञ्यादेः ॥ २ । ४ । १५ ॥

द्विगोरलुगन्तात्परो यः प्राग्जितीये अपत्यवर्जितेऽर्थे अजादिर्यकारादिश्च प्रत्ययः तस्य श्लुग्भवति । पंचसु कपालेषु संस्कृतम्, पंचकपाल्यां वा-पंचकपालम् । दशकपालम् । पंचेन्द्राण्यः । पंचेंद्राः वा देवताऽस्य पंचेन्द्रः । दशेन्द्रः । द्वयोरथयोः द्विरथ्या वाऽयं द्विरथः । त्रिरथः । रथात्सादेश्च वोढ्रंगे इति यः । अलुच इति किम् ? पंचसु कपालेषु संस्कृतं पंचकपालम् । तस्येदं पांचकपालम् । अनपत्य इति किम् ? द्वैदेवदत्तिः । पंचनापितिः । अज्यादेरिति किम् ? पंचगर्गमयम् ।

स्त्रीपुंसात् टूनञ्ञ्स्नञ्वतः । २ । ४ । १६ ॥

स्त्रीपुंस इत्येताभ्यां प्राग्वतो येऽर्था वक्ष्यन्ते तेष्वणपवादेषु यथाक्रमं टूनञ्स्नञित्येतौ प्रत्ययौ वा भवतः । स्त्रिया अपत्यं स्त्रैणः । पौंस्नः । स्त्रिया इदं स्त्रैणम् । पौंस्नम् । स्त्रैणी । पौंस्नी । प्राग्वत इति किम् ? स्त्रीवत् । पुंवत् ।

त्वे वा । २ ४ । १७ ॥

स्त्रीपुंसाभ्यां त्वप्रत्यये विषये यथाक्रमं टूनञ् ञ्स्नट् वा भवतः । स्त्रिया भावः स्त्रैणः । स्त्रीत्वम् । पौंस्नम् । इह वाग्रहणं प्रत्ययविकल्पार्थम् । प्रकृतं वाक्यार्थम् ।

ङसोऽपत्ये । २ । ४ । १८ ॥

अणादयोऽनुवर्तन्ते । ङसः षष्ठ्यन्तात् अपत्येऽर्थे यथा विहितमणादयः प्रत्यया भवन्ति । उपगोरपत्यमौपगवः । कापटवः । भानवः । धानपतः । औष्ट्रपत्यः । औपगवी । औपगवः । औपगवाः । अपत्यं इति प्रजनमात्रं विवक्षितं न लिंगसंख्यम् ।

आद्यात् । २ । ४ । १९ ॥

पौत्राद्यपत्यं पूर्वेषामारंभप्रकृतेरपत्यं भवति । तत्र तत्संबंधविवक्षायामनन्तरादिभ्योऽपि प्रत्ययः प्राप्नोतीति नियम आरभ्यते । अपत्ये यः प्रत्ययः स आद्यात् परमप्रकृतेरेव नानंतरवृद्धयुवभ्यः । उपगोरपत्यं वृद्धमौपगवः । औपगवस्याप्यौपगवः । औपगवेरप्यौपगवः । गर्गस्य गार्ग्यः । गार्ग्यस्यापि गार्ग्यः । गार्ग्यायणस्यापि गार्ग्यः ।

वृद्धाद्यूनि ॥ २ । ४ । २० ॥

यून्यपत्ये यः प्रत्ययोऽसावाद्यात् वृद्धाद्भवति । प्रथमाद्यो वृद्धप्रत्ययस्तदन्ताद्भवति इत्यर्थः । उपगोरपत्यं युवा औपगविः । गर्गस्यापत्यं युवा गार्ग्यायणः । आद्यादिति किम् ? गार्ग्यायणस्यापत्यं युवा गार्ग्यायणः । इञ् न भवति ।

अत इञ् ॥ २ । ४ । २१ ॥

ङसोऽपत्ये इति वर्तते । अकारान्तात्परो यो ङस् षष्ठी तदन्तादपत्येऽर्थे इञ् भवति । अणपवादः । दक्षस्यापत्यं दाक्षिः प्लाक्षिः । कुतश्चरति मायूरिः केन कापिंजलिः कुशः । अपत्य इति किम् ? प्रदीयतां दाशरथाय मैथिली । स्वत्वविवक्षायामपत्यविवक्षायामिञेव । शतस्यापत्यं वृद्धस्यापत्यमित्यादिषु अनभिधानात् न भवति ।

गोत्रे बाह्वादिभ्यः ॥ २ । ४ । २२ ॥

स्वापत्यसंतानस्य स्वव्यपदेशे कारणमृषिरनृषिर्वा यः प्रथमपुरुषस्तदपत्यं पौत्रं बाह्वादिभ्यः षष्ठ्यन्तेभ्यो गोत्रे अपत्ये इञ् भवति । बाहोरपत्यं बाहविः । औपबाकविः । औदश्चिः । इत्यादयः । गोत्र इति किम् ? बाहुर्नाम तस्यापत्यं बाहवः । इतः प्रभृतिगोत्राधिकाराद् गोत्रे इति नान्यत्र विधिः ।

वर्मणोऽचक्रात् ॥ २ । ४ । २३ ॥

चक्रवर्जितात्परो यो वर्मन्शब्दस्तदन्तादपत्येऽर्थे इञ् भवति । ऐंद्रवर्मिः । अचक्रादिति किम् ? चाक्रवर्मणः ।

अजादिभ्यो धेनोः ॥ २ । ४ २४ ॥

अजादिभ्यः परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ् भवति । आजधेनविः । वाष्कधेनविः ।

ब्राह्मणाद्वा ॥ २ । ४ । २५ ॥

ब्राह्मणशब्दात्परो यो धेनुशब्दस्तदन्तादपत्येऽर्थे इञ्वा भवति । ब्राह्मणधेनवः । ब्राह्मणधेनविः ।

साम्भूय्याम्भ्यामितौज्यौदिषाड्वाड्वलिः ॥२।४।२६॥

साम्भूय्यादयः शब्दाः अपत्येऽर्थे इञंता निपात्यन्ते । संभूयसोऽपत्यं सांभूयिः । अंभसोऽपत्यं आंभिः । अमितौजसोऽपत्यमामितौजिः । उदकस्यापत्यमौदिः । षण्णामपत्यं षाड्डिः । वाग्वादस्यापत्यं वाड्वलिः ।

सुधातृव्यासवरुटनिषादचण्डालबिंबस्याकङ् च ॥२४।२७॥

सुधात्रादिभ्योऽपत्येऽर्थे इञ्भवत्यकङ्चैषामन्तादेशः । सुधातुरपत्यं सौधातकिः । वैयासकिः । वारुटकिः । नैषादकिः । चांडालकिः । बैंबकिः ।

पुनर्भूपुत्रदुहितृननान्दृभ्योऽनन्तरेऽञ् ॥ २।४ २८॥

पुनर्भ्वादिभ्योऽनंतरापत्येऽञ्वा भवति । पौनर्भवः । पौनर्भवौ । पौनर्भवाः । पौत्रः । दौहित्रः । नानांद्रः । अगोत्रत्वाद्बहुषु श्लुन्नभवति केचित् पुनर्भव इति श्लुकमुदाहरंति ।

पारशवः ॥ २ । ४ । २९ ॥

परस्त्रीशब्दस्यानन्तरेऽपत्येऽर्थेऽञ् परशुभावश्च निपा-

त्यते । परस्त्रिया अनंतरापत्यं पारशवः । परा स्त्री परस्त्रीत्यवर्णाभ्यामिदं निपातितं । परस्य स्त्री परस्त्रीत्यन्यत्तु पारस्त्रैणेय इति कल्याण्यादिपाठात् ढण् ।

**विदादेर्वृद्धेऽनृष्यानन्तर्ये ॥ २ । ४ । ३० ॥**

विदादिभ्यो वृद्धेऽपत्येऽञ् भवति न चेद्वृद्धविषयं । ऋषित्वस्यानंतर्यमविच्छेदो गम्यते । विदस्यापत्यं वृद्धं वैदः । वैदौ । विदाः । और्वः । और्वौ । उर्वाः । वृद्ध इति किम् ? अन्तरो वैदिः । अनृष्यानंतर्य इति किम् ? इंद्रभूः सप्तमः काश्यपानां । भारद्वाजानां कतमोऽसि त्वम् । काश्यपःभारद्वाजाश्च ऋषयो नैरन्तर्येणापत्यापत्यवत्संबन्धेन स्थिता वृद्धाः अत्राऽबहुषु श्लुग् स्यात् ।

**कुंजादेर्ञ्फः ॥ २ । ४ । ३१ ॥**

कुञ्जादिभ्यो वृद्धेऽपत्ये ञ्फप्रत्ययो भवति । कुंजस्यापत्यं कौञ्जायन्यः । कौंजायन्यौ । कौंजायनाः । ब्राध्नायन्यः । ब्राध्नायन्यौ । ब्राध्नायनाः । व्रातञ्फादिति स्वार्थे ञ्यः । वृद्ध इति किम् ? अन्तरः कौञ्जिः ।

**नडादिभ्यः फण् ॥ २ । ४ । ३२ ॥**

नडादिभ्यो वृद्धेऽपत्ये फण् भवति । नडस्यापत्यं नाडायनः । नारायणः । चारायण इत्यादयः । अनन्तरो नाडिः ।

**यञिञः ॥ २ । ४ । ३३ ॥**

यञन्तादिञन्ताच्च वृद्धे वर्तमानादपत्ये यूनि फण् भवति । वृद्धाद्यूनीति वचनात् । गार्ग्यस्यापत्यं गार्ग्यायणः । वात्स्यायनः । दाक्षायणः । औदुम्बरायणः । इत्यादयः ।

**हरितादेरञः ॥ २ । ४ । ३४ ॥**

हरितादिः विदाद्यन्तर्गणः । हरितादेरजन्ताद् वृद्धे वर्तमानादपत्ये यूनि फण् भवति । हरितस्यापत्यं युवा हारितायनः । कैंदासायनः इत्यादि ।

क्रोष्टृशलङ्कोर्लुक् च ॥ २ । ४ । ३५ ॥

क्रोष्टृशलंकुभ्यां अपत्ये वृद्धे फण् भवति । तयोश्चान्तस्य लुक् । क्रौष्टायनः । शालंकायनः । पैलादिषु शालंकि इति पाठादिञपि भवति ।

शरद्वच्छुनकदर्भादग्निशर्मकृष्णरणाद् भृगुवत्सवसिष्ठवृषगणब्राह्मणाग्रायणे ॥ २ । ४ । ३६ ॥

शरद्वदादिभ्यो ङसन्तेभ्यो यथाक्रमं भार्गवादौ वृद्धेऽपत्ये फण् भवति । शारद्वतायनः । भार्गवः । शारद्वतोऽन्यः । शौनकायनो वात्स्यः । शौनकोऽन्यः । विदाद्यञ् । राणायनो वासिष्ठः राणिरन्यः । आग्निशर्मायणो वार्षगण्यः । आग्निशर्मिरन्यः । कार्ष्णायणो ब्राह्मणः कार्ष्णिरन्यः । दार्भायण आग्रायणः दार्भिरन्यः ।

द्रोणपर्वतजीवन्ताद्वा ॥ २ । ४ ३७ ॥

द्रोणादिभ्योऽपत्ये वृद्धे फण् वा भवति । द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । अनन्तरो द्रौणिरेव । द्रौणायन इत्यश्वत्थाम्न्यनन्तरे तत्पित्रपेक्षायामसाधुः । वृद्धे तु साधुः । अध्यारोपो वा । एवं पाराशर्यो व्यासः । जामदग्न्यो रामः ।

गर्गादेर्यञ् ॥ २ । ४ । ३८ ॥

गर्गादिभ्योऽपत्ये वृद्धे यञ्भवति । गार्ग्यः । वात्स्यः

इत्यादि । गोत्र इत्येव । गर्गो नाम, कश्चित् तस्यापत्यं वृद्धं गार्गिः ।

मधुबभ्रोर्ब्राह्मणकौशिके ॥ २ । ४ । ३९ ॥

मधुबभ्रुभ्यामपत्ये वृद्धे यञ्भवति यथासंख्यं ब्राह्मणे कौशिके च । माधव्यो ब्राह्मणः । माधवोऽन्यः । बाभ्रव्यः कौशिकः । बाभ्रवोऽन्यः ।

कपिबोधादाङ्गिरसे ॥ २ । ४ । ४० ॥

कपिबोधाभ्यामपत्ये वृद्धे आङ्गिरसे यञ्भवति । कपेरपत्यं वृद्धमांगिरसः काप्यः । बौध्यः । अन्यः कापेयः । बौधिः ।

वतण्डात् ॥ २ । ४ । ४१ ॥

वतंडशब्दात् अपत्ये वृद्धे आंगिरसे यञ्भवति । वतंडस्यापत्यं वृद्धमाङ्गिरसो वातंड्यः । अन्यः वातंड्यो वातंडो वा गर्गादिशिवादिपाठाद्यञणौ ।

स्त्रियां श्लुक् ॥ २ । ४ । ४२ ॥

वतंडशब्दादाङ्गिरसेऽपत्ये स्त्रियां यञः श्लुग्भवति । वतंडस्यापत्यं वृद्धं स्त्री आङ्गिरसी वतंडी । जातिरस्त्रीय इति ङी । अन्यत्र वातंड्यायनी । वातंडी वा । गर्गादिपाठात् यञिङ्फट् शिवादिपाठादणि ङी ।

अश्वादेः फञ् ॥ २ । ४ । ४३ ॥

अश्वादिभ्योऽपत्ये वृद्धे फञ्भवति । आश्वायनः । शांखायनः । इत्यादि ।

शफभरद्वाजादात्रेये ॥ २ ४ । ४४ ॥

शफभरद्वाजाभ्यामात्रेयेऽपत्ये वृद्धे फञ्भवति । शाफा-

द्विकाण्डि द्विकाण्डा क्षेत्रभक्तिः । द्विपुरुषि (षी) द्विपुरुषा खाता द्वौ प्रस्थौ प्रमाणमस्य स्यात् द्विप्रस्थम् । द्विफलम् । इह संशये चेति वचनं पूर्वत्रासंशयार्थम् ।

मात्रट् ॥ ३ । ३ । ६५ ॥

तन्मानवाचिनोऽस्येत्यर्थे मात्रट् प्रत्ययो भवति संशये । प्रस्थं मानमस्य स्यात् प्रस्थमात्रम् धान्यम् । प्रस्थं मानमेषां प्रस्थमात्राः व्रीहयः । कुडुबमात्रम् । फलमात्रम् । कर्षमात्रम् । पञ्चमात्रम् । शतमात्रम् । दिष्टिमात्रम् ।

शन्शद्विंशतेः ॥ ३ । ३ । ६६॥

शन्नन्तात् शदन्ताच्च संख्याशब्दाद्विंशतिशब्दाच्च मानवृत्तेस्तदस्येत्यर्थे संशये मात्रट् भवति । डिनोऽपवादः । दश मानमेषां स्यात् दशमात्राः । पञ्चदशमात्राः । त्रिंशन्मात्राः । त्रयस्त्रिंशन्मात्राः । विंशतिमात्राः ।

डिन् ॥ ३ । ३ । ६७ ॥

संशय इति निवृत्तम् । शन्शदन्ताद्विंशतिशब्दाच्च मानवृत्तेस्तदस्येत्यर्थे डिन् भवति । पञ्चदशिनोऽर्धमासाः त्रयस्त्रिंशिनो देवाः । विंशिनो भवनेन्द्राः ।

यत्विदंकिमः ॥ ३ । ३ । ६८ ॥

प्रथमान्तान्मानवृत्तेरिदंशब्दात्किंशब्दाच्च षष्ठ्यर्थे मेये यतुप्रत्ययो भवति ॥ मानं चतुर्विधं तत्र प्रमाणादिदं प्रमाणमस्य इयान् कियान् पटः ॥ परिमाणात्-इयत् । कियत् धान्यम् । उन्मानात्-इयत् कियत्सुवर्णम् ॥ संख्यायाः-इयन्तः कियन्तः सन्ति गुणिनः ।

एतदो वो घः ॥ ३ । ३ । ६९ ॥

एतदः परस्य घतोर्घकारस्य वकारादेशो भवति । एतावान्दण्डः । एतावती परिखा । एतावन्त्यधिकरणानि ।

यत्तदः ॥ ३ । ३ । ७० ॥

यत्तद्भ्यां परस्य घतोर्घकारस्य वकारादेशो भवति । यावान् । तावान् । आदेशवचनात् यत्तदेतद्भ्यो घतुः । योगविभाग उत्तरार्थः ।

किमश्च संख्याया डतिश्च ॥ ३ । ३ । ७१ ॥

संख्याया यन्मानं तद्वृत्तेस्तदिति प्रथमान्तात् किंशब्दाद् यत्तद्भ्यां च षष्ठ्यर्थे संख्येये मेये डति प्रत्ययो भवति घतुश्च । का संख्या मानमेषां कति, कियन्तः । यति । यावन्तो तति, तावन्तः । संख्याया इति किम् ? कियान् । यावान् तावान् पटः ।

अवयवात्तयट् ॥ ३ । ३ । ७२ ॥

अवयवे वर्तमानात्संख्यावाचिनः शब्दात् तदस्येत्यर्थे ऽवयविनि तयट् भवति । चत्वरोऽवयवा: अस्याः चतुष्टयी रज्जुः । पञ्चतयो यमः । सप्ततयी नयवृत्तिः । दशतयो धर्मः

द्वित्रिभ्यां लुग्वा ॥ ३ । ३ । ७३ ॥

द्वित्रिभ्यां परस्य तयडादेस्तकारस्य लुग्वा भवति । द्वाववयवावस्य द्वयं द्वितयं तपः । त्रयस्त्रितयो मोक्षमार्गः ।

द्व्यादेर्गुणान्मूल्यक्रये मयट् ॥ ३ । ३ । ७४ ॥

द्व्यादेर्गुणवृत्तेः संख्याशब्दात् तदस्येत्यर्थे मयट् भवति । स चेत् षष्ठ्यर्थो मूल्यं क्रयं वा भवति । द्वौ गुणौ एषां मूल्यभूतानां यवानां द्विमया: यवाः । उदश्वितो मूल्यं त्रिमयाः

चतुर्मयाः । द्वौ गुणावस्योदश्वितः क्रयभूतस्य द्विमयमुदश्वित्यवानां क्रयम् । त्रिमयम् । चतुर्मयं । अन्यत्र द्विगुणं चीरं तैलस्य पाकस्य ।

## अधिकमस्मिन् शतसहस्रे तत्संख्यं शतिशद्दशन्तादड् ॥ ३ । ३ । ७५ ॥

तदिति प्रथमान्तात्शति शत् दशन् इत्येवमन्तात्संख्याशब्दादस्मिन्निति सप्तम्यर्थे शते सहस्रे चाडित्ययंडिदकार प्रत्ययो भवति । यत्तत्प्रथमान्तं तच्चेत्संख्यमधिकं भवति । शतं सहस्रमिति च यत्संख्यायते तदेव यद्यधिकमपि भवतीत्यर्थः । योजनानां विंशतिः योजनानि वा विंशतिरधिकान्यस्मिन् योजनशते शतेषु योतनेषु वा विंशं योजनशतम् । विंशं शतं योजनानि । एवं विशम् ।योजनसहस्रम् । विंशं सहस्रं योजनानि ॥ विंशं कार्षापणं शतम् । विंशं कार्षापणं सहस्रम् । एकविंशम् शतत्रिंशम् । शतं त्रिंशं सहस्रम् । एकत्रिंशम् । चत्वरिंशम् पञ्चाशम् । दशम् । एकादशम् । शतम् । सहस्रम् । द्वादशम् । त्रयोदशम् । विशतिः । शतान्यधिकान्यस्मिन् शतानां सहस्रे विंशम् । त्रिंशम् । एकादशम् । शतसहस्रम् । विंशतिः सहस्राण्यधिकान्यस्मिन् सहस्राणां शते विंशम् । त्रिंशम् । एकादशं शतसहस्रम् ॥ राजदन्तादिपाठाच्छतस्य शब्दस्य पूर्वनिपातः । तत्संख्यमिति किम् ? विंशतिर्दण्डाधिकास्मिन् योजनशते ॥

## संख्यापूरणे डट् ॥ ३ । ३ । ७६ ॥

संख्याशब्दात् या संख्या येन पूर्यते तस्मिन् संख्यापूरणे डट् प्रत्ययो भवति ॥ एकादशानां पूर्णः एकादशः एकादशसंख्यापूरण इत्यर्थः । एवं द्वादशः त्रयोदशः । एकादशी

स्त्री । संख्याग्रहणं किम्? एकादशानामुष्ट्रकानां पूरणो घटः

घतोरिथट् ॥ ३ । ३ । ७७ ॥

घत्वन्तायाः संख्यायाः संख्यापूरणे इथट् प्रत्ययो भवति। इयतां पूरणः इयतिथः ॥ इयतिथी । कियतिथः । एतावतिथः । यावतिथः ॥

बहुगणयुगसंघात् ष्तिथट् ॥ ३ । ३ । ७८ ॥

बह्वादिभ्यः संख्यापूरणे ष्तिथट् प्रत्ययो भवति । बहूनां पूरणः बहुतिथः । बह्वीनां पूरणी बहुतिथी । गणतिथः । गणतिथी । युगतिथः युगतिथी । सङ्घतिथः सङ्घतिथी । संख्याविशेषणं सम्भवापेक्षम् ॥

षट् कति कतिपयात् ष्थट् ॥ ३ । ३ । ७९ ॥

षडादिभ्यः संख्यापूरणे ष्थट् भवति । षण्णां पूरणः षष्ठः । षष्ठी । कतीनां पूरणः कतिथः । कतिपयथः ।

चतुरः ॥ ३ । ३ । ८० ॥

चतुर्शब्दात्संख्यापूरणे ष्थट् भवति । चतुर्णां पूरणः चतुर्थः । चतसृणां पूरणी चतुर्थी ॥

यछौ चश्लुक् च ॥ ३ । ३ । ८१ ॥

चतुर्शब्दाद्यछौ प्रत्ययौ भवतः ॥ च शब्दस्य च श्लुक् । चतुर्णां पूरणः । तुर्यः तुरीयः ॥

विंशत्यादेस्तमड् वा ॥ ३ । ३ । ८२ ॥

विंशत्यादिकायाः संख्यायाः संख्यापूरणे तमड् वा भवति । पक्षे डट् ॥ विंशतेः पूरणः विंशतितमः विंशः विंशतितमी । विंशी स्त्री । एकविंशतितमः एकविंशः । द्वाविंशतितमः । द्वाविंशः । त्रिंशत्तमः त्रिंशः एकत्रिंशत्तमः एकत्रिंशः । चत्वारिंशत्तमः चत्वारिंशः । पञ्चाशत्तमः । पंचाशः ॥

शतादिमासार्धमाससंवत्सरात् ॥ ३ । ३ । ८३ ॥

शतादिभ्यः संख्याशब्देभ्यः मासादिभ्यश्च संख्यापूरणे नित्यं तमड् भवति ॥ शतस्य पूरणः शततमः एकशततमः । सहस्रतमः । लक्षतमः । मासस्य पूरणो मासतमः दिवसः । अर्धमासतमः । सम्वत्सरतमः ॥

षष्ठ्यादेरनादेः ॥ ३ । ३ । ८४ ॥

षष्ठ्यादेः संख्याशब्दात् यस्यादिरवयवः संख्याशब्दो नास्ति ततः संख्यापूरणे तमड् भवति ॥ षष्टितमः । सप्ततितमः । अशीतितमः । नवतितमः ॥ अनादेरिति किम् ? सादेर्विकल्प एव । एकषष्टितमः एकषष्टः इत्यादि ॥

नो मट् ॥ ३ । ३ । ८५ ॥

नान्तादनादेः संख्याशब्दात् संख्यापूरणे नित्यं मट् भवति । पञ्चमः पञ्चमी । सप्तमः । अष्टमः । नवमः । दशमः ॥ अनादेरिति किम् ? एकादशः । द्वादशः ॥

द्वित्रेस्तीयट्रेश्च तृश् ॥ ३ । ३ । ८६ ॥

द्वित्रिभ्यां संख्याशब्दाभ्यां संख्यापूरणे तीयट् भवति । त्रिशब्दस्य यद्रूपं तस्य प्रत्ययसन्नियोगे तृश् इत्यादेशो भवति ॥ द्वयोः पूरणः द्वितीयः । त्रयाणां तृतीयः ॥ तकारो इदिति प्रत्याहारार्थः ॥

पूर्वमनेन सादेश्चेन् ॥ ३ । ३ । ८७ ॥

पूर्वमिति क्रियाविशेषणात् द्वितीयोन्तात् केवलात् सादेः सपूर्वाच्चानेनेति तृतीयार्थे कर्त्तरि इन्भवति । पूर्वमनेन पूर्वी । पूर्विणौ । पूर्विणः । अनेनेति कर्तो क्रियामन्तरेण नेति कृतमित्यादि प्रतीयते । सादेः—कृतं पूर्वमनेन कृतपूर्वी, कटम् । भुक्तपूर्वी, ओदनम् । पीतपूर्वी, सुराम् ॥

इष्टादेः ॥ ३ । ३ । ८८ ॥

इष्टादेः प्रथमान्तादनेनेति तृतीयार्थे कर्तरि इन् भवति इष्टमनेन इष्टी, यज्ञे । अधीती, वेदे इत्यादि ॥

श्राद्धमद्य भुक्तं ठेनौ ॥ ३ । ३ । ८८ ॥

श्राद्धशब्दात्प्रथमान्ताद्द्यभुक्तमित्येवमुपाधिकादनेनेति तृतीयार्थे कर्तरि ठेनौ भवतः । श्राद्धमनेनाद्य भुक्तं श्राद्धिकः श्राद्धी ॥

क्षेत्रेऽन्यस्मिन्नाश्ये घः ॥ ३ । ३ । ९० ॥

क्षेत्रशब्दात् सप्तम्यन्तादन्योपाधिकात् नाश्येऽर्थे घो भवति ॥ अन्यस्मिन् क्षेत्रे जन्मान्तरशरीरे नाश्यः क्षेत्रीयो व्याधिरसाध्य उच्यते ॥ क्षेत्रीयं विषम् । परशरीरे संक्रमय्य नाश्यम् । चिकित्स्यम् । क्षेत्रियाणि तृणानि सस्यक्षेत्रादुत्पाट्यमानानि । क्षेत्रीयः । पारदारिकः । अन्यस्त्रीशक्तो निग्राह्यः । दाराश्च क्षेत्रम् ॥

श्रोत्रियो वा छन्दोऽध्यायी ॥ ३ । ३ । ९१ ॥

श्रोत्रिय इति छन्दःशब्दादध्यायनि घः श्रोत्रभावश्च निपात्यते वा । छन्दसोऽध्यायी श्रोत्रियः पक्षे छान्दस इत्यपि भवति ॥

इन्द्रियम् ॥ ३ । ३ । ९२ ॥

इन्द्रशब्दात् घप्रत्ययो निपात्यते । रूढिशब्दोऽयं चक्षुरादीनां संज्ञा । तत्र यथायोग्यमर्थकल्पना । इन्द्र आत्मा तस्य लिंगं तेन सृष्टं जुष्टं दत्तमिति च इन्द्रियम् ॥

तेन वित्ते चुञ्चुचणौ ॥ ३ । ३ । ९३ ॥

तेनेति तृतीयान्ताद्वित्तेऽर्थे चुञ्चुचणौ भवतः । वित्तः

परिच्छिन्नमेवान्तःकरणं साक्षितादात्म्यापन्नमहमनुभवविषय इत्याह तस्मादिति । पराभिमतात्मन इन्द्रियग्रहणयोग्यत्वेऽपि तत्र प्रतीयमानपरिच्छिन्नपरिमाणं नारोपितं तत्र तद्बाधकाभावात् । तथा च तत्तादात्म्यादेव सिद्धान्त्यभिमतात्मनि परिच्छेदावभास इत्यभिप्रेत्याह किं चेति । किं जडात्मनो विभुत्वे प्रत्यक्षं प्रमाणमुतानुमानं, किं वाऽऽगमः? । नाद्य इत्याह प्रत्यक्षस्येति । द्वितीयं निराकरोति–न चेति । घटे तद्गतगुणादौ च व्यभिचारवारणाय स्पर्शशून्यद्रव्यत्वादित्युक्तम् । एवमप्युत्पन्नं द्रव्यं क्षणमगुणमिति मते प्रथमक्षणे घटे व्यभिचारः स्यात्तन्निरासाय सर्वदेति । भट्टमतानुसारीदमनुमानमिति न मनसि व्यभिचारः । वैशेषिकाद्यनुमानं नित्येन्द्रियेत्यादि । अनुमानद्वयेऽपि साधारणं दोषमाह धर्मिग्राहकेति । न चाहमनुभवमात्रस्य धर्मिग्राहकत्वात् तस्य च परिच्छेदाविषयत्वान्न तद्विरोध इति वाच्यम् । अहमनुभवस्याऽऽत्मपरिच्छेदविषयत्वनियमाभावे कदाचिद्गृहान्तस्थस्य स्वस्य बहिःसत्त्वसंशयादिप्रसङ्गादिति भावः । तर्ह्यहमनुभवः परिच्छेदांशे भ्रम इत्याशङ्क्य किं प्रत्यक्षबाधाद्भ्रमत्वम्, उतानुमानबाधात्?, न सर्वथापीत्याह न च प्रत्यक्षमिति । किं च प्रत्यक्षस्य भ्रमत्वे सिद्धे तदविरोधेनानुमानोदयः । तदुदये च विषयापहारात् प्रत्यक्षस्य भ्रमत्वसिद्धिरितीतरेतराश्रयःस्यादित्याह अन्योन्येति । अनुमानस्यापि कुत्रचित्प्रत्यक्षबाधकत्वदर्शनादत्रापि तथा किं न स्यादित्यत आह अत एवेति । अतःशब्दार्थमाह तत्रेति । चन्द्रद्वित्वस्य स्वाभाविकत्वे दोषं विनाऽप्युपलम्भः स्यादित्यादितर्कैश्चन्द्रद्वित्वप्रत्यक्षबा-

धक इत्याह अनुमानस्येति । प्रकृते ऽनुमानमेव युक्तिबाधितमित्याह सुखेति ॥

ननु शब्दवदेव सुखादेरसमवाय्यवच्छेदेनोत्पत्तौ नोक्तदोष इत्यत आह न च विभ्विति ।

विभुगुणानां कारणावच्छेदेनोत्पत्तिनिरसनम् ।

न च विभुकार्यत्वात्सुखादिकं स्वासमवाय्यवच्छिन्नप्रदेशगतमिति वाच्यम् । सर्वशरीरव्यापिसुखानुपलम्भप्रसङ्गात्, सर्वत्र वोपलम्भप्रसङ्गात् । न स्याच्च भेर्याद्यवच्छिन्नाकाशप्रदेशनिष्पन्ननिनादस्य ब्रह्मायुषाऽप्युपलम्भः । ननु निमित्तदेशानुसारिणो विभुगुणाः । शब्दे च निमित्तं वायुः, सुखादौ च तत्तद्विषयइति नोक्तदोष इति चेन्न । तथा सति मनःशरीरयोरपि निमित्तत्वेन तद्देशत्वापातात् । न चासाधारणनिमित्तं नियामकं, चंदनादेरपि स्वपरसुखसाधारणत्वात् ज्ञानादिसाधारणत्वाच्च । न च सुखादौ विषयो विषयत्वेनैव नियामक इति वाच्यम् । मानोरथिकसुखादौ नियामकविषयाभावात् । शरीराद्युपाधिकृतात्मप्रदेशाभावाच्च तत्रैव सुखादिरितिवक्तुमशक्यम् । उपाधिकृतस्य तज्ज्ञाप्यस्य वा प्रदेशस्यात्मन्ययोगादित्युक्तत्वात् । विभ्वात्मवादे तस्य सर्वशरीरसंयोगित्वेन पुत्रादिशरीरस्य स्वादृष्टाकृष्टत्वाच्च तदवच्छेदेनापि

स्रक्चंदनादिसंयोगे भोगप्रसङ्गात् । कस्यापि स्वादृष्टमात्रजन्यत्वाभावात् । परकायं प्रविष्टस्य पिशाचादेश्च शरीरांतरे भोगाभावप्रसङ्गात् । स्वादृष्टजन्यस्यैव भोगहेतुत्वे आत्ममनसोस्तव मते भोगाजनकत्वप्रसङ्गाच्च ।

मनसोऽणुत्वमते दोषमाह सर्वशरीरेति । तद्विभुत्वे दोषमाह सर्वचेति । किं चास्मिन्पक्षे भेर्याकाशसंयोगावच्छेदेनोत्पन्नाद्यशब्दाद्यसमवायिकारणकद्वितीयादिशब्दानामपि तत्रैवोत्पत्तेः श्रोत्रासमवायात्तदनुपलम्भापात इत्याह न स्याच्चेति । अस्तु तर्हि निमित्तसंयोगावच्छेदेन विभुविशेषगुणोत्पत्तिः । तथा च न पूर्वोक्तदोष इतिशङ्कते ननु निमित्तेति । विषयस्य संयोगद्वारा सुखादिनियामकत्वं निमित्तत्वेन, उतासाधारणनिमित्तत्वेन, किंवा विषयत्वेन ?, आद्ये दोषमाह तथा सतीति । मनःसम्बन्धप्रयुक्त्या सुखादेरणुदेशत्वं, शरीरसम्बन्धप्रयुक्त्या तु शरीरव्यापित्वं स्यादित्यर्थः । द्वितीयं दूषयति न चेति । चन्दनादेरसाधारणत्वं किं नियतपुरुषसुखजनकत्वमुत सुखमात्रजनकत्वम्?, उभयथाऽप्यसिद्धमित्याह चन्दनादेरिति । विषयाभावेऽपि तद्ध्यानमात्रात्सुखदर्शनात् तृतीयोऽप्ययुक्त इत्याह न च सुखादाविति । निष्प्रदेशे निमित्तसंयोगतदधीनप्रदेशभेदयोरसंभवान्न ततः सुखादिव्यवस्थेत्याह शरीरेति । औपाधिकप्रदेशभेदाङ्गीकारेऽप्यतिप्रसङ्गस्तादवस्थ्य इत्याह विभ्वात्मेति । सर्वशरीरसंयोगित्वेनेत्यस्य तदवच्छेदेनापीत्यनेन सम्बन्धः । ननु स्वादृष्टाकृष्टशरीरस्यैव स्वसुखे

निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा" इत्यादि-
क्रियाभिधायिश्रुतिविरोधश्चेत्याह दुःखेति ।

निर्गमनश्रुतेरन्यपरत्वान्न तद्विरोध इत्याशङ्क्याह-
नचेति ।

निष्क्रमणश्रुतेरौपचारिकत्वखण्डनम् ।

नचेदमौपचारिकङ्गमनादिवचन तत्र तत्र पौनःपुन्येन श्रूयमाणस्योपचरितार्थत्वायोगात् । तथा चाहुर्न्यायविदः—"अभ्यासे हि भूयस्त्वमर्थस्य भवति नाल्पत्वमपि प्रागेवोपचरितार्थत्वम्" इति । अभ्यासस्य तात्पर्यलिङ्गत्वात् अनिर्गमने वा पारलौकिकभोगोऽपि न स्यात् । न च सर्वगतस्यात्मनस्तत्तत्प्रदेशे कर्मवशाच्छरीरारम्भे तत्र मनसो वृत्तिलाभात्पारलौकिकसुखाद्युत्पत्तिरिति वाच्यम् । अदृष्टस्य स्वसमवायिप्रदेशे कार्यजनकत्वात् । स्वसमवायिगतगुणारम्भकाणां तथात्वनियमात् । अन्यथा घटादेरधःप्रदेशसमवेताग्निसंयोगादग्रदेशेऽपि लौहित्यप्रसङ्गात् । अंगुल्यग्रात्मप्रदेशावच्छिन्नकण्टकसंयोगाच्छिरसोऽपि दुःखप्रसङ्गाच्च । नचादृष्टस्य तथात्वे किं बाधकमिति वाच्यम् । दृष्टस्वभावभङ्गस्यादृष्टकल्पनस्य च बाधकत्वात् । शरीरानवच्छिन्नप्रदेशेऽपि ततः सुखाद्युत्पत्तिप्रसङ्गाच्च । शरीरावच्छिन्नानवच्छिन्नयोरनिर्वचनीयभेदस्याप्यनङ्गीकारे तत्रैव

जनयेन्नान्यत्रेति व्यवस्थाऽयोगात् ।

प्रागेवेति । दूरत एवेत्यर्थः । उपपत्तिरपि तत्र तात्पर्यलिङ्गमस्तीत्याह अनिर्गमने वेति । ननु कर्त्तुर्विभुत्वान्मेरुपृष्ठादावपि सतस्तत्तच्छरीरोपहितात्मप्रदेशोत्पन्नकर्मभिरेवाभिनवशरीरादिपुरःसरो भोगो भविष्यतीति चेत् न। प्रदेशान्तरगतादृष्टेन प्रदेशान्तरे भोगायोगादित्याह-न च सर्वगतस्येति । नन्वपेक्षाबुद्ध्यादेः प्रदेशान्तरे द्वित्वाद्यारम्भकत्ववददृष्टस्यापि तथात्वं किं न स्यादित्यत आह-स्वसमवायीति । न चोत्तरशब्दारम्भकपूर्वशब्दे नायं नियम इति वाच्यम् । उक्तनियमादेव तत्रापि निमित्तवायुसंयोगस्यैवारम्भकत्वसम्भवे पूर्वशब्दस्यापि कारणत्वकल्पनाऽयोगादिति भावः । उक्तनियमानङ्गीकारे बाधकमाह अन्यथेति । तर्ह्युक्तबाधकादग्निसंयोगादावेवायं नियमो नादृष्ट इत्याशङ्क्याह-न चेति । अतिप्रसङ्गबाधकश्च प्रकृतेपि तुल्य इत्याह-शरीरानवच्छिन्नेति । ननु शरीरावच्छिन्नप्रदेश एव सुखादिजनकत्वमदृष्टस्य स्वभाव इत्यत आह शरीरावच्छिन्नेति ।

"आत्मैवाधस्तादात्मोपरिष्टादाकाशवत्सर्वगतः" इत्यादिश्रुतित एव दुःखाद्याश्रयस्य विभुत्वमिति तृतीयं पक्षं दूषयति नापीति ।

श्रुत्याऽऽत्मनोविभुत्वाशङ्कापरिहारः । नापि श्रुतितः सुखाद्याश्रयस्य सर्वगतत्वसिद्धिः । ब्रह्मत्वेनैव सुखाद्याश्रयस्य सर्वगतत्वप्रतिपादनात् । तस्मात् ज्ञानाद्याश्रयस्य

सर्वगतत्वे प्रमाणाभावात् । अहमिहैवेत्यनुभवात् परिच्छिन्न एव कर्त्ता भोक्ता । अकर्त्तुरात्मनः स्वाभाविकपरिच्छेदे घटादिवदनित्यत्वप्रसङ्गेन मुक्त्यनुपपत्तेः । अन्तःकरणतादात्म्यात्सर्वगतोपि दृगात्मा परिच्छिन्न इत्यहमर्थो द्विरूपः अन्तःकरणाभेदश्चात्मनो मृषैवेत्यहमर्थधर्मः कर्तृत्वादिरपि मृषाकल्पितधर्मत्वात्संप्रतिपन्नवदिति । नन्वस्तु कर्त्तात्माऽणुः अहमिहैवेत्यनुभवात् । अनित्यत्वदोषाभावाच्च । न चैवं सुखादेरणुधर्मतया सर्वशरीरव्याप्तित्वानुपपत्तिः अणुगुणस्यापि शरीरव्याप्त्यविरोधात् । न च गुणस्य गुणिमात्रप्रदेशत्वम् । प्रदीपगुणे प्रभायां व्यभिचारात् । गन्धस्यापि स्वाश्रयं विनाऽन्यत्र गमनादिति चेन्न । न तावदन्यत्रोत्पन्नसुखादि देशान्तरं व्याप्नोति, पूर्वदेशे तदनुपलम्भप्रसङ्गाच्च । न च प्रदीपप्रभादृष्टान्तोपि, तस्या गुणत्वे मानाभावात् । द्रव्यत्वव्यवस्थापकक्रियादेः सत्त्वाच्च ।

आत्मैवेदंसर्वमित्यादि वाक्यशेषपर्यालोचनया ब्रह्मभावेनैव सर्वगतत्वाभिमानान्नात्र पराभिहितात्मनो विभुत्वसिद्धिरित्याह ब्रह्मत्वेनेति। दुःखादिपरिणामिनि परिच्छेदानुभवस्य बाधकाभावात्तस्य निरुपाधिकः सङ्ग्त्युपसंहरति तस्मादिति । कूटस्थात्मनि परिच्छेदाद्यवभासस्तु विपरीत इत्याह अकर्तुरात्मन इति । अना-

त्मतादात्म्यापन्नस्यैवाहमर्थत्वप्रतिपादनफलमाह अन्तः करणेति । कल्पितधर्मत्वादिति । कल्पितस्य धर्मत्वात् स्वप्नकल्पितराजभो ादिवदित्यर्थः । अहमर्थानुभवगोचरे वस्तुनोऽपरिच्छेदाभावान्न द्वैरूप्यमिति । तांश्चिकश्चोदयति नन्वस्त्विति । सुखाद्याश्रयस्याणुत्वे सर्वाङ्गीणसुखोपलब्ध्यनुपपत्तिरित्युक्तमपवदति नचैवमिति । ननु सुखादिः स्वोपादानातिरिक्तदेशसंसर्गी न भवति गुणत्वाद्रूपादिवदित्यत आह न चेति । प्रभाया द्रव्यत्वान्न व्यभिचार इत्याशंक्य प्रसिद्धगुणे व्यभिचारमाह गन्धस्येति । आत्मनोऽणुत्वे तस्य तद्गतधर्मस्य चाप्रत्यक्षत्वप्रसंगात् । नैतदित्याह नेति । किंच किं सुखादिकं गुणः, उत द्रव्यम् ? । आद्येऽपि किमुत्पन्नं सुखादि प्रदेशान्तरं क्रियया व्याप्नोति, उत तद्व्याप्यैवोत्पद्यते ? । आद्यं दूषयति न तावदिति । पूर्वदेशापरित्यागेनापि देशान्तरप्राप्तिदर्शनान्नोक्तदोष इत्याशंक्य दृष्टांतवैषम्येण दूषयति न च तत्तुल्यमेवेति । अस्मिन्पक्षे गुणत्वमप्यनुपपन्नमित्याह क्रियाश्रयत्व इति । प्रदीपप्रभाया गुणत्वेऽपि सावयवत्वादिकं दृष्टमित्याशंक्याह न च प्रदीपेति ।

आद्यविकल्पे द्वितीयपक्षं शङ्कते अस्त्विति ।

सुखादीनां द्रव्यत्वनिरासः । अस्तु सुखादिकमपि द्रव्यमिति चेन्न । कार्यद्रव्यस्यापि गुणवत्स्वसमवायिनं विहायान्यत्र गमनायोगात् प्रदीपस्तु प्रभायां निमित्तमात्र, मुपादानं तु तत्प्रदेशा अवयवा एव । प्रदी-

पजन्यत्वमात्रेणैव प्रभाव्यवहारः । देवदत्तपुत्र इतिवत् । सुखमपि तर्हि स्वावयवारब्धं निमित्तात्मतन्त्रं प्रभावदिति चेत् न । सुखत्वस्यावयवावयविवृत्तित्वे प्रमाणाभावात् । अनेकसुखकल्पने गौरवाच्च । न च गुण एव सुखादिरुत्पद्यमानः शरीरदेशं व्याप्नोतीति वाच्यम् । आश्रयप्रदेशादन्यत्र गुणानुत्पत्तेः । अत एव वाय्वाऽऽनीतगंधदृष्टान्तोऽपि परास्तः । गन्धस्याश्रयेण सहैव गमनात् । अदृष्टोपनीतावयवान्तरेण पुष्पादिपूरणाच्च । न चैवं नखलूनपुष्पेऽपि तथात्वप्रसङ्गः । अदृष्टस्य कार्यगम्यत्वात् । अन्यथा सद्योऽपचितकुसुमेष्वेकगन्धगमनानन्तरं गन्धान्तरारम्भवत् तत्रैव पर्युषितेषु गन्धप्रसङ्गात् । अणौ चात्मनि शिरःपाण्याद्यवयवच्छेदभेदेन युगपत् तुल्यबलसुखदुःखसामग्रीरूपे सति युगपत्सुखदुःखायोगात् ।

अत्रापि किमणवात्मैव सुखोपादानमुत सुखावयवाः ? । आद्ये दोषमाह न कार्येति । जलौकादेरपि स्वोपादानरहितप्रदेशेऽभावादिति भावः । दीपोपादानप्रभाया गृहव्यापित्ववदणवात्मोपादानसुखादेर्देहव्यापित्वमित्याशङ्क्य दृष्टान्तासम्प्रतिपत्त्या दूषयति प्रदीपस्त्विति । ननु पटरूपमितिवत्प्रदीपप्रभेति व्यवहारस्तदुपादानत्वं विनाऽनुपपन्न इत्याशङ्क्याह प्रदीपेति ।

द्वितीयं पक्षं शङ्कते सुखमपीति । द्रव्योपादानस्य स्वकार्यवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वनियमात्सुखावयवानामपि सुखत्वं वक्तव्यं, तथा च युगपदनेकसुखानुपलब्धिविरोधः कल्पनागौरवं चेत्याह सुखत्वस्येति । गुणत्वपक्षे देशान्तरं व्याप्यैवोत्पद्यतइति पक्षं दूषयति न च गुणइति । गुणस्य स्वाश्रयसम्बन्धद्वारेणैव देशान्तरसम्बन्धनियमादेव गन्धदृष्टान्तोऽप्यसम्प्रतिपन्न इत्याह अत एवेति । केषांचित्पुष्पावयवानामितस्ततो गमनेऽवयवह्रासात्पुष्पे गुरुत्वपरिमाणादेरपि ह्रासः स्यादित्याशङ्क्याह-अदृष्टेति । अदृष्टमात्रादवयवसन्धाने नखसंछिन्नपुष्पादावपि तथा स्यादित्याशङ्क्य तत्र तादृशादृष्टे प्रमाणाभावान्मैवमित्याह न चैवमिति । अदृष्टस्यानियामकत्वे दृष्टकारणमात्रस्यापि कुसुमेऽपि सत्त्वात्तदाऽपि पूर्ववदेव गन्धः स्यादित्याह-अन्यथेति । किंचाणवात्मनो युगपच्छिरःपाद्याद्यवयवावच्छेदाभावादवयवभेदेन व्यवस्थितसुखदुःखयौगपद्यमनुभूयमानं न स्यादित्याह-अणौ चात्मनीति ।

एवमवयवभेदेन प्रयत्नद्वययौगपद्यमपि न स्यादित्याह-एवमिति ।

अवयवभेदे प्रयत्नयौगपद्यनिरासः । एवं हस्तद्वयावच्छिन्ने युगपत्प्रयत्नद्वयायोगात् । न च प्रयत्नोऽप्ययमेक एव । मध्येऽपि तदुपलम्भप्रसङ्गात् । सर्वशरीरचेष्टाप्रसङ्गाच्च । सगुणज्ञानफलस्य युगपदनेकशरीरपरिग्रहस्यानुपपत्तेश्च । भोगातिशयार्थं ह्यात्मनोऽनेकशरीरपरिग्रहः । न च निरात्मशरीरेषु भोगः सम्भवति

तदाश्रयस्यात्मनोऽभावात् । एतेनाणोरप्यात्मनो ज्ञानस्य विभुत्वाद्युगपदनेकशरीरं तद्वारात्माधितिष्ठतीति निरस्तम् । तथाप्याश्रयाभावेन तत्तच्छरीरेषु सुखानुत्पत्तेः । न चात्मनोऽनणुत्वे "बालाग्रशतभागस्य आराग्रमात्रो ह्यवरोऽपि दृष्ट" इत्यादिश्रुतिविरोधः । उदाहृतश्रुतावणुत्वबोधकपदाभावात् । न च बालाग्रायुतभागोपमितस्याणुत्वं विना न परिमाणान्तरं कल्पयितुं युक्तमिति वाच्यम् । बालाग्रायुततमभागस्य वैशेषिकाभिमतसिद्धाणोरप्यतिसूक्ष्मत्वापत्त्या श्रुतिबाधप्रसङ्गात् । उदाहृताराग्रश्रुतिविरोधाच्च कल्पनानुपपत्तेः । नह्याराग्रस्य वैशेषिकादिमतसिद्धाणुत्वमस्ति । न च "एषोऽणुरात्मा चेतसा वेदितव्यः" इति श्रुतिविरोधः । तस्याः परमात्मविषयत्वात् । वेदितव्यत्वनिर्द्देशात् । न हि परस्मादन्यस्य वेदितव्यत्वम् ।

एक एव प्रयत्नोऽवयवद्वयव्यापीत्याशङ्क्याह नचेति । "स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा" इत्यादिशास्त्रसिद्धानेकशरीरपरिग्रहोऽपि युगपदणवात्मन्यनुपपन्न इत्याह सगुणेति । अनुपपत्तिमेव स्फोरयति भोगातिशयेति । अणवात्मगतज्ञानस्य शरीरान्तरव्यापित्वात् तद्वारा भोगसम्भव इत्यत आह एतेनेति ।

ज्ञानस्य द्रव्यत्वे गुणत्वे वाप्याश्रयासंसृष्टदेशगामित्वमसम्भवीत्युक्तप्रायम्। तदङ्गीकृत्यापि दूषयति तथापीति। निरात्मकघटादिषु सुखाद्यनुत्पादवत्ताद्दृशशरीरान्तरेऽपि तथा स्यादित्यर्थः। जीवाणुत्वस्य श्रुतिसिद्धस्य कथं युक्तिमात्रेण निरास इत्यत आह न चेति। किमुदाहृतश्रुतिर्मुखतोऽणुत्वं प्रतिपादयति, उत श्रुतार्थानुपपत्त्या?। नाद्य इत्याह उदाहृतेति। बालाग्रशतभागस्य शततमभागो बालाग्रायुतभागः तदुपमितत्वमणुत्वं विना नेति, द्वितीयं पक्षं निराकरोति नचबालेति। बालाग्रञ्चतुरणुकं पञ्चाणुकं वा स्यात् परमाणोश्च तच्छततमभागत्वस्याप्यसंभवादयुततमभागत्वं बाधितमित्याह बालाग्रेति। बालाग्रायुततमभागत्वेनाणुत्वं लक्ष्यत इत्याशङ्क्याह उदाहृतेति। आराग्रस्यापि सूक्ष्मत्वान्न तद्विरोध इत्याशङ्क्याह न हीति। आरेति। तोत्रप्रोतायःशलाकोच्यते। तदग्रस्य प्रत्यक्षत्वेन महत्त्वात्। इतरथा तदप्रसिद्धयोपमैव न स्यादित्यर्थः। श्रुत्यन्तरे साक्षादेव जीवाणुत्वं सिद्धमित्यत आह नचैष इति। अस्यां श्रुतौ परमात्मलिङ्गदर्शनान्न जीवपरतेत्याह तस्या इति। जीवस्यापि वेदितव्यत्वमस्तीत्याशङ्क्याह न हीति। यस्मिन् द्यौः पृथिवीरापोऽन्तरिक्षमेतन्मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमन्या वाचो विमुं ।यथेति परस्यैव वेदितव्यत्वावधारणादित्यर्थः।

सन्निधानादपि परमात्मैव तदर्थ इत्याह न चक्षुषेति।

परमात्मन एववेदि- तव्यत्वकथनम्।

"न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा ॥
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यति ध्यायमानः" ॥

इतिपूर्ववाक्ये निखिलेन्द्रियाग्राह्यस्य केवल-तपआद्यगोचरस्य ध्यानैकलभ्यस्य परस्यैव प्रस्तुतत्वाच्च। न चैष इति प्रत्यक्षत्वनिर्देशात्प्राणधारणानिर्देशाच्च जीव एवायमितिवाच्यम्। अणोरप्रत्यक्षत्वात्। न च तद्गुणस्य प्रत्यक्षत्वात् सोऽपि प्रत्यक्ष इति वाच्यम्। ज्ञानादेरणुवृत्तित्वे तस्याप्यप्रत्यक्षत्वात्, गुणस्य प्रत्यक्षत्वेऽपि ततोऽत्यन्त-भिन्नस्य गुणिनः प्रत्यक्षत्वायोगाच्च। अन्यथाऽऽकाशस्यापि प्रत्यक्षत्वप्रसङ्गात्। व्यवहितप्रदीपस्य प्रभायां गृह्यमाणायामप्यग्रहणात् सर्वाधारे परस्मिन्नपि प्राणसंवेशनसंभवाच्च। तस्मादस्मिन्वाक्ये स्वप्रकाशतया प्रत्यक्षसिद्धस्य जीवस्य पराभेदाभिप्रायेणाणुरिति दुर्दर्शत्वमुच्यते। अणोरणीयानित्यादिना परस्य तन्निर्देशवत्। बालाग्रशतभागस्येति श्रुत्यापि स्वतोऽनन्तस्य ब्रह्मात्मना जीवस्याल्पपरिमाणबुद्ध्यवच्छेदकतया ऽल्पत्वमात्रमुच्यते, न त्वणुत्वम्। अन्यथा "स चानंत्या-

य"इति तस्यापरिच्छिन्नत्वविषयवाक्यशेषविरोधात् । एकस्य पारमार्थिकविरुद्धपरिमाणद्वयायोगात् ॥

अन्यैर्देवैरन्यैरपीन्द्रियैरित्यर्थः । ज्ञायतेऽनेनेति ज्ञानं वेदान्तवाक्यं, तस्य प्रसादोऽसंभावनाद्यभिभवाभावः। तपश्चादिना विशुद्धसत्त्वस्तदनन्तरं श्रवणादिपुरःसरं ध्यायमानो वेदान्तप्रमाणेन तं परमात्मानं साक्षात्कुरुत इत्यर्थः । नन्वेषइति प्रत्यक्षलिङ्गात् "यस्मिन्प्राणः पञ्चधा संविवेश"इति वाक्यशेषावगतप्राणधारणलिङ्गाच्च दुर्बलसंनिध्यनुगृहीतमेतमेकं ब्रह्मलिङ्गं बाध्यत इति चेत् । न, प्रत्यक्षत्वस्य तावदणवात्मलिङ्गत्वानुपपत्तेरित्याह नचैषइति । अप्रत्यक्षत्वादिति । जीवस्याप्यणुत्वेऽप्रत्यक्षत्वापातादिति शेषः । ननु गुणिप्रत्यक्षत्वे 'प्रत्यक्षत्वे प्रत्यक्षगुणवत्त्वं प्रयोजकं न तु महत्त्वादि'इत्याशंक्याणुत्वे प्रत्यक्षगुणवत्त्वमेवानुपपन्नमित्याह न च तद्गुणेति । अन्यप्रत्यक्षत्वेन अन्यस्य प्रत्यक्षत्वेऽतिप्रसङ्ग इत्यभिप्रेत्याह गुणस्येति । गुणगुणिभावस्य नियामकत्वान्नातिप्रसङ्ग इत्याशङ्क्याह अन्यथेति । अणवात्ममते दीपप्रभायास्तद्गुणत्वात्क्वचित्तद्ग्रहेऽपि महानपि दीपो न गृह्यते किमु वक्तव्यमणवात्मनीत्यभिप्रेत्याह व्यवहितेति । द्वितीयलिङ्गस्य परस्मिन्नपि संभवान्न तद्विरोध इत्याह सर्वाधार इति । परमात्मपरिग्रहेऽप्येषोऽणुरिति श्रुतिद्वयानुपपत्तिरित्याशङ्कां निराकुर्वन्नुपसंहरति तस्मादिति । दुर्ज्ञेयत्वाभिप्रायेणाणुशब्दप्रयोगोऽन्यत्रापि दृष्ट इत्याह अणोरिति ।

महतो महीयानिति वाक्यशेषात् दुर्ज्ञेयत्वमेव तत्राणीयस्त्वमितिभावः। बालाग्रश्रुतिरपि अनेकाद्यन्तः करणोपाधिकपरिच्छेदानुवादेन जीवस्य ब्रह्मात्मनाऽपरिच्छेदपरेत्याह बालाग्रेति । मात्रचो व्यावर्त्त्यमाह नत्विति । स्वाभाविकाणुत्वपरत्वे दोषमाह अन्यथेति ।

आनन्त्यमेवौपाधिकमणुत्वं च स्वाभाविकमिति वैपरीत्यमेव किं न स्यादित्यत आह – अणवात्मनीति ।

आनन्त्यस्यौपाधिकत्वमणुत्वस्यैभाविकत्वम् । अणवात्मन्यौपाधिकमहत्त्वायोगाद्वाक्यशेषेणौपाधिकानन्त्यमनूद्यतइति वक्तुमयोगाच्च। न चानन्त्यमित्यनेकत्वं नित्यत्वं वोच्यते, न त्वपरिच्छिन्नत्वमिति वाच्यम् । न तावत्प्रतिशरीरमनेकत्वं बहूनामेकत्र समवाये विरुद्धदिक्क्रियया सद्य एव शरीरविदारणप्रसङ्गात् स्वीयनिखिलभोगप्रतिसन्धानेनैकत्वावधारणाच्च । नाप्यनन्तेषु शरीरेषु जीवोऽनन्तइति प्रतिपाद्यत इति वाच्यम्। प्रतिशरीरं चेष्टादिलिङ्गादेवाणोरात्मनः प्रतिशरीरं भेदसिद्धौ तदुपदेशवैयर्थ्यात् जीवानेकत्वस्य प्रयोजनाभावेन श्रुत्या प्रतिपाद्यत्वाच्च । न चानधिगतेऽर्थे परिच्छिन्नत्वे तात्पर्ये संभवति अनुवादो युज्यते।श्रुतेरुत्सर्गतो ऽनधिगतार्थत्वात्। अत एव न नित्यत्वमपि तस्यार्थः । तस्याप्यणुत्वसामर्थ्याद्वाक्यशेषप्रतिपन्नापरिच्छिन्नत्वसा-

मर्थ्यादेव वा सिद्धेः । आराग्रमात्रश्रुतावपि श्रुत्यैव बुद्धेर्गुणेनाऽऽराग्रमात्र इति तस्य बुद्ध्यौपाधिकत्वप्रतिपादनात् । न चाऽऽत्मगुणेनाराग्रमात्र इति योजना बुद्धेर्गुणेनेत्यस्यानन्वयात्। स्वत एवाराग्रमात्रस्याराग्रस्येवानित्यताप्रसङ्गात् । तस्मादात्मगुणेन महानपि बुद्धेर्गुणेनाराग्रमात्र इतियोजना अध्याहारस्य परमतेऽप्यावश्यकत्वात् ।

अपरिच्छिन्नाकाशादेः परिच्छिन्नघटाद्युपाधित्वदर्शनाज्जीवापरिच्छेदाननुभवादनुवादायोगाच्चेति भावः । जीवस्य नानात्वं नित्यत्वं वा वाक्यशेषार्थः । अतो नाणुत्वस्य तद्विरोध इत्याशङ्क्याह न चानन्त्यमिति । नानात्वमानन्त्यमिति पक्षे किं प्रतिशरीरं नानात्वमुतानन्तशरीराभिप्रायेण ? । आद्ये व्यवहारानुपपत्तिरित्याह-न तावदिति । वरगोष्ठीवत्क्रमेण कस्य चित्कश्चिद्भोग इति नोक्तदोष इत्याशङ्क्य तथात्वे एकशरीरवर्तिनिखिलभोगस्यैकेनानुसन्धानानुपपत्तिरित्यभिप्रेत्याह-स्वीयेति । द्वितीये किं जीवनानात्वं प्रतिपाद्यते उतानूद्यते ? नाद्यः । तस्यान्यतःप्राप्तत्वात्, प्रयोजनाभावाच्चेत्यभिप्रेत्याह नाप्यनन्तेष्विति । औत्सर्गिकानधिगतार्थबोधकत्वे बाधकाभावाद् द्वितीयोऽपि न युक्त इत्याह-न चानधिगत इति । अन्यतः प्राप्तत्वादेव न जीवनित्यत्वं तदर्थं इत्याह-अत एवेति । परमते स्वमते च नित्यत्वस्यान्यतः प्राप्तिं क्रमेण दर्शयति तस्यापीति । “बुद्धेर्गुणेन” इत्यादिश्रुतिरपरिच्छिन्नात्मनि मुख्यैवेत्याह आराग्रेति । सन्निधानादात्मगु-

णेनैवाराग्रमात्र इति योजनोचितेत्याशङ्क्येतरपदानन्वय-प्रसङ्गेन दूषयति न चात्मेति । आराग्रोपमितस्य मध्यम-परिमाणत्वेनानित्यतापातश्चेत्याह स्वत एवेति । तर्हि सिद्धान्तेऽप्यात्मगुणेनेत्यस्यानन्वय इत्यत आह तस्मा-दिति । अध्याहार एव तर्हि दोष इत्याशङ्क्य परमते-ऽपि बुद्धेर्गुणो न महानपीत्यध्याहारस्यावश्यकत्वात्, तथा चानित्यत्वस्यापरिहार्य्यत्वादित्यभिप्रेत्याह अध्या-हारस्येति ॥

ननु बुद्धिगुणशब्देन ज्ञानस्य विवक्षितत्वान्नान्व-यानुपपत्तिः, नदाऽध्याहार इत्याशङ्क्याह-न चात्मेति ।

(जीवस्याणु-त्वनिरसनम्) न चात्मगुणेनाराग्रमात्रजीवो बुद्धेर्गुणो न दृष्ट इत्यन्वयेनाध्याहार इति वाच्यम् । अनित्यताबाधकस्योक्तत्वात्, गुणेति वैयर्थ्यात्, परमते बुद्धेरेव दर्शनत्वात्, ज्ञाने गुणाभावाच्च । घटसंवृतमाकाशं नीयमाने घटे यथा घटो नीयते नाकाशं, तद्वज्जीवो नभोपमः ।

"यथा ह्ययं ज्योतिरात्मा विवस्वा-
नपोभिन्नो बहुधैकोऽनुगच्छन्" ॥
"उपाधिना क्रियते भेदरूपो
देवः क्षेत्रेष्वेवमजोऽयमात्मा" ॥

इतिश्रुतिद्वयेनाकाशजलसूर्योपमोपादाना-ज्जीवः सर्वगत एव ब्रह्मरूपेण उपाधिना च परिच्छिन्न इवेति निश्चीयते । एतेन जीवस्य

सर्वगतत्वश्रुतिः सर्वत्र भोगार्थं तस्य गमनपरा नाणुत्वेऽपि विरुद्ध्यत इति प्रत्युक्तम् । आकाशदृष्टान्तेन स्वतो गमननिषेधात् । तस्मान्न जीवोऽणुरिति । ततः प्रादेशिकात्मविषयोऽहमनुभवः कल्पितात्मविषय इति स एव कर्ता भोक्ता च, न तु केवल उपाधितादात्म्यरहित इति । स चोपाधिर्बुद्धिरन्तःकरणं मनोविज्ञानमित्यादिशब्दाभिधेयः तस्यैवाहंबुद्धिगोचरत्वात् ।

बुद्ध्या दृष्ट इत्येतावता विवक्षितार्थसिद्धेः षष्ठीगुणपदयोर्वैयर्थ्यं चेत्याह-गुणेति । वस्तुतः सिद्धान्ते एवेदृशी योजना घटते । अपरो बुद्धेर्गुणेनाराग्रमात्र आत्मगुणेनैव कल्पितभेदेन गुणवद्गुणः साक्षिचैतन्यं तेनैव दृष्टः, न तु घटादिवत्प्रमाणजन्यवृत्त्येति वक्तुं शक्यत्वादिति भावः । जीवस्य ब्रह्मात्मना सर्वगतत्वस्यानन्यथासिद्धश्रुत्यन्तरेण निश्चितत्वाच्चाराग्रश्रुतिरुक्ताभिप्रायेत्याह-घटसंवृतमिति । आकाशोपमानश्रुतेर्मशकादिक्रमेणानेकदेशगतत्वपरत्वाज्जलसूर्योपमानश्रुतेश्चानेकशरीरेष्वन्तर्याम्यभेदपरत्वान्न जीवस्यापरिच्छेदादिनिश्चय इत्याशङ्क्याह एतेनेति । एतच्छब्दार्थमाह आकाशेति । "देवः क्षेत्रेष्वेवमजोऽयमात्मा"इति प्रत्यक्षसिद्धजीवात्मन एव जलसूर्योपमितत्वादन्तर्यामिनानात्वस्याप्रसक्तेस्तद्भेदस्योपाधिकत्वाभिधानायोगाच्चेति द्रष्टव्यम् । स्वभावतोऽपरिच्छिन्ने जीवे परिच्छिन्नतादात्म्यादेव परिच्छेदानुभव इत्युपसंहरति तस्मादिति । एवकारार्थमाह

नन्त्विति । केवलपदार्थमाह उपाधीति । जीवगतकर्तृ-त्वाद्युपाधेः पराभिमतान्तःकरणादिवैलक्षण्यं वक्तुमाह स चेति। पराभिमतान्तःकरणादेरप्रत्यक्षत्वादस्मदभिमताज्ञानस्य परिच्छिन्नत्वेन प्रतिभासायोगादिन्द्रियाणाञ्चान्धादिसाधारणाहंबुद्ध्ययोग्यत्वात्स्वप्ने मनुष्यशरीराभावेऽप्यहंबुद्धिदर्शनात् । बुद्ध्यादिपदाभिधेयदुःखादिपरिणाम्येव जीवोपाधितयाऽहंबुद्धिगोचर इत्याह तस्यैवेति ।

बुद्धिविज्ञानादिशब्दाभिधेयस्य गुणत्वात्कथं दुःखादिमत्त्वमित्यत आह बुद्धेर्गुणेनेति ।

"बुद्धेर्गुणेनात्मगुणेन च"इत्यादिश्रुतौ परिमाणवत्तावगमात् बुद्धिरपि द्रव्यम् । "विज्ञानं यज्ञं त उत"इति श्रुत्या कृत्याश्रयत्वावगमात् विज्ञानमपि द्रव्यम् । तच्च मन एव, विज्ञायतेऽनेनेति व्युत्पत्तेः ।

मनसोऽनन्तत्वाणुत्वशङ्कानिरसनपूर्वकसावयवत्वसिद्धिः । ननु बुद्धिरन्तःकरणं मन इत्यादिशब्दानामेकार्थत्वे मनोऽणु, अनन्तपरिमाणं वा ? । उभयथापि न, अहमिति बुद्धेस्तदवच्छिन्नात्मा विषयः अणोरिवाण्ववच्छिन्नस्याप्रत्यक्षत्वात् । अनन्तस्येवानन्तावच्छिन्नस्याप्यपरिमितत्वादिति चेत् । न । मनसोऽणुत्वेऽनंतत्वे वा "तन्मनो कुरुत एतस्माज्जायते प्राणो मन"इत्यादिश्रुतेस्तत्कार्यत्वप्र-

मितिविरोधात् । पञ्चावधानिनां युगपद् गन्धादिविषयानुभवदर्शनाच्च न मनसोऽणुत्वम् । नचानुभवयौगपद्ये मानाभावः । गन्धरूपरसस्पर्शशब्दान् युगपत्प्रत्येमीत्यनुभवात् । न च क्रमानुमानेनानुभवो बाध्यते । अनुमानस्यानुकूलतर्कविरहिणो दुर्बलत्वात् । एवं विभुत्वे व्यासङ्गानुपपत्तिर्बाधिका । न चादृष्टादेव तदुपपत्तिः । दृष्टसंपत्तौ तद्विरहेण कार्यविलम्बायोगात् । न चानणुत्वेऽपि सा तुल्येति वाच्यम् । वृद्धिह्रासधर्मिणो युगपत् क्रमेण वेन्द्रियसन्निकर्षसंभवेन व्यासङ्गपञ्चज्ञानसंभवात् क्रमिकेन्द्रियसंप्रयोगे च निमित्तं–मनोणुत्वमते इवादृष्टम् । अत एवैवं सति किं मनसा दृष्टमेवास्त्विति प्रत्युक्तम् । परमतेऽपि तत्पर्यनुयोगस्य तुल्यत्वात् ।

तथापि कथं मनसि विज्ञानशब्द इत्याशङ्क्याधिकरणसाधनस्य करणसाधनस्य वा तस्य वृत्तिज्ञानाधिकरणे आत्मनि तदारोपनिमित्ते च मनसि सम्भवादित्याह तच्चेति ।

उक्तोपाधेरपि परिच्छेदावगाहिप्रत्यक्षविषयत्वानुपपत्तिरिति चोदयति ननु बुद्धिरिति । अनन्तपरिमाणं वेति । नित्यस्य मनसो मध्यमपरिमाणायोगादिति भावः । भवेदेतदेवं यदि मनो नित्यं भवेत्, न त्वेतदस्ति श्रुतियुक्तिभ्यां तस्य कार्यत्वेन मध्यमपरिमा-

णावगमादित्याह मनस इति । तद्-ब्रह्म, मनोकुरु-उत्पाद-दयामासेत्यर्थः । अणुत्वे तावद्युक्तिविरोधमप्याह पञ्चेति । गन्धादिविज्ञानयौगपद्यस्यैवाभावान्न तदानुपपत्तिरित्याशङ्क्यानुभवविरोधेन दूषयति न चेति । विमतानि ज्ञानानि क्रमभावीनि एकनिष्ठानेकज्ञानत्वात् संमतवदित्यनुमानविरोधाद्यौगपद्यानुवो भ्रम इत्यत आह न च क्रमेति । मनोविभुत्वेऽपि युक्तिबाधमाह एवमिति । नन्वस्मिन्पक्षे समनस्केन्द्रियसन्निकर्षे सत्यदृष्टविरहप्रयुक्तज्ञानविरह एव व्यासङ्ग इत्यत आह न चादृष्टेति । अत्यन्तं तु संयोगे सति क्वचिदप्यदृष्टाभावाल्पटाभावादर्शनादिति भावः । मनसो मध्यमपरिमाणत्वेऽपि तस्य नियतत्वात् ज्ञानयौगपद्यव्यासङ्गान्यतरानुपपत्तिरित्याशङ्क्य तत्परिमाणानियतत्वेन समाधत्ते नचानणुत्वेऽपीति । मनःसङ्कोचविकासावेव निमित्ताभावादनुपपन्नावित्याशङ्क्याणुत्वमते इन्द्रियान्तरसंयोगजनकमनःक्रियेव दृष्टकारणाभावाददृष्टाधीनावेवैतावित्यभिप्रेत्याह क्रमिकेति । दृष्टनियामकाभाव एवादृष्टस्य नियामकत्वाभिधानादेवापरमपि चोद्यमयुक्तमित्याह अत एवेति । अदृष्टाधीननियमेन परमते चक्षुराद्यपलापश्च प्रसज्येतेत्याह परमतेऽपीति ॥

एतेन मनसः सावयवत्वे कल्पनागौरवमिति प्रत्युक्तम् । कार्यद्रव्यस्य सावयवत्वनियमात् । अहमितिप्रत्यक्षविषयस्य परिच्छिन्नत्वानुभवाच्च । तस्मात्सावयवं वृद्धिह्रासादिधर्मवच्च मन इति । न चान्तःकरणस्यानियतपरिमाणप्रयु-

क्तदोषः । एकस्यैव जलूकादिद्रव्यस्य न्यूनाधिकपरिमाणदर्शनात् ।

"आत्मेन्द्रियमनोयुक्तं
भोक्तेत्याहुर्मनीषिणः" ॥

इति श्रुतिरपि मनोभिन्नस्यैव भोक्तृत्वं दर्शयति । तत्र चेन्द्रियशरीरयुक्तत्वमात्मनो भोक्तुः । अत एव तत्तदिन्द्रियशरीरसहकृतत्वमात्रम् ।

ननु चक्षुरादितादात्म्यविशिष्टस्यैव भोगः तस्याहंबुद्ध्या गोचरत्वात् तेषां प्रत्येकं व्यभिचारात् । अन्धादेरपि रूपादिभोगप्रतिसन्धानाच्च । मनसस्तु तादात्म्यमेवात्मना योगः । अविशेषेण प्रतिपन्नस्यापि योगस्य पदार्थयोग्यतानुसारेण व्यवस्थासंभवात् स्रुवेणावद्यतीतिवत् "स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लिलायतीव" इति श्रुतिः कर्त्तृत्वस्य बुद्ध्युपाधित्वमिवशब्देन तस्य मिथ्यात्वं च दर्शयति "स धीः स्वन्य" इतिश्रुतिनिर्दिष्टबुद्धितादात्म्यस्यैव समानशब्दार्थत्वात् ।

मनसो मध्यमपरिमाणत्वे तदवयवास्तद्धर्माश्चेत्यनेककल्पनागौरवं प्रामाणिकत्वान्न दोषायेत्यभिप्रेत्याह एतेनेति । कार्यद्रव्यस्येति श्रुतित एव कार्यत्वस्य गुणवत्त्वस्य च सिद्धत्वादित्यर्थः । अन्तःकरणस्य कालभेदेन वृद्धिह्रासाभ्युपगमे परिमाणभेदेन धर्मिभेदापत्तेः

स्मृत्यनुभवकर्तृत्वभोक्तृत्वादीनां वैयधिकरण्यं स्यादित्यत आह न चेति । ननु प्रतीयमानात्मपरिच्छेदस्योक्तोपाध्यधीनत्वेऽपि भोक्तृत्वादिकमात्मनश्चैतन्यवत्स्वाभाविकमेव किं न स्यादित्यत आह आत्मेति । शरीरमात्मपदार्थः । श्रुत्या विशिष्टस्यैव भोगाभिधानादहं भुञ्जे इति प्रत्यक्षमपि तद्विषयमेवेत्यपिशब्दार्थः । ननु शरीरेन्द्रिययोरण्यन्नोपात्तत्वान्मनोभिन्नस्यैवेति कथमुक्तमित्याशङ्क्य तयोर्भोगोपकरणतयैवात्मसंयोगो विवक्षितः । मनसस्तु भोक्तृत्वोपाधितया तादात्म्येनेति । विशेषमाह तत्र चेति । अहंबुद्धिगोचरोपाधेरेवात्र निरूप्यमाणत्वाज्जाग्रदादिदेहस्य चक्षुरादीन्द्रियस्य च प्रत्येकं वैलक्षण्येनैकरूपाहंबुद्धिविषयत्वायोगादिन्द्रियविशिष्टस्य भोगे तद्रहितान्धादेर्भोगाननुसन्धानापत्तेश्चेत्याह तस्येति । मनस्युक्तदोषाभावात्तादात्म्यमेव योग इत्याह मनसस्त्विति । आत्मभोगप्रयोजकस्य शरीरादियोगस्याविशेषेण श्रुतस्यापि पदार्थयोग्यतानुसारेण व्यवस्थां सदृष्टान्तामुपपादयति अविशेषेणेति । "स्रुवेणावद्यति" "हस्तेनावद्यति" "स्वधितिनावद्यति" इत्यविशेषेणावदानमात्रसाधनतया श्रुतानां हस्तादीनां योग्यतानुसारेण हस्तेन संहतपुरोडाशस्यैवावदानं, स्वधितिना मांसस्यैव स्रुवेणाज्यादिद्रवद्रव्यस्यैवेति यथा व्यवस्था तद्वदित्यर्थः । ऐहिकामुष्मिकभोगार्थसञ्चारस्योपाधिकत्वनिर्देशादपि भोक्तृत्वादिकमौपाधिकमित्याह स समान इति । स आत्मा समानः बुद्ध्यैक्यमापन्न इत्यर्थः । न त्वत्र सादृश्यं समानपदार्थः चिदात्मनो जग-

त्यहंबुद्धिसादृश्यायेगात् । तत्सादृश्यस्य विभ्वात्मनो लोकद्वयसंचारोपपादकतया निर्देशायोगाच्चेति भावः । औपाधिकस्यापि कर्तृत्वादेः पारमार्थिकत्वाशङ्कां श्रुतिरेवापवदतीत्याह ध्यायतीवेति । ननु स समान इत्यत्र कथं बुद्धितादात्म्यावगम इत्याशङ्क्य वाक्यशेषवशादित्याह स धीरिति ।

ध्यायतीवेत्यादाविवशब्दस्यान्यार्थत्वान्न ध्यातृत्वादेर्मिथ्यात्वसिद्धिरिति चोदयति नन्विवेति ।

(इवशब्दस्य मिथ्यात्वार्थकत्वप्रतिपादनम्) नन्विवशब्देन जीवस्य स्वातन्त्र्यं निषिध्यते, न तु मिथ्याकर्तृत्वमुच्यते इति चेन्न। तन्निषेधस्यैव तन्निषेधत्वात् । स्वतन्त्र एव हि कर्ता । ननु स्वातन्त्र्यमात्रं न निषेधति, किन्तु भृत्य इव स्वामिनियोगेन, परमेश्वरनियोगेनैवायं करोतीतीवशब्द आहेति चेत् । सत्यम् । अयं परमेश्वरतन्त्र एव निमेषादिव्यापारेऽपि "एष ह्येव साधु कर्म कारयति" इत्यादिश्रुतेः ।

"अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् श्वभ्रं वा स्वर्गमेव वा" ॥

इतिस्मृतेश्च । विशिष्टप्रज्ञाशालिनामपि मित्रमृत्युप्रभृतीनां "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिश्रुत्या परमेश्वराज्ञाकिंकर-

त्वश्रवणाच्च । तथापि स्वामिनियोगेन कर्त्तापि-कर्त्तैव भवति । अन्यथा परमेश्वरस्य कारयितृत्वादिव्यपदेशायोगात् । तस्य च कुर्वद्विषयत्वात् । तथा चेवशब्दो न साधुः । न हि राजाज्ञया युद्ध्यमानो भृत्यो युद्ध्यमान इवेति प्रयुज्यते । अस्ति च मिथ्यात्वे तत्प्रयोगः 'अरुण इव स्फटिको दृश्यते' इति । तस्मादिवशब्दस्य मिथ्यात्वमत्रार्थः। भगवानपि कर्तृत्वादेरौपाधिकत्वमुक्त्वा केवलात्मनि निषेधति ।

"तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः"इति ॥

तथा श्रीभागवते भगवद्वचनम्—

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ॥
अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः"इति ।

चेतनधर्मत्वेनाभिमतानां शोकादीनां जनिमरणधर्म्यहङ्कारधर्मत्वं दर्शयति, केवलात्मनि च प्रतिषेधति । अत एव प्रथमश्लोकेऽकर्त्तारं केवले यः पश्यति स न पश्यतीति परस्य भ्रमः, स्पष्टं कर्तृत्वनिषेधकतद्वचनबाधात् ।

"स्वतन्त्रः कर्त्ता"इत्यनुशासनात्स्वातन्त्र्यनिषेधे कर्तृत्वस्यैवनिषेधात्तन्मिथ्यात्वमेवेति दूषयति न तदिति । परेच्छाधीनकर्तृत्वमिवशब्दार्थो न तु कर्तृत्वनिषेध इति ।

शङ्कते ननु स्वातन्त्र्यमिति । जीवव्यापारमात्रस्येश्वरेच्छाधीनत्वमङ्गीकरोति सत्यमिति । श्वभ्रं-नरकम् । कैमुतिकन्यायेनाप्यस्मदादिव्यापारस्येश्वराधीनत्वमाह विशिष्टेति । अस्मिन्पक्षे इवशब्दासामञ्जस्यप्रदर्शनाय जीवकर्त्तृत्वस्य मुख्यतामाह तथापीति । जीवस्य कर्तृत्वाभावे एष ह्येव साधु कर्म कारयतीत्यादेरनुपपत्तिरित्याह अन्यथेति । एवं जीवस्य मुख्यकर्तृत्वमुपपाद्य तत्रेवशब्दोऽनर्थक इत्याह तथा चेति । नन्विवशब्दस्य सादृश्ये प्रयोगात् मिथ्यात्वमपि न तदर्थ इत्यत आह अस्ति चेति । उभयत्र प्रयोगाविशेषे कथं मिथ्यात्वमेव प्रकृते ग्राह्यमित्याशङ्क्य स समान इत्यादिवाक्यपर्यालोचनया मिथ्यात्वमेव तदर्थ इत्याह तस्मादिति ॥

अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ।
विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः" ॥

इति श्लोकद्वयेन कर्तृत्वादेरौपाधिकत्वाभिधानादनन्तरश्लोकेन च केवलात्मनि तन्निषेधात्तन्मिथ्यात्वमुपेयमित्याह भगवानपीति । उक्तार्थदार्ढ्यायोद्धवं प्रत्यपि भगवदुक्तं वचनमुदाहरति तथेति । ननु तत्रैवं सति कर्त्तारमित्यत्र कर्त्तारं सन्तं केवलमकर्त्तारं यः पश्यति स न पश्यतीत्येवार्थः किं न स्यादित्यत आह अत एवेति । अतःशब्दार्थमाह स्पष्टमिति । शोकहर्षभयक्रोधेत्यादिना भगवतैव कर्तृत्वादिप्रयोजकधर्माणामात्मनि निषेधविरोधादित्यर्थः ।

किञ्च केवलं यः पश्यति स न पश्यतीति निषिध्यमानमकर्त्रात्मज्ञानं प्रमा, उत भ्रमः? । नाद्यः-तन्निषेधायोगात् ? द्वितीयेऽपि किं प्रत्यक्षभ्रमः, उत परोक्षभ्रमः । उभयथाप्यप्रसक्तप्रतिषेधप्रसङ्ग इत्याह आत्मन इति ।

(तत्रैवं सतिकेत्यादिनाऽपरोक्षभ्रमसिद्धस्यैव कर्तृत्वस्य निषेधः)

आत्मनोऽकर्त्तृत्वज्ञानस्य लोकेऽप्रसिद्धस्य निषेधायोगात् कर्त्रात्मप्रत्यक्षप्रमाविरोधेन परोक्षाकर्त्रात्मभ्रमायोगेन निषेधानुपपत्तेः अपरोक्षभ्रमसिद्धमेव कर्त्तृत्वं निषिद्ध्यते। एतेन केवलस्यात्मनः कर्त्तृत्वानुमानं प्रत्युक्तं वर्णितप्रतिकूलतर्कविरोधाच्च । न च विशिष्टस्य कर्त्तृत्वे मोक्षस्य वैयधिकरण्यम् । अशनापाद्यतीतस्यात्मन एव बुद्धितादात्म्येन कल्पितकर्त्तृत्वाश्रयत्वात् । न च प्रज्ञया वाचं समारुह्येत्यादिश्रुत्या बुद्धेः करणत्वनिर्देशात्कथं तस्याः कर्त्तृत्वाद्याश्रयकोटिप्रवेश इति वाच्यम्। कर्त्तृत्वादिधर्माश्रयस्यापि बुद्धेरात्मनि तदारोपनिमित्तत्वेन करणत्वात् । आरुण्याद्याश्रयस्यापि कुसुमस्य मणाविवारुणिमारोपे । नापि ज्योतिष्टोमादिशास्त्रविरोधः । तस्य कर्त्तुरपेक्षितोपायपरत्वेन कर्त्तृत्वादवतात्पर्यात् । न च देवताविग्रहवदन्यपरादपि वाक्यात्कर्त्तृत्वादि-

सिद्धिः । अविरोधे हि देवताविग्रहन्यायावतारः । अत्र च भूयान् श्रुतिन्यायविरोधः । न च परं ज्योतिरुपसंपद्येत्यादिश्रुतिविरोधः । स्वरूपं हि जीवस्य ब्रह्मैवाविद्यया तिरोहितमिव प्रतीयमानं विद्ययाऽऽविर्भवति ततोऽन्यस्य संसारदशायां तिरोहितस्य मुक्तावाविर्भविष्यतोऽभावात् ॥

उक्तदोषेण परपरिकल्पितार्थायोगात्केवलं सन्तमात्मानं कर्त्तारं यः पश्यति स न पश्यतीत्येवार्थ इति निगमयति अपरोक्षेति । मुक्त्याश्रयात्मा कर्त्ता आत्मत्वात् व्यतिरेकेण घटवदित्यनुमानं श्रुत्यादिविरोधादयुक्तमित्याह एतेनेति । कर्त्तृत्वादिबन्धस्य शबलात्मधर्मत्वे मोक्षसामानाधिकरण्यानुपपत्तिरित्युक्तं चोद्यमपवदति न च विशिष्टस्येति । विशिष्टस्वरूपयोर्वास्तवभेदाभावेन केवलस्यापि कल्पितसंसाराश्रयत्वात्तस्य मोक्षसामानाधिकरण्यमित्याह न चेति । बुद्धेः श्रुतिन्यायसिद्धकर्त्तृत्वाविरोधिकरणत्वसंभवे तद्विरुद्धकरणत्वायोगादिति । हेतुमाह कर्त्तृत्वादीति । यदुक्तं स्वर्गकामो यजेतेत्यादिविधिवाक्यप्रमेयत्वादात्मकर्त्तृत्वं पारमार्थिकमिति; तन्न । तस्य कर्त्रंशानुवादेन साध्यसाधनविशेषसम्बन्धपरत्वादित्याह नापीति । ननु विधिपरेणापि मन्त्रार्थवादादिना यथा देवताविग्रहादिपञ्चकसिद्धिः तथान्यपरादप्यात्मकर्त्तृत्वसिद्धिरित्यत आह न च देवतेति । यच्चोक्तं स्वरूपाविर्भावलक्षणमुक्तावपि कर्तृत्वश्रवणात् तत्परमार्थ एवेति;तन्न । अविद्यानिवृत्ति-

लक्षणस्वरूपाभिनिष्पत्तेः कृत्यसाध्यतया कर्तृत्वानपेक्षणादित्याह न च परं ज्योतिरिति ।

आगन्तुकस्यैव कस्य चित्स्वरूपस्याभिनिष्पत्तिः कृतिसाध्या भविष्यतीत्याशङ्क्याह प्रागिति ।

(मुक्त्यवस्थायाः कृतिसाध्यत्वनिरसनम्) प्रागविद्यमानस्य स्वरूपत्वाभावेन स्वेन रूपेणेति निर्देशानुपपत्तेः तत्र तावदभिनिष्पद्यते इत्येतन्न मुक्त्यवस्थाकर्तृविधिः अभिनिष्पत्तिर्ह्यहं ब्रह्मेति वृत्तिसाक्षात्कारः। तत्कर्तृकत्वं चाविद्याकालीनमिति बुध्यभिन्नः श्रवणादिकर्ता तत्कर्ता। उपसंपत्तिश्च ततः केवलानन्दब्रह्मरूपेणावस्थानम्। अनुत्क्रान्तप्राणस्य विदुषः स्वस्वरूपब्रह्मसमीपगमनानुपपत्तेः । क्त्वाप्रत्ययश्च स्वरूपेणाभिनिष्पद्य पर ज्योतिरुपसंपद्यत इति संबध्यते । परमिति विशेषणेन ब्रह्मरूपज्योतिष एव गन्तव्यत्वात् । न चानादिब्रह्मात्मनावस्थाने कस्य चित्कर्तृत्वमपेक्षितं भेदोपाधिनिवृत्त्यपेक्षया च परं ज्योतिरुपसंपद्यत इति व्यपदिश्यते । न चास्माच्छरीरात्समुत्थायेति विदुषः समुत्थानकर्तृत्वविधिः अविद्याकार्येऽहङ्काराद्यनर्थे तादात्म्याभिमानेन मग्नस्यासत्कल्पस्य ततो विवेकस्यैव समुत्थानशब्दार्थत्वात् । अन्यथा "न तस्य प्राणा उत्क्रामन्ति"इतिश्रुतिविरोधात् ॥

ब्रह्मैव सन् ब्रह्माप्येतीत्यादिश्रुतिविरोधाद्देव चतुर्थेनापि न गमनकर्तृत्वमुच्यते इत्याह । अत एवेति ।

अत एव स तत्र पर्येतीत्यविवक्षितक्रियम् । परितः सर्वत एति सर्वात्मकब्रह्मप्राप्तः स्वयं सर्वात्मा भवतीति तात्पर्यम् । जक्षत् क्रीडन्नित्यादितु ब्रह्मस्वरूपप्राप्तस्यानवाप्तकामाभावादसंभावितार्थतया च स्तुतिः निखिलानन्दप्राप्तिपरा वा । अन्यथा यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यविद्यावस्थायामेव दर्शनादिविशेषप्रतिपादनस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिमुक्त्यवस्थायां सकलविशेषनिषेधस्य चायोगात् । एतेनात्मनोऽकर्तृत्वेऽनात्मनोपि तन्नेति काण्डद्वयं निरधिकारादप्रमाणमिति प्रत्युक्तम्। आत्मन एवारोपितमुख्यकर्तृत्वाभ्युपगमात् । तथा च पारमर्षं सूत्रद्वयं "कर्त्ता शास्त्रार्थवत्त्वात्" यथा च "तक्षोभयथा"इति । न चैवं मोक्षोऽपि स्वर्गवन्मृषा स्यादारोपितकर्तृजन्यत्वादिति वाच्यम् । मोक्षस्यात्मस्वरूपतया स्वर्गवन्मिथ्याकर्त्रजन्यत्वात् ।

अविवक्षितक्रियमविक्षितगमनमित्यर्थः । किं परं तर्हीदं वचनमित्यत आह परित इति पञ्चममप्यन्ययति जक्षदिति । मुक्तस्य शरीरेन्द्रियादेरभावाद्भक्षणाद्ययोगादपीयं स्तुतिरित्याह असंभावितेति । सर्वविषयाभिव्यंग्यानन्दाभिव्यक्तिपरा वेयं श्रुतिरित्याह निखि-

लेति । मुक्त्यवस्थायामपि शरीरेन्द्रियादिपूर्वकविषयभोगमङ्गीकुर्वाणं विषयलम्पटमर्वाचीनं प्रत्याह अन्यथेति। मिथ्याकर्तृत्वस्यैवाऽऽमोक्षमनुवर्त्तमानस्य भोगापवर्गादिव्यवस्थापकत्वात्तत्पारमार्थिकत्वस्य श्रुतिप्रामाण्यानुपयोगात्परोक्तं चोद्यान्तरं निरस्तमित्याह एतेनेति । उक्तमर्थं बादरायणाचार्यसूत्रसंमतत्वाद् द्रढयति तथाचेति । आत्मनो मिथ्याकर्तृत्वमप्यनङ्गीकुर्वाणं सांख्यं प्रति विधिनिषेधादिशास्त्राप्रामाण्यप्रसङ्गादिन्यायैः प्रथमं कर्तृत्वमात्रं निर्णयामास "कर्त्ता शास्त्रार्थवत्त्वात्" इति । पुनश्च वैशेषिकादिमतानुसारेण तत्कर्तृत्वं पारमार्थिकमित्याशङ्क्याह यथा च तक्षोभयथेति । तक्ष्णो यथा वास्यादीतरकारकसमवधानप्रयुक्तं कर्तृत्वं, तदसमवधाने तु स्वाभाविकमकर्तृत्वमेव, तथाऽऽत्मनोऽपि शरीरेन्द्रियादिकर्तृत्वादेरपि मिथ्यात्वे तज्जन्यमोक्षस्यापि तथात्वापातेन स्वर्गवन्मुमुक्ष्वभिलषितत्वानुपपत्तेरपुरुषार्थतेत्याशङ्क्य तस्य मिथ्याकर्तृजन्यत्वमेवासिद्धमिति दूषयति न चैवमिति ।

मोक्षस्य नित्यब्रह्मात्मस्वरूपत्वे श्रवणादेः पुरुषार्थपर्यवसायित्वेन तद्विधानमनर्थकं स्यादिति चोदयति नन्वेवमिति ।

श्रवणादिविधेः सार्थकत्वम् । नन्वेवं ज्ञानाय श्रवणादिविधिर्व्यर्थः ।

ज्ञानस्यैवानुपयोगात् । नचानर्थहेत्वविद्यानिवृत्तये तदिति वाच्यम्। अविद्यानिवृत्तेरात्मनोऽन्यत्वे जन्यत्वे चारोपितकर्तृसाध्यतया स्वर्गादिवदपु-

रुषार्थत्वापातेन तदर्थज्ञानान्वेषणायोगात् । आत्ममात्रत्वे चासाध्यत्वाज् ज्ञानं व्यर्थमिति; मैवंम् । नाविद्यानिवृत्तिरात्मा, अभावत्वात् । सा च न पुरुषार्थः । सद्विलक्षणत्वात्, असुखत्वाच्च । किंत्वात्मैव परमानन्दपुरुषार्थः । न चैवमविद्यानिवृत्तेरप्रार्थ्यत्वात् तदुपायज्ञानप्रयासो व्यर्थः । पुरुषार्थप्रतिबन्धकनिवृत्तित्वेन तस्याः काम्यमानत्वात् । ततस्तन्निवृत्त्युपायज्ञानसाधने नियोगोऽपि युज्यते ।

नन्वविद्या किं प्रतिबध्नाति? । न तावन्मोक्षस्वरूपम् । तस्याऽऽत्मस्वरूपतया सदाऽनपायात् । नापि तज्ज्ञानं तत एव इति चेन्न । आनन्दात्मस्वरूपो हि मोक्षः । अनर्थश्च दुःखात्मा तत्प्रतिकूलः । अविद्या च तद्धेतुः । एवं चानन्दात्मकब्रह्मविपरीतानर्थदर्शनेन नित्यात्मभूतोऽपि मोक्षो 'असत्कल्पो नास्ति' इत्यादिव्यवहारयोग्यो बभूव, ततश्चाकृतार्थता । निवृत्ते चाज्ञाने निरस्तनिखिलानर्थपरमानन्दात्प्राप्यत इवेत्यविद्यानिवृत्तिरपुरुषार्थोऽपि काम्यते ॥

श्रवणादिसाध्यज्ञानस्य मोक्षेऽनुपयोगेऽपि अनर्थहेतुनिवृत्तावुपयोगान्नोक्तदोष इत्यत आह न चानर्थेति । किमविद्यानिवृत्तिरात्मनो भिन्ना उताभिन्ना?, उभयथाप्यनुपपत्तिरित्याह-अविद्यानिवृत्तेरिति । न सन्नासन्

नसदसन्नानिर्वाच्योऽपि तत्क्षयइति पञ्चमप्रकारमतेनाविद्यानिवृत्तेरात्मभिन्नत्वं ज्ञानजन्यत्वं चाह नाविद्येति । यदुक्तमविद्यानिवृत्तिर्मिथ्याकर्तृजन्यत्वे स्वर्गादिवन्न मुमुक्षुपुरुषार्थतेति, तदिष्टापत्त्या परिहरति सा चेति । सुखस्यैवाऽऽनन्दवादे पुरुषार्थताया वक्ष्यमाणत्वान्न नेयं पुरुषार्थ इत्याह । असुखत्वाच्चेति । कस्तर्हि परमपुरुषार्थ इत्यतआह । किंत्वात्मेति । तर्ह्यविद्यानिवृत्तेरकाम्यतया तत्साधनानुष्ठानानुपपत्तिरित्याशङ्क्य पुरुषार्थतया कामनाभावेऽपि व्याधिनिवृत्तिवत्प्रतिबन्धकनिवृत्तितया तत्कामना घटतइति परिहरति । न चैवमिति । अविद्यायाः प्रतिबन्धकत्वे सत्येवं स्यात् तदेवानुपपन्नम्, प्रतिबन्धानिरूपणादिति चोदयति । नन्विति । किं मोक्षं प्रतिबध्नाति उत तत्ज्ञानमिति किं शब्दार्थः । आद्यं दूषयति। न तावदिति । तज्ज्ञानस्यापि स्वप्रकाशात्ममात्रतया सदा सिद्धत्वान्न तत्प्रतिबन्धोऽपीत्याह । नापीति । आत्मस्वरूपानन्दस्य तदभिव्यक्तेश्च नित्यत्वेऽपि तदनभिव्यक्तरूपाया अविद्यायास्तत्प्रतिकूलदुःखसंभेदघटकतया विषसंपृक्तान्नवदपुरुषार्थत्वबुद्धिप्रतिबन्धकतया पुरुषार्थविरोधित्वान्निवृत्तिःकाम्यतइत्याह न आनन्देति । असत्कल्पेत्येतद्विवृणोति नास्तीति । स्वप्रकाशात्मानन्दानभिव्यक्त्यात्मकतया पुरुषार्थत्वभ्रमहेतावज्ञाने निवृत्ते स्वाभाविकशुद्धपुरुषार्थाभिव्यक्त्या कृतार्थतेत्याह । निवृत्ते चेति ॥

स्वप्रकाशमानंदमशून्यं प्रपञ्चोपशमं शिवमद्वैतं यत्र त्वस्य सर्वमात्मैवाभूदित्यादिश्रुतिशतसम्मतपक्षमाह अथवेति ।

अविद्यानिवृत्तेःश्रुतिसिद्धात्मस्वरूपत्वम्ः

अथवा ऽविद्यानिवृत्तिरात्मैव। अस्ति तावच्छुक्तौ रजतभ्रमानंतरमिह रजतं नासीदनुभूतरजतमनुभवदशायां शुक्तौ नास्ति; इदं रजतानुभवकालेऽपितदभाववदित्यादिबुद्धिः सा च प्रमाबाधाभावात् मिथ्यारजताश्रयस्य तदानीमपि तदभाववत्वनियमाच्च तद्घटितत्वात्तल्लक्षणस्य। सत्वाधिकरणादन्यश्चेत् न तावत्परमार्थः। अनिर्वचनीयाभावस्य परमार्थत्वायोगात्। अभावस्य प्रतियोगिसमानसत्ताकत्वनियमात् ब्रह्मणोऽद्वितीयत्वश्रुतिविरोधप्रसङ्गाच्च । न च भावाद्वैतविषया सा। श्रुतौ भावपदाभावात्। संकोचकप्रमाणाभावाच्च। तस्य संविदतिरिक्तस्य संवित्सम्बन्धाभावेन ब्रह्मणस्तत्प्रत्यक्षत्वायोगाच्च कल्पिततादात्म्यमस्तीति चेन्न। एवमपि मुक्तौ तदयोगात् । मुक्तौ विद्यमानपदार्थज्ञानाभावे ब्रह्मणोऽपि अज्ञत्वप्रसङ्गात् ॥

अविद्याभावस्यात्ममात्रत्वं वक्तुं लोके कल्पिताभावस्याधि:ानात्मतां साधयितुमुपक्रमते। अस्ति तावदिति। इदं रजतमिति ज्ञानविरोधादभावज्ञानं भ्रम इत्याशङ्क्याह-सा चेति । रजतज्ञानात्पूर्वमभावज्ञानानुत्पत्तेः तद्बाधकत्वायोगादभावज्ञानस्य प्राप्तरजतज्ञानबाधमन्तरेणोत्पत्त्ययोगादभावज्ञानमेव तद्बाधकम् । तथा-चोक्तम्-

पूर्वं परमजातत्वादबाधित्वैव जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन संभवइति ॥

तथा चाभावज्ञानस्य प्रमात्वाद्रजतकालेऽपि तदभावोऽभ्युपेय इत्यर्थः । किं च रजतमिथ्यात्वस्य वक्ष्यमाणत्वात्स्वसमानाधिकरणस्य वा स्ववैयधिकरण्यानधिकरणस्य वात्यन्ताभावस्य प्रतियोगित्वस्य मिथ्यात्वलक्षणत्वात्तत्काले तदभावो वक्तव्य इत्याह मिथ्येति । तस्याधिष्ठानादन्यत्वे पारमार्थिकत्वं, कल्पितं वास्यात्?, नाद्यः । प्रतियोगिविरहैकस्वभावस्य प्रतियोगिसमानसत्ताकत्वनियमादित्याह । स चेति । अनन्ताभावानां परमार्थत्वे श्रुतिपीडा च स्यादित्याह । ब्रह्मण इति । अद्वितीयश्रुतेर्भावान्तराभावपरतया नाभावपारमार्थिकत्वेन विरोध इत्याशङ्क्याह न चेति । किं च ब्रह्म स्वव्यतिरिक्तपारमार्थिकत्वं जानाति न वा ?। नाद्यः । दृग्दृश्ययोः सम्बन्धानिरूपणादित्याह । तस्येति । सम्बन्धाभावोऽसिद्ध इति शङ्कते कल्पितमिति । सत्तानवच्छेदकभेदवत्त्वं हि तत्तादात्म्यं तच्चाभावस्य वास्तवत्वे न घटत इत्याह नेति । अविद्यावस्थायां तदङ्गीकृत्यापि मुक्त्यवस्थायां तत्कल्पकाभावात्तदसम्बन्धमाह एवमपीति । द्वितीये ब्रह्मणः सर्वज्ञत्वहानिरित्याह मुक्ताविति ।

अतिरिक्ताभावस्य कल्पितत्वपक्षे व्यावहारिकत्वं वा प्रातीतिकत्वं वा स्यात् ?। नाद्यः । प्रतियोगिविरहात्मनोऽभावस्य प्रतियोगिसमानसत्ताकत्वनियमादित्याह-कल्पितश्चेदिति ।

अतिरिक्ताभावस्य कल्पितत्वपक्षे व्यावहारिकत्वादिनिरसनम् ।

कल्पितश्चेन्न व्यावहारिकः । रजतस्य प्रातीतिकत्वेन तस्य तद्योगात् । प्रतियोगिसमानसत्ताकभावाद्भावस्य । व्यावहारिकाविद्यादेर्ब्रह्मणि व्यावहारिकाभावायोगाच्च । अभावस्य स्वाधिकरणे स्वसमानसत्ताकप्रतियोगिविद्यमानत्वविरोधात् । घटात्यन्ताभाववति घटाभावात् । अन्यथा तत्र घटभावबुद्धिः प्रमा स्यात् । अतएव न रजतात्यन्ताभावः प्रातीतिकः । तस्य तदानीमप्रतीतेः । तस्मात्कल्पिताभावोऽधिष्ठानमेव ।

ननु कल्पिताभावः प्रतियोग्यधिकरणं न भवति अभावत्वात् घटाद्यभाववत् । अन्यथा घटाद्यभावोऽपि भूतलादिकमेव स्यात् । तथा च षष्ठप्रमाणव्युत्पादनमसङ्गतं स्यादिति चेन्न । योऽभावः स्वाधिकरणाभिन्नसत्ताकप्रतियोगिकः, स भावान्न भिद्यते । अभिन्नसत्ताकत्वं च प्रतियोगिनोऽधिकरणप्रतियोगिकसत्तानवच्छेदकभेदवत्त्वम् । अतो घटाधिकरणकघटाभावस्य न तद्भेदः ।

किं चास्मिन् पक्षेऽविद्यादेर्व्यावहारिकस्य ब्रह्मणि स्थित्यनुपपत्तिः । स्वसमानसत्ताकत्वाभावकालीनतत्सामानाधिकरण्यविरोधादित्याह-व्यावहारिकेति । तत्र

सोपपत्तिकं दृष्टान्तमाह-घटेति । अभावस्य स्वसमान-
सत्ताकप्रतियोगिसादृश्यविरोधादेव प्रातीतिकत्वपक्षोऽपि
न सम्भवतीत्याह-अत एवेति । रजतकाले तदभावस्या-
प्रतीतेश्च न तस्य प्रातीतिकत्वमित्याह-तस्येति । अधि-
ष्ठानातिरेके उक्तदोषानिस्तारादधिष्ठानमेव कल्पिता-
भाव इत्युपसंहरति । तस्मादिति । कल्पिताभावस्या-
धिष्ठानमात्रत्वेऽनुमानविरोधं शङ्कते । नन्विति । विप-
क्षेऽतिप्रसङ्गं बाधकमाह अन्यथेति । इष्टापत्तिमाश-
ङ्क्याह । तथाचेति । भूतलादेरेव घटाद्यभावत्वे तस्य
प्रत्यक्षादिगम्यतयाऽनुपलब्धिप्रमाणमभ्युपेतमनर्थकं स्या-
दित्यर्थः । घटाभावादेः स्वाधिकरणाद्भेदे स्वाधिक-
रणाभिन्नसत्ताकप्रतियोगिकत्वमुपाधिकरणत्वेनाभिमतं
यच्छुक्त्यादि तदभिन्नसत्ताकं यद्रजतादि तत्प्र-
तियोगि यस्य सोऽभावोऽभावाधारत्वेनाभिन्नत्वान्न
भिद्यते । यद्यदभिन्नसत्ताकं तत्प्रतियोगिकाभावस्ततो
न भिद्यत इति समुदायार्थः । एवं च सति घटाधिक-
रणकघटाभावस्य घटमात्रता स्यादित्याशङ्क्याधिकरणा-
भिन्नताकत्वं निर्वक्ति । अभिन्नसत्ताकत्वं चेति । अधि-
करणप्रतियोगिकः सत्ताया अनवच्छेदकः अनिरूपको यो
भेदस्तद्रूत्त्वमित्यर्थः । इदमोऽधिष्ठानाद्रजतभेदश्च सत्ता-
नवच्छेदक एव । रजतदशायामिदं रजतं नेत्यनुभवादि-
दं रजतमिति सामानाधिकरण्यानुभवाच्च । घटो घट इति
सामानाधिकरण्याभावात्स्वस्मिन् स्वप्रतियोगिकभेदस्य
सत्तानवच्छेदकस्याप्यभावात्तन्निष्ठस्तदभावस्ततो भिद्यत
इत्याह-अत इति । एतच्चाभावस्य प्रतियोगिवृत्तित्वम-
भ्युपेत्योक्तम् । वस्तुतस्त्वभावस्य प्रतियोग्यनधिकरणत्व-

वत् प्रतियोगिनोऽप्यभावानधिकरणत्वं तृतीये परिच्छेदे वक्ष्यति । तथा चाभिन्नसत्ताकपदं यथाश्रुतमेवेति द्रष्टव्यम् ।

शुक्तिरजताद्यभावस्याधिष्ठानाभेदप्रयोजकमुक्त्वा भूतले घटाद्यभावस्य तत्प्रयोजकाभावादधिकरणाद्भेद एवेत्याह-घटभूतलयोस्त्विति ।

घटाद्यभावस्याधिकरणाद्भेदत्वं निश्चिनोति । घटभूतलयोस्तु भेदः सत्तावच्छेदक एव । घटो भूतलमित्यननुभवात् । अतो न तदभावस्य भूतलाभेदः, किं तु भेद एव । योऽभावः स्वाधिकरणाभिन्नसत्ताकप्रतियोगिको न भवति स त्वभावो भावाद्भिद्यते । घटे शुक्तिरजतं नास्तीति प्रतीयमानाभावश्च तस्माद्भिन्नः । शुक्तिरजतस्य घटाद्भिन्नसत्ताकत्वात् । न च भावप्रतियोगिकाभावस्य भावत्वं न दृष्टमिति वाच्यम् । तव प्रागभावस्य जन्यत्ववत् प्रध्वंसस्यानित्यत्ववदन्यत्रादृष्टस्यापि प्रमाणबलादङ्गीकारे विरोधाभावात् न च भावस्य सप्रतियोगित्वं विरुद्धम् । सादृश्यादेरभावप्रसङ्गात् । ब्रह्मणोपि सप्रपञ्चत्ववत्काल्पनिकत्वं तदविरुद्धम् । एवं घटादीनामप्यभावौ व्याख्यातौ । तस्मादधिष्ठानमेव कल्पितात्यन्ताभावाभावः । एवं ध्वंसादिरपि समानन्यायत्वात् । ततः शुक्तिरजतं न शुक्तिनिष्ठान्योन्या-

भत्वप्रतियोगि । तदभिन्नसत्ताकत्वात् । शुक्ति-रिव । न चानुभवविरोधः । तस्यान्यथाऽप्युपपत्तेः । कल्पिताभावस्याधिष्ठानगतस्य वास्तवत्वानुपपत्तिरनुकूलतर्कः । कल्पितत्वे च तद्भेदाभ्युपगमेऽनन्तभेदादिकल्पनागौरवम् ।

अत्रापि सामान्यप्रयोजकमाह-योऽभाव इति । शुक्तिरजताभावस्य शुक्ताविव घटादावपि किमधिकरणादभेद एव ?। नेत्याह- घट इति । नन्वभावप्रतियोगिकाभावस्यैव भावात्मत्वं दृष्टं, न तु भावप्रतियोगिकाभावस्येत्याशङ्क्य ध्वंसप्रागभावात्मकस्य प्रागभावध्वंसात्मकस्य च घटस्य जन्यत्वानित्यत्वयोरन्यत्रादृष्टयोरप्यङ्गीकारादत्रापि न दोष इत्याह-न च भावेति । ननु भावप्रतियोगिकोऽभावो भावो न भवति, सप्रतियोगिकत्वाद् व्यतिरेकेण घटवदित्याशङ्क्य सादृश्यादौ व्यभिचारेण दूषयति-न च भावस्येति । तर्हि सादृश्यादेव प्रपञ्चाभावरूपब्रह्मणोऽपि सप्रतियोगिकत्वं स्यादित्याशङ्क्य प्रतियोगिसमसत्ताकं तदविरुद्धमित्याह-ब्रह्मणोऽपीति । एवं घटादेरपि मृदाद्यवच्छिन्नं चैतन्यमधिष्ठानतया एकोऽभावः, भूतलादिवृत्तिश्च प्रतियोगिविरहात्मैवापर इति सिद्ध्यति । प्रपञ्चस्य ब्रह्मविवर्तत्वात्, इत्याह-एवमिति । अधिष्ठाने प्रतीयमानरजताद्यभावस्य ततो ऽभेदे बाधकसद्भावाद् भेदे च बाधकाभावात्तदेव स इत्युपसंहरति-तस्मादिति । एवं ध्वंसान्योन्याभावावपि कल्पितप्रतियोगिकौ भावाभावात्मकावभ्युपेयौ । तयोरप्यधिष्ठानभिन्नयोः पारमार्थिकत्वादि-

रूपयोर्दुनिरूपत्वात्, इत्याह-एवं ध्वंसादिरिति । उपपत्तितर्कानुग्राह्यमनुमानमाह-तत इति । शुक्तिरजतं शुक्तितादात्म्यापन्नं रजतम् । न चाश्रयासिद्धिः, तस्य निपुणतरमुपपादयिष्यमाणत्वात्तदभिन्नसत्ताकत्वादिति यथाश्रुत एव हेतुः । तथा च न शुक्तेः साधनविकलतापक्षधर्मताबलाच्चाधिष्ठानरूपान्योन्याभावाप्रतियोगित्वं रजते सिद्ध्यतीति भावः । नन्वेवं सति शुक्ती रजतभिन्नेति विशिष्टप्रत्ययः कथमित्याशङ्क्य रजतभेदस्तद्भिन्न इतिवदुपपद्यत इत्याह-न चानुभवेति । हेतोरप्रयोजकत्वं निराकरोति-कल्पितेति । अधिष्ठानातिरिक्ताभावस्य परमार्थत्वानुपपत्तावपि कल्पितं किन्न स्यादित्यत आह-कल्पितत्वे चेति ।

शुक्तिनिष्ठान्योन्याभावप्रतियोगित्वाभावे शुक्त्यभिन्नत्वमुपाधिर्न संभवति । शुक्तिभेदेऽव्यवस्थापत्तया शुक्तिनिष्ठान्योन्याभावप्रतियोगित्वाभावेऽपि शुक्त्यभिन्नत्वाभावादित्याह-न चेति ।

शुक्तीनिष्ठान्योन्याभावप्रतियोगित्वाभावे शुक्त्यभिन्नत्वमुपाधिर्नसंभवतीत्याशङ्क्य नि-। न च शुक्त्यभिन्नत्वमुपाधिः । शुक्तिभेदे साध्याव्यापकत्वात् । अधिष्ठानमात्रं भेद इति मते न भेदग्रहमात्रं भ्रमविरोधि, किं तु तद्विशेषज्ञानम् । एवं रजतभेदस्य शुक्त्यात्मत्वसिद्धे तदत्यन्ताभावादिरपि न शुक्तिभिन्नः । स्वाधिकरणतया प्रतीयमानाभिन्नसत्ताकप्रतियोगिकाभावत्वात् । तदन्योन्याभाववत् । अत्रापि तद्भेदस्य दुर्निरूप-

त्वमनुकूलस्तर्कः । श्रुतिरपि यत्र त्वस्य "सर्वमात्मैवाभूत्" इति सर्वस्य तद्भावापत्तिं दर्शयन्ती तदभावस्य तन्मात्रत्वं दर्शयति । अभावस्य ततो भेदे सर्वस्यात्मभावापत्यभावात् । तस्मादात्मैवाविद्यानिवृत्तिरिति । नन्वेवं कथं ज्ञानादज्ञाननिवृत्तिः । तस्याः नित्यस्वरूपतया तेन विनाऽपि सत्त्वात् । ततस्तदनिवृत्तौ च किं ज्ञाने? । न चाविद्याया अदर्शनार्थं तदिति वाच्यम् तस्यां सत्यां तदयोगात् । अदर्शनस्यापुरुषार्थत्वात् । किं चाविद्यानिवृत्तेरात्ममात्रत्वेऽविद्याप्यत्र न स्यात् ध्वंसस्य प्रतियोग्यनाधारत्वादिति चेत् । उच्यते । न तावदविद्यास्थित्यनुपपत्तिः । समानसत्ताकयोरेवाभावप्रतियोगिनोर्विरोधात् । अविद्यायाश्च कल्पितत्वात् । नापि ज्ञानवैयर्थ्यम् । असति ज्ञानेऽनर्थहेत्वज्ञानस्य विद्यमानतयाऽनर्थस्यापि स्थितेः ॥

नन्वस्मिन् पक्षे इदमित्यधिष्ठानरूपभेदस्य ज्ञातत्वात् कथं रजतभ्रम इत्यत आह-अधिष्ठानेति । अधिष्ठानविषयस्य सत्तानिश्चयरूपस्यैव भ्रमविरोधित्वान्नायं दोष इत्यर्थः । एवमन्योन्याभावस्याधिष्ठानात्मकतां प्रसाध्य तद्दृष्टान्तेनात्यन्ताभावादेरपि साधयति-एवं रजतेति । आरोपिताभावस्याधिष्ठानात्मत्वं श्रुतितोऽप्यस्तीत्याह-श्रुतिरपीति । अधिष्ठानभिन्नाभावाङ्गीकारे

श्रुत्यसामञ्जस्यमाह-अभावस्येति । शुक्तावपि दृश्याभावस्य सत्त्वे कं पश्येदिति कर्माक्षेपायोगाच्चेत्यपि दृष्टं पदार्थं रजताद्यभावस्याधिष्ठानात्मकत्वमुक्तं तदाह-तस्मादिति । नित्यसिद्धात्मन एवाविद्यानिवृत्तिरूपत्वे ज्ञानवैयर्थ्यमिति चोदयति । नन्वेवमिति । अविद्यानिवृत्तेरसाध्यत्वेऽपि तद्दर्शननिवृत्तिर्ज्ञानसाध्येत्यत्राह-न चाविद्याया इति । अविद्यायां नित्यसाक्षिवेद्यतया तस्यां सत्यां तद्दर्शनं दुर्निवारमित्याह-तस्यामिति । अविद्यास्वरूपप्रयुक्तत्वादनर्थस्य तद्दर्शनमात्रं न पुरुषार्थ इत्याह-अदर्शनस्येति । किंचास्मिन् पक्षेऽविद्याया एवासंभवान्न तन्निवृत्तिस्तदर्शनं वा ज्ञानसाध्यमित्याह-किं चेति । तत्र तावदविद्याऽप्यात्मनि न स्यादित्युक्तं परिहरति-उच्यते न तावदिति । इदानीं ज्ञानसाध्याभावेऽपि तदभावकालीनानर्थस्य तन्निवर्त्यत्वासंभवान्न ज्ञानविफलमित्याह-नापीति ।

तद्ध्वंसस्य तदजन्यत्वे कथं तस्य तन्निवर्त्यत्वं तज्जन्यध्वंसप्रतियोगिन एव तन्निवर्त्यत्वादित्याशङ्क्याह-येनेति ॥

तद्ध्वंसस्य तदजन्यत्वे तन्निवर्त्यत्वं कथमित्याशङ्क्य निरस्यति । येन विना यत्तिष्ठत्येव

यस्मिन् सति च न तिष्ठति तन्निवर्त्यम् । प्रतियोगिनो ज्ञाननिवर्तत्वादविद्यानिवृत्तिर्ज्ञानसाध्येत्युपचर्यते । अथवा यस्मिन् सति यस्याग्रिमक्षणेसत्त्वं यद्व्यतिरेके चाभावस्तत् तत्साध्यम् । आत्मस्वरूपाविद्यानिवृत्तेश्च ज्ञाने सति सत्त्वं, तद्व्य-

तिरेकेचाभावः। तत्प्रतियोग्यविद्याया एव तदभावरूपत्वात्, तस्याः ज्ञानात्पूर्वकल्पितताया विद्यमानत्वात् । न च यद्व्यतिरेके चासत्यपीति कार्य्यसात्वाभाव उच्यते स चाविद्यानिवृत्तेर्नास्ति, तस्याः सदात्मरूपत्वादिति वाच्यम् । यस्य सत्त्वाभाव इत्यस्माद्यस्याभाव इत्यस्यैव लघुत्वात् । तस्मान्नित्यसिद्धसत्यात्मस्वरूपैव युक्तिर्ज्ञानसाध्येति न-स्वर्गादिवत् कल्पिता सेत्यसङ्गोदासीनं चैतन्यमात्रमात्मेति ॥

अनन्यथासिद्धस्य यस्योत्तरकालसम्बन्धिध्वंसप्रतियोगी यः स एव तन्निवर्त्यः, न तु ध्वंसस्य प्रागसत्वघटितोत्पत्तिरप्यपेक्ष्यते । गौरवादितिभावः । तत्र येन विनेति । ज्ञानस्यानन्यथासिद्धत्वं दर्शितम् । तस्मिन् सतीत्यज्ञानस्य तदुत्तरकालवर्त्तिध्वंसप्रयोगित्वमितिद्रष्टव्यम् । आत्मरूपाविद्यानिवृत्तेर्ज्ञानसाध्यत्वस्यापि त्यक्तुं शक्यत्वान्न ज्ञानवैयर्थ्यमित्याह-अथवेति । वैशेषिकादिमते प्रायश्चित्तभावे सति दुःखप्रागभावस्याग्रिमक्षणे सत्त्वं तदभावे तदभावो दुःखं भवत्येवेत्यनादेरपि दुःखाभावस्य प्रायश्चित्तसाध्यत्वम् । यथा वा सर्वेषां मते दन्डादौ सत्यग्रिमक्षणे स्वकादाचित्काभावविरोधि घटादिसत्त्वं तदभावे चाभाव इति नतत्साध्यः । अत एव नाकाशादेर्दण्डादिसाध्यता । तस्य दण्डादौ सति स्वकादाचित्काभावसत्त्वविरोधिसत्त्वं तदभावे तस्याभाव इत्यस्याभावात् । एवं तत्वसाक्षात्कारे सत्यग्रिमक्षणे-

ऽविद्यात्मकस्वाभावसत्त्वविरोध्यात्मकचैतन्यसत्त्वं तद्-भावे तदभावोऽविद्यैवेति आत्मरूपाऽप्यविद्यानिवृत्ति-र्ज्ञानसाध्या । न च ज्ञानानन्तरं क्षणोपाध्यभावः । वृत्ते-रेव तत्त्वात् । वृत्त्यभावे क्षणोपाध्यभावेऽपि ज्ञानार्थव-त्त्वस्य सिद्धत्वाच्चरमकार्ये सर्वेषामसत्तुल्यत्वाच्चेति भावः। ननु, यस्मिन् सति यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं साध्यप्रयोजकं नित्यसदात्मकाविद्यानिवृत्तेस्तदभावा-त्कथं साध्यतेत्याशङ्क्याह-नच यदिति । यद्व्यतिरेके च यदसत्त्वं यस्य सत्त्वाभाव इत्येतस्माद्यदभाव इत्ये तावदेव लघुतया प्रयोजकमित्याह-यस्य सत्त्वेति । वस्तु-तस्तु यद्व्यतिरेकेऽसत्वमित्युक्तेऽपि न दोषः । अविद्या निवृत्तिरूपात्मसत्ताया आत्ममात्रत्वात्तदभावात्मकावि-द्यायाः ज्ञानाभावकाले विद्यमानत्वादिति द्रष्टव्यम् । नित्यसिद्धात्मरूपे मोक्षे स्वर्गादिवैलक्षण्यस्य मुमुक्षुप्रवृ-त्त्युपयोगिसाध्यत्वस्य च सत्त्वाच्चिदेकरस एवायमात्मे-त्युपसंहरति-तस्मादिति ॥

अविद्यानिवृत्तिरूपात्मस्वरूपस्यासुखरूपत्वे मुमुक्ष्व-भिलषितत्वायोगात्तस्य सुखात्मतां साधयति-स चेति ।

आत्मस्वरूपस्यासुखरूपत्वे मुमुक्ष्वभिलषितत्वायोगेन सुखात्मतां तस्य साधयति ।

सचायमात्मा निरतिश-यानन्दस्वरूपः । "को-ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयात्"इति श्रुतेः । न चात्राकाशशब्दार्थः परमात्मानन्दोऽभिधीयते, नतु जीव इति वाच्यम् । तस्यैव जीवस्वरूपत्वात् ।

अन्यथा जीवस्य प्राणानां आकाशानन्दो हेतुर्नोच्येत। न ह्यन्यानन्देनान्यो जीवति । व्यधिकरणयोस्तयोरहेतुहेतुमत्त्वात् । पुत्राद्यानन्देनापि वितर्ण्यानदान्तरस्योत्पादात् । न च जीवस्यापीश्वरानन्दनिमित्तआनन्दोऽस्त्विति वाच्यम्। बिम्बप्रतिबिम्बभावेन हेतुहेतुमज्ज्ञातयोरुच्यते चेत्तत्वाभेद एव स्यात् । अविषयस्यापरानन्दस्य प्रकारान्तरेण जीवानन्दाहेतुत्वात् । जीवानन्दस्य परानन्दस्य परानन्दप्रतिबिम्बत्वाभिप्रायैव "आनन्दयति" इति श्रुतिः। "एषोऽस्य परम आनन्द"इति श्रुतिरीश्वरएवजीवस्यानन्द इति दर्शयन्ती जीवस्य तदात्मतामेव दर्शयति । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति च । परमानन्दांशत्वमेव जीवानन्दस्य दर्शयति । अंशत्वं च प्रतिबिम्बत्वम् । निरंशे तदन्यस्याभावात् ॥

तत्र तावच्छ्रुतिं प्रमाणयति-को ह्येवेति । एष आकाश आसमन्तात्काशते प्रकाशत इत्यात्मा । यद्यानन्दो न स्यात्तर्हि को वा जन्तुश्चेष्टेत । को वा प्राणधारणमल्पायासमनुभूयापि कुर्यादित्यर्थः । नन्वाकाशशब्दस्य परमात्मनि प्रसिद्धत्वात् स एवानन्दः कथ्यते, न तु प्रत्यगात्मेति चेन्न । एष इति प्रत्यक्षसिद्धप्रत्यगात्मन एव परमात्माभेदेनानन्दरूपताभिधानादित्याह-न चात्रे

ति । प्रत्यग्ब्रह्मणोरभेदाभिप्रायाभावे आकाशानन्दस्य जीवस्य प्राणाधारणे व्यतिरेकमुखेन हेतुत्वाभिधानमनुपपन्नं स्यादित्याह-अन्यथेति । पुत्रानन्दं दृष्ट्वाहं जीवामीति केषांचिद् व्यवहारदर्शनाद् व्यधिकरणस्यापि तस्य जीवनहेतुत्वमित्याशङ्क्याह-पुत्रादीति । पुत्रानन्दश्चेत्पितुरिष्टस्तर्हीष्टवस्तुदर्शनेन पितर्यप्यानन्दो जायते स चेदनिष्टः । नैष पितृजीवनहेतुरितिभावः । तर्ह्येवमेवेश्वरानन्दजन्यो जीवानन्दस्तज्जीवनहेतुरिहोच्यत इत्याशङ्क्याह-न च जीवस्येति । किं जीवेश्वरानन्दयोर्बिम्बप्रतिबिम्बभावेन हेतुहेतुमत्ता उत प्रकारान्तरेण? । आद्ये इष्टापत्तिरित्याह-बिम्बेति । द्वितीयेऽपि किमीश्वरानन्दस्य स्रगादिवज्जीवानन्दहेतुत्वमुतेश्वरज्ञानादिवत्? । नोभयथापीत्याह-अविषयस्येति । परानन्दस्य ज्ञानादिवत्सर्वनिमित्तत्वे मानाभावादितिभावः । ननु "आनन्दयति"इति श्रुतेराकाशानन्दस्य जीवानन्दहेतुरिहोच्यते इत्यत्राह-जीवानन्दस्येति । श्रुत्यन्तरे जीवानन्देश्वरयोरभेदाभिधानात् "एष ह्येवानन्दयति"इति बिम्बप्रतिबिम्बभावो विवक्षित इत्यभिप्रेत्याह-एषोऽस्येति । किं च जीवानन्दस्य परानन्दांशत्वाभिधानान्निरवयवानन्देऽवयवावयविविभागायोगाद्विम्बादिभावेनैवांशांशिभावो वक्तव्य इत्याह-एतस्यैवेति ॥

ननु यदेष आकाश आनन्दो न स्यादित्यत्रानन्दस्य मत्वर्थीयप्रत्ययान्तत्वादानन्दगुणक एवायमात्मेति तत्राह-न चानन्देति ॥

आत्मन आनन्दगुणकत्वं प्रसाध्य निरस्यति । न चानन्दशब्देनानन्दगुणक-

त्वमुच्यते नत्वात्माभेदइतिवाच्यम् । "उदरमन्तरं कुरुते अथ तस्य भयं भवति"इत्यल्पस्याप्यानन्दभेदस्य श्रुत्यैवाचोदितत्त्वात् । तथाऽन्यत्रापि "स योऽन्यमात्मनः प्रियं ब्रुवाणां ब्रूयात् प्रियं ते रोत्स्येति"इति सुखस्य जीवान्यत्वं प्रतिषिद्ध्यते । अत एवानन्दशब्देन दुःखाभाव एवाभिधेय इति प्रत्युक्तम् । सातिशयस्यानन्दस्य लोके भावरूपत्वात् । प्रतियोगिप्रतीत्यनपेक्षप्रतीतेश्च । अन्यथा वैपरीत्यस्यापि सुवचत्वात् । वेदेऽप्यानन्दशब्दार्थः स एव । सति मुख्यार्थे लक्षणाया अयोगात् । अनुमानमपि तत्र मानम् । तत्र यद्यपि नेच्छाविषयत्वम् । सुखत्वेन नियतं तत्साधने व्यभिचारात् । न चेच्छात्वं सुखविषयत्वेन व्याप्तम्, साधनेच्छाया अपि सुखविषयत्वादेवेति वाच्यम् । दुःखाभावेच्छायां व्यभिचारात् । नापीच्छात्वेन सुखदुःखाभावतत्साधनान्यतरविषयत्वं साध्यम् । असुखत्वेनार्थान्तरत्वात् ।

उत अपि अरं अल्पं अन्तरं भेदम् । ईषदपि भेदं यः कुरुते मन्यते तस्य भयं भवतीत्यर्थः । बृहदारण्यकश्रुतिरप्यात्मव्यतिरिक्तप्रियं निराकुर्वन्त्यात्मन एव प्रियत्वमाह-तथान्यत्रापीति । यआत्मनः प्रेयस्त्वदर्शी स प्रियं सुखं आत्मनोऽन्यं, आत्मनो भिन्नं ब्रुवाणं परं प्रत्येवं

ब्रूयात् ते प्रियं रोत्स्यति नश्यतीति भेदवादिनः शापो-देय इतिश्रुत्यर्थः । दुःखाभावस्यैवानन्दत्वात् कथमात्मन आनन्दरूपत्वमिति जरद्वैशेषिकमतं निराकरोति-अत एवेति । दुःखवदेव सुखेऽपि तरतमभावस्यानुभवसिद्धत्वा-दभावे च तदसंभवाल्लौकिकानन्दस्तावद्भावरूप इत्याह-सातिशयस्येति । किं चानन्दो दुःखाभावो न भवति । दुःखप्रतीतिनिरपेक्षप्रतीतिकत्वात् । घटवत्, इत्याह-प्र-तियोगीति । विपक्षदण्डमाह-अन्यथेति । दुःखमेव सुखा-भावः किं न स्यादित्यर्थः । एवं च लोके आनन्दपदा-र्थस्य भावरूपत्वात् वेदेऽपि स एवानन्दशब्दार्थः । दुःखा-भावे च लोके शक्तिग्रहाभावात् । तत्परिग्रहे लक्षणा प्रसङ्ग इत्याह-वेदेऽपीति । श्रुतौ विप्रतिपन्नं प्रत्यनुमानं प्रमाणयति-अनुमानमिति । तत्र स्वाभिमतानुमानं दर्शयितुं पूर्ववादिमुखेनानुमानान्तरं दूषयति-तत्र यद्य-पीति । अस्य तथाप्यात्मा सुखरूपः, निरुपाधिकप्रेमगो-चरत्वात्, इत्युत्तरेण सम्बन्धः । तत्रात्मा सुखरूपः । इच्छाविषयत्वात्, इति प्रयोगं दूषयति-नेच्छाविषयत्व-मिति । आत्मेच्छा सुखविषया । इच्छात्वात् । संमतवत् । ततश्चात्मनः सुखत्वसिद्धिः । न च सुखासाधनेच्छयां व्यभिचारः । तस्या अपि विशेषणतया सुखविषत्वात्, इति न वाच्यमित्याह-न चेच्छात्वमिति । नन्वात्मेच्छा सुखतत्साधनदुःखाभावतत्साधनान्यतरविषया । इच्छा-त्वात् । संमतवत् । तथा चात्मनः परिशेषात् सुखत्व-मिति चेन्न । सुखसमवायित्वेनात्मविषयत्वेच्छायाः सुख-विषयत्वसंभवादित्याह-नापीति ॥

प्रेमगोचरत्वस्य पुत्रादौ व्यभिचारेऽपि परमप्रेमगोचरत्वं न व्यभिचरतीति शङ्कते-नन्वात्मेति ।

(आत्मनः सुखरूपत्वे साधकहेतोरप्रयोजकत्वशङ्का)

नन्वात्मासुखरूपः । परमप्रेमास्पदत्वात् इति चेन्न । अप्रयोजकत्वात् । न च सुखसाधने परमप्रेमाभावादात्मनोऽसुखत्वे हेतूच्छित्तिरेव विपक्षे बाधकस्तर्क इति वाच्यम् । सुखसमवायित्वेनापि तदुपपत्तेः । न चैवं दुःखसमवायित्वाद् द्वेषोऽपि स्यादिति वाच्यम् । अन्वयव्यतिरेकाभ्यां द्वेषस्य दुःखतन्निमित्तमात्रविषयत्वात् । न च लाघवेन दुःखतत्साधनत्वमात्रं द्वेषविषयत्वे प्रयोजकमिति वाच्यम् । दुःखसाधनेऽपि स्वस्मिन् तददर्शनेन तस्यैव तत्प्रयोजकत्वात् । अत एव दुःखं तन्मात्रसाधनत्वं द्वेषविषयत्वप्रयोजकम्, आत्मा तु न तथेति प्रत्युक्तम् । अहिकण्टकादेरपि दुःखमात्रहेतुत्वासिद्धेः, सुखं प्रत्यपि तस्य हेतुत्वात् । न च लाघवेन सुखत्वमेव परमप्रेमगोचरत्वे निमित्तमिति वाच्यम् । स्वसमवेतसुखस्य पुरुषार्थत्वेन तद्रूपेणाप्रयोजकत्वात् । किं च हेतावपि परमत्वमिच्छाया न स्वतः, किं तु विषय विशेषप्रयुक्तम् । तच्च सुखविषयत्वमात्मविषयत्वं वा? । आद्ये सुखविषयेच्छाया न स्वतः किं तु विष-

यविशेषप्रयुक्तम् । तच्च सुखविषयत्वमात्मविषयत्वं हेतुः । स चासिद्धः । तत्साधने व्यभिचारी च । आत्मनोऽपि सुखसमवायितया तद्विषयत्वसंभवादप्रयोजकश्च । अत एव न द्वितीयोऽपि ॥

विपक्षे बाधकाभावादप्रयोजक इति दूषयति-नेति । हेतूच्छित्तिरेव विपक्षे बाधिकेत्याशङ्क्य हेतोरन्यथासिद्ध्या परिहरति-न च सुखेति । इच्छाविषयसुखाश्रयत्वादात्मनः प्रेमगोचरत्वे द्वेषविषयदुःखाश्रयत्वात् द्वेषगोचरताऽपि स्यादित्याशङ्क्य दुःखाश्रयेऽप्यात्मनि द्वेषाभावात् नैवमित्याह-न चैवमिति । निमित्तस्य कारणविशेषत्वेन गौरवात् दुःखतत्कारणमात्रं लाघवेन द्वेषगोचर इत्याशङ्क्य प्रामाणिकं गौरवं न दोषायेत्यभिप्रेत्याह-न च लाघवेनेति । ननु दुःखतन्मात्रकारणत्वे द्वेषगोचरत्वप्रयोजकम् । आत्मनस्तु सुखं प्रत्यपि कारणत्वान्न द्वेषगोचरतेत्याशङ्क्याह- अत एवेति । अतः शब्दार्थमाह-अपीति । ननु सुखसमवायित्वापेक्षया सुखत्वस्यैव लाघवेन परमप्रेमप्रयोजकत्वादात्मनः सुखत्वसिद्धिरिति चेन्न । सुखस्यात्मरूपत्वे वक्ष्यमाणेनापुरुषार्थत्वप्रसङ्गेन लाघवावतारादित्यभिप्रेत्याह-न च लाघवेनेति । किंच प्रेम्णः परमत्वं जातिरुपाधिर्वा ? । नाद्यः ?। तत्कल्पकाभावात् । तदङ्गीकारेऽप्यप्रयोजकत्वादित्यभिप्रेत्याह-किं चेति । द्वितीयं परिशिनष्टि-किं त्विति । अस्यापि विकल्पासहत्वान्नात्मनः सुखत्वसिद्धिरित्यभिप्रेत्य विकल्पयति-तच्चेति । आत्मविषयत्वं वाऽनन्यशेष-

यत्वं वेत्यपि द्रष्टव्यम् । आद्ये आत्मेच्छायां सुखविषयत्वमात्मनः सुखत्वे सिद्धे सिद्ध्यति तच्चाद्याप्यसिद्धमिति विशेषणासिद्धो हेतुरित्याह-आद्य इति । किं च सुखसाधनस्यापि स्वविशेषणे सुखविषयत्वमस्ति न सुखत्वमिति तत्र व्यभिचार इत्याह-तत्साधन इति । सुखस्यात्मविशेषणत्वेऽप्युक्तहेतुसंभवादप्रयोजकश्चेत्याह-आत्मनोऽपीति । द्वितीये आत्मविषयेच्छाविषयत्वं हेतुः । सोऽप्यप्रयोजकत्वादयुक्त इत्याह-अत एवेति ॥

तृतीयमुत्थापयति अनन्यशेषेति ।

अनन्यशेषविषयत्वमिच्छायाः परमत्वमिति चेन्न । सुखदृष्टान्ते तदभावात् । तस्यात्मशेषत्वात् । व्यतिरेकित्वे वाऽसाधारण्यम् । सुखस्यैव सपक्षत्वात् । न चात्मव्यतिरिक्तवैषयिकं सुखं नास्तीति वाच्यम् । न तावद्विषयजन्यसुखमेव नास्तीति वक्तुं शक्यम् । विषयसन्निधाने तदनुभवविरोधात् । विषयानुपादानप्रसङ्गाच्च । नापि तदात्मैव । जन्याजन्ययोरेकत्वानुपपत्तेः । न च तस्य जन्यताऽसिद्धिविषया । अन्वयव्यतिरेकाभ्यां तस्य तन्निश्चयात् । विषयसन्निधानेनाभिव्यक्तिरेव नोत्पत्तिरिति चेन्न । इदानीं सुखमुत्पन्नं नष्टमिति बुद्धेर्ज्ञानाख्याभिव्यक्त्यविषयत्वात् । एतेनात्मा सुखरूपः । सुखलक्षणवत्त्वात् । वैषयिकसुखवत् । सुखलक्षणं च सर्वशेषित्वे सत्यनन्यशे-

षत्वमिति प्रत्युक्तम् । दृष्टान्तस्य साधनवैकल्यात् । व्यर्थविशेषणत्वाच्च । यदि च सुखमात्मैव स्यात् तदा दुःखदशायामप्ययं तथैवानुभूयेत । न च तदा दुःखेन सुखमनुभूतमिति वाच्यम् । तर्ह्यात्मापि न प्रकाशेत । तत्प्रकाशे वा किं नामाभिभूतं चेति युज्यते । एतेनान्यदप्यात्मनः सुखाभेदानुमानं निरस्तम् ।

किमस्मिन् हेतौ सुखवदित्यन्वयदृष्टान्तोऽभिमत उत घटवदिति व्यतिरेकिदृष्टान्तः ? । आद्ये साधनवैकल्यमाह-न सुखेति । द्वितीये सति सपक्षे तत्रावर्तमानत्वादसाधारणानैकान्तिक इत्याह-व्यतिरेकित्वे इति । ननु पक्षातिरिक्तस्य सुखस्याभावान्न तस्य सपक्षतेत्यत आह-न चात्मेति । किं विषयजन्यं सुखमेव नास्तीत्युच्यते किं वा तस्यात्मभेदो नास्तीति ? । नाद्यइत्याह-न तावदिति । द्वितीयं दूषयति-नापीति । ननु सुखस्य जन्यत्वे मानाभावान्नात्माभेदानुपपत्तिरित्यत आह-न च तस्येति । सुखप्रकाश एव विषयजन्यो न सुखमिति चोदयति-विषयेति । सुखे उत्पत्त्याद्यनुभवस्य बाधाभावात् तदेव विषयाजन्यमित्याह-न इदानीमिति । आत्मनः सुखत्वे संभावितमनुमानान्तरं दूषयति-एतेनेति । एतच्छब्दार्थमाह-दृष्टान्तस्येति । सुखस्य दुःखादिकं प्रति शेषित्वाभावान्न सर्वशेषित्वम्, आत्मशेषत्वाच्च नानन्यशेषत्वमपीत्यर्थः । किं चानन्यशेषत्वादित्येतावता व्यभिचारनिवृत्तेरितरद्व्यर्थमित्याह-व्यर्थेति । उक्तहेतू-

नामनुपलब्धिपराहतिमभ्याह-यदीति । ननु दिवोडुगणानुपलम्भवद् दुःखदशायां सुखेऽपि सुखस्यानुपलम्भ इति चेन्न । तदभिन्नात्मन्यननिभूते तदभिभावायोगादित्याह-न च तदेति । उक्तप्रतिकूलतर्कविरोधादेवात्मा सुखरूपः । आत्मत्वात् । व्यतिरेकेण घटवत्, इत्याद्यनुमानं निरस्तमित्याह-एतेनेति ॥

प्रतिकूलतर्कान्तरपराहतिमभ्याह-किं चेति ।

सुखस्य दुःखाभावस्य च पुरुषार्थत्वम् ।

किं च सुखस्याऽऽत्मरूपत्वेऽपुरुषार्थत्वापत्तिः । स्वसमवेतसुखस्यैव पुरुषार्थत्वात् । न च सुखमात्रं पुरुषार्थो लाघवादिति वाच्यम् । परसुखस्यापि पुरुषार्थत्वापत्तेः । मम सुखं भूयादहं सुखी स्यामिति च । स्वसंबन्धिसुखस्यैव काम्यमानत्वाच्च । अन्यथा सुखमहं स्यामिति काम्येत । न च सुखं मे स्यादिति कामना साऽन्यदीयत्वनिवृत्तिपरा न तु स्वसम्बन्धविषयेति वाच्यम् । तात्पर्यं हि शब्दधर्मो न तु कामनायाः । कामना तु यमर्थं यथा गोचरयेत् स तथैव पुरुषार्थः ॥

नन्वेवं मोक्षस्याप्यपुरुषार्थत्वप्रसङ्गः । जन्यसुखस्य तदानीमसत्त्वात्, मोक्षस्याशरीरत्वात्, नित्ये चात्मातिरिक्ते सुखे प्रमाणाभावादिति चेन्न । दुःखाभावस्यैव मोक्षत्वात् । न च दुःखा

भावो ऽपुरुषार्थः । सुखवत्तस्यापि दुःखं मे मा भूदिति काम्यमानत्वात् । लक्षणात्त्रात्पुरुषार्थस्य दुःखाभावः सुखशेषतया काम्यते न तु स्वत इति चेन्न । वैपरीत्यस्यापि वक्तुं शक्यत्वात् । तस्मादुभयमपि पुरुषार्थः ॥

सुखतत्समवाययोः पुरुषार्थत्वे गौरवात् सुखमेव पुरुषार्थ इत्याशङ्क्याह-न च सुखेति । नन्वननुभूयमानसुखस्यापुरुषार्थत्वात् सुखसाक्षात्कार एव पुरुषार्थः, तथा च नातिप्रसङ्ग इत्यत आह-मम सुखमिति । सुखसाक्षात्कारस्यापि काम्यमानत्वात्पुरुषार्थत्वं वक्तव्यम् । एवं सुखसंबन्धस्यापि काम्यमानत्वात् सोऽप्यावश्यक इत्यर्थः । आत्मरूपसुखस्यैव पुरुषार्थत्वे संबन्धे कामना न स्यादित्याह-अन्यथेति । कामनायाः संबन्धविषयत्वप्रतीतावपि तत्र तात्पर्याभावान्न सुखसंबन्धः पुरुषार्थ इत्याशङ्क्याह-न च सुखमिति ।

सुखस्यात्मसमवेतत्वे मुमुक्षुप्रवृत्त्यनुपपत्तिरिति चोदयति-नन्वेवमिति । किं मोक्षदशायां जन्यं सुखमुत नित्यम् ? नाद्यः । तदा तत्कारणस्य शरीरेन्द्रियादेरभावादित्याह-जन्येति । द्वितीयं-दूषयति नित्ये चेति । सर्वत्र सुखस्यैव पुरुषार्थत्वान्न दुःखाभावः पुरुषार्थ इत्यत्राह-न चेति । ननु काम्यमानतामात्रेण कथं दुःखाभावस्य पुरुषार्थत्वमित्यत आह-तल्लक्षणत्वादिति । ननु स्वतः काम्यमानमेव पुरुषार्थः, दुःखाभावस्तु सुखार्थतयैव काम्यतेऽतो न पुरुषार्थ इति शङ्कते-दुःखाभावोऽपि स्वत एव काम्यते । न चोभयोरपि स्वतः काम-

नायां गौरवमिति वाच्यम् । तर्हि सुखमेव दुःखाभावार्थं काम्यत इति किन्न स्यादित्याह-न वैपरीत्यस्येति । तर्हि स्वतस्त्वं कस्येत्याशङ्क्य नियामकाभावादुभयमपि स्वत एव काम्यते पुरुषार्थश्चेत्याह । तस्मादिति ॥

नन्वात्मनः सुखरूपत्वं श्रुतिप्रमितं कथमपह्नूयत इत्याशङ्क्य श्रुतिरन्यपरा इत्याह-श्रुतिश्चेति ।

आत्मनः सुखरूपत्वसमर्थनम् ।

श्रुतिश्चानुभवयुक्तिविरोधात् दुःखाभावपरेति नात्मा सुखरूप इति । तथाप्यात्मा सुखरूपः । निरुपाधिकप्रेमगोचरत्वात् । व्यतिरेकेणानात्मवत् । निरुपाधिकत्वं च प्रेम्णोऽनन्यप्रयुक्तत्वम् । न चासिद्धिः । सर्वदाऽहं भूयासमिति सर्वेषामात्मनि प्रेमदर्शनात् । तस्यान्याप्रयुक्तत्वात् । न हि पतिजायादिप्रेम्णस्तदतिरिक्तात्मप्रयुक्तत्ववदात्मप्रेमान्येन प्रयुज्यते ।

नन्वात्मन्यपि सुखसमवायित्वेन प्रेमेत्यप्रयोजकमनुमानम् । अन्याप्रयुक्तत्वमसिद्धं चेतिचेत् । न, सुखात्मनोर्भेदे आत्मसंबन्धितया प्रेमगोचरस्य सुखस्य तत्प्रेमनिमित्तत्वायोगात् ।

एवमात्मनः सुखरूपत्वे संभावितदोषं प्रदर्श्य तत्परिहारायानुमानं तावदाह-तथाऽपीति । नन्वात्मेच्छायामपि कस्यचिदुपाधेः सत्त्वात् कथं निरुपाधिकत्वमित्यत आह-निरुपाधिकत्वं चेति । अनन्यप्रयुक्तत्वं

चाऽन्येच्छानधीनत्वम् । पुत्रादिसुखसाधनेच्छायाः आत्मसुखेच्छाप्रयुक्तत्वान्न तत्र व्यभिचार इति भावः । साध्यस्यैवेच्छागोचरत्वात् सिद्धस्यात्मनः कथं तद्गोचरत्वमित्यत आह-न चेति । न हि साध्यत्वमात्रमिच्छागोचरत्वे तन्त्रम् । दुःखे तदभावात् । किं तु सुखत्वे सति साध्यत्वमिति वाच्यम् । तथा च गौरवमिति सुखत्वमेव स्वतन्त्रेच्छागोचरत्वे तन्त्रम् । सोपाधिकेच्छायां सुखरूपात्मनोऽपि प्रेमगोचरत्वमुपपद्यत इति भावः । किं च साध्यस्यैव प्रेमगोचरत्वे आत्मनि प्रेमा न स्यात् । स च तत्र सर्वानुभवसिद्ध इत्याह-सर्वदेति । न चात्मनः समयान्तरसंबन्ध एव भूयासमितीच्छागोचरो, न त्वात्मेति वाच्यम् । आत्मनोऽनिष्टत्वे तस्य समयान्तरसम्बन्धेऽपीच्छाऽयोगात् । किं चात्मनस्तर्कितध्वंसे सर्वेषां द्वेषः । स च प्रतियोगिन इष्टत्वमन्तरेणानुपपन्नः । अनिष्टस्य नाशे द्वेषादर्शनात् । तस्मादात्मा सुखत्वेन प्रेमगोचर इति भावः । विशेष्यासिद्धिं परिहृत्य विशेषणासिद्धिं परिहरति-तस्येति । तदेवोपपादयति-न हीति । तथा च श्रुतिः, "आत्मनस्तु कामाय सर्वं प्रियं भवति । तदेतत्प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा"इति । आत्मनः सुखसमवायित्वेनाप्युक्तहेतोः संभवादप्रयोजकत्वम् ।

सुखार्थमेवात्मन इष्यमाणत्वाद्विशेषणासिद्धिश्चेति चोदयति-नन्वात्मन्यपीति । तत्रासिद्धिं तावत् परिहरति-न सुखेति । सुखस्यानिष्टत्वे तदर्थमात्मन इष्यमाणत्वायोगात्तदिष्यमाणमात्मेच्छाप्रयोजकमिति

वाच्यम् । सुखस्य चेष्यमाणत्वं न सुखत्वेन । अन्यदीयसुखे तदभावात् । किं त्वात्मसुखत्वेन । तत आत्मनोऽनिष्टत्वे तत्संबन्धिसुखेऽपि वैरिसुखवदिच्छायोगादात्मेच्छाप्रयुक्तैव तत्संबन्धिसुखेच्छेति परस्य राश्रयस्तव वज्रलेपायते इति भावः ।

यद्युक्तं सुखसमवायित्वेनात्मनि प्रेमसंभवादप्रयोजकत्वमिति । तद्दूषयति । किं चेति ।

किं च सुखसमवायित्वेन चेत् प्रेमा । तदा दुःखदशायां नात्मनि प्रेम स्यात् । तदा तस्मिन् सुखसमवायाभावात् । आत्मनि भाविसुखवैशिष्टयस्येदानीन्तनप्रेमाऽनिमित्तत्वात् । भाविसुखे मानाभावेन तत्प्रतिसंधानाभावाच्च । मुक्तिपूर्वकालीने आत्मनि प्रेमायोगाच्च । दुःखाभावस्य पुरुषार्थताया निराशिष्यमाणत्वाद्दुःखसमवायित्वेनात्मन्यत्यर्थं द्वेषप्रसङ्गाच्च । सुखसाधनेषु स्नेहतारतम्यनियमवद्दुःखसाधनेषु द्वेषतारतम्यनियमात् ।

ननु हेयगोचरो द्वेषः कथमहेये आत्मनि स्यादिति तर्ह्युपादेयगोचरः स्नेहः कथमनुपादेये आत्मनि स्यादिति तुल्यम् । अथ यत्र ममेदं भूयादितीच्छा सैवोपादेयगोचरा । अहं भूयासमिति तु ततो विलक्षणा सा । सुखसमवायि-

तया ऽऽत्मन इष्टत्वमात्रगोचरेति चेत्तर्हि ममेदं मा भूयादिति द्वेषएव हेयविषयः । नाहं भूयासमिति तु ततो विलक्षणः स आत्मनो दुःखसमवायितयाऽहितत्वमात्रगोचरइति तुल्यम् । न च दुःखासमवायिनोऽपि । तत्साधनतयाऽनिष्टत्वात् ।

किं वर्त्तमानसुखसमवायित्वं प्रेम प्रयोजकमुतागामि सुखसमवायित्वं किं वा तत्प्रतिसंधानम् ? । नाद्यः। दुःखदशायां तदभावेऽपि प्रेमदर्शनादित्याह-सुखसमवायित्वेनेति । द्वितीयोऽपि न । भविष्यत्कारणात्, कार्यायोगादित्याह-आत्मनीति-तृतीयं दूषयति-भावीति । तव मते मुक्त्यनन्तरं सुखाभावनिश्चयात् तत्पूर्वकालीनात्मनि प्रेमा न स्यादित्याह-मुक्तीति । ननु तदा दुःखाभावप्रतिसंधानेनैव प्रेमेत्यत आह-दुःखाभावस्येति । सुखसमवायित्वेनात्मनि प्रेमेत्येतत्प्रतिबन्दिग्रहेणापि दूषयति-दुःखसमवायित्वेनेति । सुखसमवायिनः सुखोत्पत्तिस्थित्योरपेक्षितत्वात् तत्र स्नेहातिशयश्चेत् दुःखोत्पत्तिस्थित्योरपि तस्यापेक्षितत्वात् द्वेषातिशयोऽपि स्यादित्याह-सुखसाधनेष्विति । हानयोग्येष्वेवाहिकण्टकादिदुःखसाधनेषु द्वेषदर्शनाद्धेयत्वमपि द्वेषविषयत्वप्रयोजकं तदभावान्नात्मनि द्वेष इति शङ्कते-ननु हेयेति । तर्हि तव मते यत्नलभ्येष्वेव सुखसाधनेषु स्नेहदर्शनाद्यत्नानपेक्षात्मनि स न स्यादित्याह-तर्हीति । सोपाधिकप्रेम्ण एवोपादेयगोचरत्वादनुपादेयात्मनि निरुपाधिकः प्रेम

घटत इति शङ्कते । अथेति । तर्ह्युपाधिकद्वेषस्यैव हेयगोचरत्वादहेयेऽप्यात्मनि निरुपाधिद्वेषो भवेदेवेत्याह-तर्हीति । ननु दुःखस्य दुःखत्वेनैव द्वेषगोचरता तदतिरिक्तस्य दुःखनिमित्तत्वेन । आत्मनस्तु तस्याभावान्न, द्वेषगोचरतेति चेन्न । अनुगतस्यानिष्टत्वस्यैव सर्वत्र द्वेषप्रयोजकत्वे संभवत्यननुगतस्याप्रयोजकत्वादित्याह-न च दुःखेति । ननु दुःखातिरिक्तस्यानिष्टत्वे तन्निमित्तत्वमेव प्रयोजकम् । तथा चात्मनो नानिष्टत्वमित्यत आह-दुःखसमवायिनोऽपीति । लाघवेन दुःखकारणस्यैव दुःखातिरिक्तेऽनिष्टत्वप्रयोजकत्वादात्मनोऽपि तद् दुर्वारमित्यर्थः ।

आत्मनीष्टत्वप्रयोजकसत्त्वान्नानिष्टत्वमित्याशङ्क्य वैपरीत्यमेव किं न स्यादित्याह ।

न च सुखसमवायित्वेनेष्टतयाऽऽत्मा नानिष्ट इति वाच्यम् । दुःखसमवायितयानिष्टत्वान्नेष्ट इत्यपि वक्तुं शक्यत्वात् । दुःखसाधनानां स्वत इच्छाविरोधिनां दुःखसंबन्धितयैव द्वेषविषयत्वात् । समवायिनोऽपि दुःखसंबन्धित्वात्, दुःखसमवाय्यतिरिक्तरूपेण तेषां द्वेषविषत्वे प्रयोजकगौरवात् । आत्मनि द्वेषाभावस्यान्यथाऽपि संभवात् ।

किं च द्वेषविषयत्वे साक्षात्परम्परासंबन्धेन दुःखत्वमेव प्रयोजकम् । परम्परासंबन्धः समवायिन्यप्यस्तीत्यात्माऽपि द्वेषगोचरः स्यात् ।

आत्मनि द्वेषापादनमनुभवविरुद्धमिति चेन्न । आपादने ऽनुभवविरोधस्यालङ्कारत्वात् । अत एवात्मत्वमेव परमप्रेमास्पदत्वे प्रयोजकमिति निरस्तम् । पुत्रादीच्छाया इवात्मेच्छाया अपि सुखविषयत्वनियमात् । तच्च सुखमात्मैव, तदिच्छाया अन्याप्रयुक्तत्वत् । असुखात्मसंबन्धित्वेनैव तेषां स्नेहविषयत्वे स्वशत्र्वादेरपि तथात्वप्रसङ्गादित्युक्तत्वात् । अत एव दुःखाभावाश्रयतयाऽप्यात्मनः परमप्रेमास्पदत्वमिति निरस्तम् ।

न च सुखेति । किं वाहिकण्टकादीनां न जात्याऽनिष्टत्वम् । केषां चिदिष्टत्वात्, किन्तु दुःखहेतुतया । तच्चात्मनोऽपि दुःखित्वाङ्गीकारे दुर्वारमित्याह-दुःखसाधनानामिति । अविरोधिनामिति च्छेदः । नन्वात्मनि द्वेषादर्शनात्तद्व्यावर्तनाय गुरुशरीरप्रविष्टद्वेषप्रयोजकमङ्गीकार्यमिति तत्राह-आत्मनीति । अन्यथाऽपीति । सुखरूपतया दुःखसंबन्धाभावेनापीत्यर्थः । न च सिद्धान्तेऽप्यन्तःकरणे द्वेषगोचरता स्यादिति वाच्यम् । विवेकिनां तस्येष्टत्वात् । अविवेकिनां तु सुखरूपात्मतया गृहीतत्वेन तदभावोपपत्तेरिति भावः । किं च परमतेऽपि दुःखत्वमेव स्वसंबन्धिनि द्वेषविषयत्वेऽनुगतप्रयोजकम् । स च संबन्धो दुःखे साक्षात् साधनेषु परम्परयेत्यात्मनोऽपि दुःखसमवायित्वात्तत्र विवेकिनामपि द्वेषो दुर्वार इत्याह-किं चेति । आत्मन इष्टतमत्वानुभवविरुद्धं द्वेषापादनमिति शङ्कते- आत्मनीति । न ह्यस्मा-

भिरात्मनि द्वेषः साध्यते, किं तु तदभावाय तस्य सुखरूपत्वमित्यभिप्रेत्याह-आपादन इति । दुःखसमवायित्वेन द्वेषस्यापि प्रसङ्गादेवान्यदपि प्रयोजकं प्रत्युक्तमित्याह-अत एवेति । किं चेच्छात्वस्य सुखविषयत्वेन नियतत्वादात्मनः सुखसमवायितया तदनङ्गीकारे सुखत्वमादायैव तत् पर्यवस्यतीत्यभिप्रेत्याह-पुत्रादीति । ननु पुत्रादिकं न सुखसाधनत्वेनेच्छाविषयः । येनेच्छात्वं सुखविषयत्वनियतं स्यात् । किं त्वात्मीयत्वेनेत्यत आह-असुखात्मेति । दुःखाश्रयतया द्वेषप्रसक्तेरपरिहारात्, दुःखदशायामप्यात्मनि प्रेमदर्शनाच्च न दुःखाभावोऽपि तत्प्रयोजक इत्याह-अत एवेति ।

न चात्मप्रेम्णः परमते ऽन्यथानुपपत्तावपि सिद्धान्तेऽन्यथोपपत्तिसंभवादात्मनो न सुखत्वसिद्धिरिति चोदयति-स्यादेतदिति ।

(दुःखाभावस्य पुरुषार्थत्वनिरसनम् ।) स्यादेतत् । भवन्मते दुःखाभाव आत्मैव । कल्पितप्रतियोगिकाभावत्वात् । ततश्चानन्दोऽप्यात्मा दुःखाभावत्वेन परमप्रेमगोचर इति चेन्न । दुःखाभावस्यापुरुषार्थस्य स्वतः कामनाऽसंभवात् । दुःखं मे मा भूदित्याद्याशिषः पश्वाद्याशिष इवान्यशेषतयाऽप्युपपत्तेः । लाघवेन सुखस्यैव पुरुषार्थत्वे संभवति तस्यापि स्वतः पुरुषार्थत्वकल्पनायोगात् । एवं च प्रवर्तकज्ञानेऽपि लाघवम् । न चैवं वैपरीत्यमस्त्विति वा-

च्यम् । किं दुःखसंसर्गाभावमात्रं पुरुषार्थस्तत्र सुखस्योपयोगः उत तद्ध्वंस एव? । नाद्यः । दुःखबहुले यागादौ पुरुषार्थोच्छेदधियाऽप्रवृत्तिप्रसङ्गात् । दुःखप्रागभावस्य ततो विनाशात् । सुखस्य ततोऽधिकस्याप्यपुरुषार्थत्वात् । ननु सुखस्यापुरुषार्थत्वेऽपि तत्कालीनदुःखानुत्पादः । तत्राधिकः पुरुषार्थोऽस्तीति चेन्न । अनिष्टनिषेधशास्त्रात्तत्राप्रवृत्तिमात्रेण तत्सिद्धेः । तात्कालिकसुखसाधने बहुदुःखसाध्येऽपि परस्त्रीगमनादौ प्रवृत्तिदर्शनाच्च । तत्कालीनदुःखाभावस्याल्पत्वात् ।

भवेदेतदेवं यदि दुःखाभावः स्वतः पुरुषार्थः स्यात् । न, त्वेतदस्ति । सुखस्यैव स्वरससुन्दरस्य पुरुषार्थत्वादित्याह-न दुःखाभावस्येति । तर्हि दुःखं मे मा भूदिति कामनानुपपत्तिरित्याशङ्क्याह-दुःखमिति। सुखवद् दुःखाभावस्य स्वत एव पुरुषार्थत्वं किं न स्यादित्यत्राह-लाघवेनेति । किं च दुःखाभावस्यापि स्वतः पुरुषार्थत्वे सुखदुःखाभावान्यतरसाधनताज्ञानं प्रवर्तकमिति वाच्यम् । तथा च गौरवम् । सुखस्यैव पुरुषार्थत्वे तु तत्साधनताज्ञानमेव प्रवर्तकमिति लाघवमित्य। ।-एवं चेति । सुखमेव दुःखाभावविशेषतया काम्यत इति किं न स्यादित्याशङ्क्याह-न चैवमिति । किं दुःखाभावोत्पत्तौ सुखस्योपयोगः उत ज्ञप्तौ? आद्येऽपि वक्तव्यमित्याह-किं

दुःखेति । दुःखसंसर्गाभावस्य पुरुषार्थत्वे प्रागभावानामपि तथात्वात्तदुच्छेदभयाद्यागादौ प्रवृत्तिर्न स्यादित्याह-नाद्यइति । ननु यागादिनानेककालसन्तन्यमानसुखोत्पत्तेस्तदर्थं तत्रप्रवृत्तिरित्यत आह-सुखस्येति । स्वर्गादिसुखार्थं न यागादौ प्रवृत्तिः, किन्त्वनेककालदुःखानुत्पत्त्यर्थमिति शङ्कते । ननु सुखस्येति । निषेधशास्त्रपर्यालोचनया निषिद्धपरिवर्जनेनापि दीर्घकालदुःखानुत्पादसंभवात् काम्यविधिरनर्थक एव स्यादित्याह-नानिष्टेति । भाविदुःखाभावमनपेक्ष्यापि बहुदुःखाभावनाशमङ्गीकृत्याल्पसुखार्थं प्रवृत्तिदर्शनान्न दुखाभावः पुरुषार्थ इत्याह-तात्कालिकेति । तत्रापि सुखकाले दुःखानुत्पत्तये प्रवृत्तिरित्यत आह-तत्कालीनेति ।

दुःखध्वंस एव पुरुषार्थइतिपक्षे दुःखस्य स्वध्वंसकारणत्वात्तदपीष्टसाधनतया कामनापूर्वकृतिसाध्यं स्यात् । तथा च तत्र द्वेषो न स्यादित्यभिप्रेत्याह-न द्वितीयोऽपीति ।

न द्वितीयोऽपि । दुःखध्वंसार्थं दुःखसमये कर्मणि प्रवृत्तौ दुःखस्यापि पश्वादिवदुपादेयताप्रसङ्गात् । यागाद्यनुष्ठानजन्यदुःखातिरिक्तदुःखस्य तन्निवर्त्यस्याभावात् । दुःखध्वंसस्यैव पुरुषार्थत्वे तव मते प्रायश्चितानुष्ठानप्रसङ्गात् । उत्पन्नस्य दुःखस्य सुखमन्तरेणापि निवृत्तिसम्भवाच्च । सुखं तत्र न हेतुः । निर्दुःखस्यापि सुखार्थमिष्टचिन्तायां प्रवृत्तिदर्शनाच्च । नापि

दुःखाभावज्ञाने सुखस्योपयोगः । तद्गोचरप्रत्यक्षस्य तदजन्यत्वात् । अनुमितेश्चापुरुषार्थत्वान्निरन्तरसुखधाराकामनाविरहप्रसङ्गाच्च । प्रतिसुखं स्वर्गादौ तद्विनाश्यदुःखासंभवात् ।

किं च दुःखात्यन्ताभावस्यापुरुषार्थत्वात् कादाचित्कदुःखाभावत्वं पुरुषार्थत्वावच्छेदकं वाच्यम् । ततश्च लाघवात् सुखमेव पुरुषार्थः, दुःखाभावकामना तु स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावविषयतयाऽन्यथा सिद्धा । दुःखनिवृत्तिं विना सुखाभिव्यक्तेरभावात् ।

अपि च कामनयाऽपि दुःखाभावः सुखशेष एव । एतद्दुःखं विना कदाहं सुखं स्थास्यामीति कामनादर्शनात् । तस्मान्न दुःखाभावः स्वतःपुरुषार्थ इति परमप्रेमास्पदत्वे सुखमेव प्रयोजकं लाघवादिति नाप्रयोजको हेतुः ।

किं चास्मिन् पक्षे यागो विफलः स्यात् । अनुष्ठानकालीनदुःखध्वंसस्य दृष्टप्रयत्नमात्रसाध्यत्वात्, स्वर्गे च यागनिवर्त्यस्य दुःखस्याभावादित्याह-यागादीति । किं च प्रायश्चित्तानुष्ठानस्य दुःखहेतुविघटनेन दुःखानुत्पाद एव पर्यवसानात्, तस्यापुरुषार्थत्वात्तच्छास्त्रमनर्थकं स्यादित्याह-दुःखेति । एवं दुःखध्वंसस्य पुरुषार्थत्वं निराकृत्य तत्र सुखस्योपयोगोऽपि नास्तीत्याह-उत्पन्नस्येति । स्वविषयज्ञानादेव तन्नाशसंभवादित्यर्थः । दुःख-

प्रसस्त्यभावेऽपि सुखार्थं प्रवृत्तिदर्शनात् तत्तन्निवृत्तिहेतुरित्याह-निर्दुःखस्येति । दुःखाभावे सुखस्योपयोग इति पक्षं दूषयित्वा तज्ज्ञप्तावुपयोग इति पक्षे दूषयति-नापीति । किं तत्प्रत्यक्षे तदुपयोगः उत तदनुमितौ ? । नाद्य इत्याह-तद्गोचरेति । अहं दुःखरहितः सुखित्वाद् व्यतिरेकेण दुःख्यहमिवेति । द्वितीयमाशङ्क्याह-अनुमितेश्चेति । सुखकाले दुःखाभावस्य प्रत्यक्षसिद्धत्वाद्वाऽसन्देहादनुमितिरिति द्रष्टव्यम् । दुःखध्वंसे सुखस्योपयोग इत्यत्र सिंहावलोकनन्यायेन दूषणान्तरमाह-निरन्तरेति । तत्र हेतुमाह-प्रतिसुखमिति । सुखस्यैव पुरुषार्थत्वे लाघवमपि नियामकमस्तीत्याह-किं चेति । अपुरुषार्थत्वादिति । तस्य पाषाणादावपि सत्त्वादात्मन्यसत्त्वाच्चेत्यर्थः । दुःखाभावस्य वा सुखेऽनुपयुक्तस्य कथं कामनेत्याशङ्क्य दुःखस्य स्वरूपसुखाभिव्यञ्जकान्तःकरणवृत्तिप्रतिबन्धकत्वात्तदभावतयैव कामनेत्याह-दुःखाभावेति । एवं सुखदुःखाभावस्वरूपपर्यालोचनया सुखस्यैव पुरुषार्थत्वमुक्त्वा तत्कामनापर्यालोचनेऽप्याह-अपि चेति । प्रकृतमुपसंहरति-तस्मादिति ॥

आत्मनश्चिद्रूपत्वमङ्गीकृत्य सुखत्वमनङ्गीकुर्वाणं साङ्ख्यं प्रत्याह-आत्मन इति ।

(आत्मनः सुखरूपत्वानङ्गीकारिणःसांख्यस्य मतन्निरासः) । आत्मनोऽसुखत्वे निर्गुणत्वादीनां तस्मिन् सुखाननुभवप्रसङ्गः । बुद्धिविषयः सुखानुभव इति चेत् । न, अहं सुखीति चैतन्यसामानाधिकरण्येन सुखप्रतीतेः । अहमनु-

भवस्यापीष्टत्वाच्च ।

ननु यदि सुखमात्मा तर्हि दुःखदशायामात्मेव सुखमपि प्रतीयेत । आवृतत्त्वान्न तथेति चेत्, तर्हि तन्मात्र आत्मापि न प्रतीयेत । ततः कथमात्माऽऽनन्दरूपः । कथं वा तत्काले प्रेम । इच्छायां ज्ञानमात्रविषयत्वादिति चेन्न । अस्ति तावद् दुःखदशायामप्यात्मन्यनौपाधिकः प्रेमा । सा च स्वहेतुतया सुखानुभवमाक्षिपति । न चानुभवबाधः । किं सुखमात्रं नानुभूयते किं वा सुखमित्यनेन रूपेण ? । नाद्यः । अहमनुभवे प्रकाशमानचैतन्यमेव सुखमिति मते तदननुभवासिद्धेः । द्वितीयस्त्वङ्गीक्रियते । वृत्तिविशेषप्रतिबिम्बितचैतन्यस्यैव तद्विषयत्वात् । सुखत्वं हि सुखपदप्रवृत्तिनिमित्ततयाऽनुगतव्यवहारविषयतया वा वृत्तावेव कल्प्यते ॥ ननु सुखरूप आत्मनि तत्र तत्कल्पने प्रमाणाभावात्, श्रुतौ सुखपदस्य वृद्धव्यवहारे वृत्त्यवच्छिन्नचैतन्यात्मसुखे व्युत्पन्नस्य ज्ञानादिपदवल्लक्षणयात्मनि प्रयोगात्, लोके आत्मनि केवले वृद्धानां सुखपदाप्रयोगात्, तस्य तदशक्तेः ।

जडात्मकबुद्धेरेव सुखाश्रयतया ऽनुभूयत इति शङ्कते-बुद्धीति । सांख्यैश्चिज्जडयोस्तादात्म्याध्यासानभ्युपग-

दुःखदशायामात्मनि सुखत्वविशिष्टसविकल्पकाभावे तत्र प्रेमाऽपि न स्यात् कारणाभावे कार्यायोगादिति शङ्कते-ननु दुःखेति ।

आत्मनि दुःखदशायामपि प्रेमास्तित्वनिरूपणम् ।

ननु दुःखदशायामात्मा सुखमिति नानुभूयते चेत् कथं तदा तस्मिन् प्रेमा । इच्छाया सुखत्वविशिष्टज्ञानजन्यत्वादिति चेन्न । सुखसाधारणरूपज्ञानस्यात्मनि प्रेमहेतुत्वात् । सुखत्वाविशिष्टज्ञानस्यापि तद्रूपेणैवेच्छाजनकत्वात् । अस्ति च दुःखदशायामप्यनावृत्तचैतन्यानन्दानुभवस्तादृशः । अहं नास्मीति कस्याप्यदर्शनात् । अहमनुभवसाक्षिचैतन्यस्यैव सुखत्वात् । अन्यथा प्रेमानुपपत्तेः । तदेतदाचार्यैरप्युक्तम् । "नासत एव परमप्रेमास्पदत्वलक्षणं सुखम्" इति ।

ननु यद्यात्मनि न सुखत्वं न तर्ह्यात्मा सुखम् । तस्यैव तत्स्वरूपलक्षणत्वादिति चेन्न । न हि सुखत्वं सुखस्य स्वरूपलक्षणम् । तस्य ततोऽन्यत्वात् । अन्यस्यान्यस्वरूपत्वायोगात् । असाधारणजातिरेव व्यक्तिस्वरूपमिति चेन्न । जात्यतिरिक्तव्यक्तिस्वरूपाभावे विश्वस्य सामान्यमात्रात्मत्वप्रसङ्गात् । निःस्वरूपस्य तद्व्यक्तित्वाभावात् सामान्यमपि न स्यात् । किं च सुखत्वाश्रयव्यक्तौ

दुःखादिव्यावृत्तौ विशेषोऽस्ति न वा? । न चेत्कथं सुखत्वव्यवस्था । व्यक्तिविशेषं विना सुखत्वमस्यैव धर्म इति नियन्तुमशक्यत्वात् । प्रथमेऽपि स विशेषो न धर्मः । तत्रापि व्यवस्थापकाभावात् । व्यक्तिस्वरूपातिरिक्तधर्मानिरूपणाच्च ।

इच्छायाः स्वविषयासाधारणस्वरूपनिश्चयजन्यत्वान्न विशिष्टज्ञानं तत्कारणम् । विशिष्टज्ञानस्यापि संशयस्याकरणत्वात् । सत्तानिश्चयरूपस्यैव तस्याकारणत्वं वाच्यम् । तथा च लाघवात्सत्तानिश्चय एव तत्कारणम् । स्वरूपसुखसत्तानिश्चयश्च स्वप्रकाशात्मचैतन्यमेवेत्याह-न सुखेति । दुःखदशायामपि स्वरूपसुखं भासत इत्यत्र विवरणाचार्यसंमतिमाह-तदेतदिति । परमप्रेमास्पदत्वं लक्षणं गमकं यस्य सुखस्य तत्तथोक्तम् ।

आत्मा न सुखरूपः । सुखत्वधर्मरहितत्वात् । घटवदिति शङ्कते-नन्विति । हेतोरप्रयोजकत्वं निराकरोति-तस्यैवेति । सुखत्वस्यैव सुखरूपतयाऽन्येभ्यो व्यावर्तकत्वादित्यर्थः । सुखत्वमेव सुखरूपमित्येतत्तावद् दूषयति-न हि सुखत्वमिति । अन्यस्यान्यस्वरूपत्वे घटादिना गगनकुसुमादिकमपि रूपवत्स्यादिति भावः । व्यक्तिस्वरूपमसाधारणजातिरेवेति नोक्तातिप्रसङ्ग इति शङ्कते-असाधारणेति । जातिरेवेत्येवकारेण जात्यतिरिक्तव्यक्तिस्वरूपनिषेधात्, द्रव्यगुणादिविभागो न स्यादिति दूषयति-न जातीति । निर्विशेषसामान्यायोगात् सामान्यपदार्थोऽपि न स्यादित्याह-निःस्वरूपस्येति ।

किंच किं सुखत्वं व्यक्तिविशेषे वर्त्तते उत व्यक्तिमात्रे इति विकल्प्य द्वितीये घटादावपि तत्स्यादित्यभिप्रेत्याह-किं चेति । आद्येऽपि व्यक्तेर्विशेषो धर्मः स्वरूपं वा ? । प्रथमेऽपि स जन्यो वा अजन्यो वा ? । नाद्य इत्याह-प्रथमेऽपीति । सुखस्य परमतेऽपि जन्यधर्मानाश्रयत्वादित्यर्थः । द्वितीयेऽपि स जातिरुपाधिर्वा ? नाद्य इत्याह-तत्रापीति । व्यक्तिस्वजन्यत्वादेः स्वरूपातिरिक्तस्य परमतेऽभावादित्यर्थः ।

आत्मातिरिक्तं सुखमेव नास्ति तत्र मानाभावात् कुतस्तस्य व्यतिस्वरूपत्वमितपभिप्रेत्याह-सुखानुगतेति ।

(सुखस्वरूपस्य विज्ञानातिरिक्तत्वम्) । सुखानुगतबुद्धेर्गोत्वादिविषयानुगतबुद्धेरिव स्वरूपमात्रविषयत्वेन वस्तुतोऽभावाच्च कल्पितभेदाश्रयजातेर्वास्तवसुखलक्षणत्वानुपपत्तेश्च । ततः सुखरूपमेव विशेषः । स एव तल्लक्षणम् । गोत्वादेरिव तत्स्वरूपम्। तच्च सुखस्वरूपं चैतन्यमेव। ततोऽतिरिक्तस्य सुखस्यानिरूपणात्, "विज्ञानमानन्दमिति" श्रुतेश्च विज्ञानातिरिक्तस्य दृश्यतया मिथ्यात्वाच्च न सुखं विज्ञानातिरिक्तम् । न चैवं ज्ञानानन्दपदयोः पर्यायत्वमेकार्थत्वादिति वाच्यम् । तत्तद्वृत्तिविशेषशबलस्य तदुपहितचैतन्यस्य वा ज्ञानानन्दपदवाच्यत्वात्तत्प्रवृत्तिनिमित्तभेदेनापर्यायत्वात् । प्रवृत्तिनिमित्तभेदेऽपि व्यक्त्यभेदेन पर्यायत्वे प्रमेयाभिधेयादि-

पदानामपि पर्यायत्वप्रसङ्गात्। न चैवमानन्दपद-लक्ष्यत्वादात्माऽनानन्दःस्यादिति वाच्यम्। क्षत्रिणः क्षत्रिपदलक्ष्यत्वेऽपि क्षत्रित्ववदनौपाधिकप्रीतिविषयतयाऽऽनन्दस्यैवात्मन आनन्दपदलक्ष्यत्वेनानन्दत्वानपायात्।

वास्तवसुखत्वजातेरभावेऽपि कल्पितजातिरेव सुखस्वरूपमित्यत्राह-कल्पितेति । कल्पितो भेदो यस्य सुखस्य तदाश्रयजातेरित्यर्थः । अनुपपत्तेश्चेति । चकारेण तत्कल्पनाऽप्यपार्था, अनुगतबुद्धेर्व्यक्तिविषयत्वेनैवोपपत्तेरिति सूचयति। तस्माद् व्यक्तेः स्वरूपमेव विशेष इति पक्षः परिशिष्यत इत्याह-तत इति । स्वरूपविशेष एवेतरावृत्तित्वे सति तस्येतरव्यावर्तक इत्याह-स एवेति । स्वरूपस्यैव स्वव्यावर्तकत्वे दृष्टान्तमाह-गोत्वादेरिवेति । आदिपदेन प्रमेयत्वादेः संग्रहः । न च गोत्वधर्मे गोत्वनैव तद्व्यावर्तिकेति वाच्यम्। गवितरावृत्तित्वे सति सकलगोवृत्तित्वलक्षणगोत्वतया गोतदितरज्ञानमन्तरेण दुर्ज्ञेयत्वेनान्योन्याश्रयतापत्तेरिति भावः । साधितसुखस्वरूपस्य पुरुषार्थत्वाय चैतन्याभेदमाह-तच्चेति । तदभेदेऽपि प्रमाणं नास्तीत्याशङ्क्याह-विज्ञानमिति । आत्मरूपसुखस्य दृश्यत्वायोगाच्च दृग्रूपत्वमित्याह-विज्ञानेति । ज्ञानानन्दयोरभेदे तत्पदयोः पर्यायत्वापत्त्या सहप्रयोगानुपपत्तिरित्याशङ्क्याह-न चैवमिति । यथा द्रव्यात्मकघटस्याद्रव्याघटात्मकद्रव्यत्वघटत्वविशिष्टतया द्रव्यघटपदवाच्यताभेदभ्रमनिरासाय द्रव्यं घट इति सहप्रयोगः । तथा ज्ञानात्मकानन्दस्यैवाज्ञानाऽनान-

न्दात्मकप्रामाणिकवैषयिकवृत्तिविशेषविशिष्टतया ज्ञानानन्दपदवाच्यताभेदभ्रमनिरासाय च सहप्रयोगः । यथा वा दिश एकत्वेऽप्यौपाधिकभेदेन प्राचीप्रतीच्यादिपदवाच्यता । एवमेकस्याप्यात्मन उक्तविशेषोपाधिप्रयुक्तभेदेन ज्ञानानन्दाद्यपर्यायपदवाच्यतेत्यर्थः । प्रवृत्तिनिमित्तभेदेनैवापर्य्यायत्वमित्येतद्विपक्षे बाधकप्रदर्शनेनोपपादयति-प्रवृत्तीति । ननु निर्विशेषात्मन्यानन्दपदशक्तेरभावात्तल्लक्ष्यता वाच्या । तथा च गङ्गापदलक्ष्यस्यागङ्गात्ववदानन्दपदलक्ष्यस्याप्यनानन्दत्वं स्यादित्यत आह-न चैवमिति । सत्यज्ञानादिपदानां गङ्गादिपदवज्जहल्लक्षणाऽनभ्युपगमाद्वाच्यार्थे ऽनृतजडाद्यात्मकविशेषणपरित्यागेन सच्चिदानन्दादिविशेष्यमात्रलक्षणयाऽखण्डार्थेऽपि पर्य्यवसानाभ्युपगमादात्मा सदादिरूप एवेत्यभिप्रेत्याह-लक्षणेति ।

हेतोरप्रयोजकत्वादिति प्रकरणमुपसंहरति तस्मादिति ।

(आत्मनः सुखस्वरूपोपसंहारः ।) तस्मादनौपाधिकप्रीतिविषयो यच्चैतन्यं तदेव सुखम् । तच्च दुःखानुभवदशायामपि प्रतीयते इति न तदा प्रेमानुपपत्तिः । एतेन 'यदि चैतन्यमेव सुखलक्षणं, तदा चैतन्यस्य परेणाप्यभ्युपगमात्तदतिरिक्तस्य सिद्धांतेऽप्यभावाच्चैतन्यं सुखमिति नाममात्रं, नार्थविशेषः' इति प्रत्युक्तम् । आत्मातिरिक्तं सुखमितिवदतामप्यनौपाधिकप्रीतिविषयत्वमेव तल्लक्षणम् । आत्माऽपि चेता-

दृशः । कथं नात्मा सुखं, कथं वा न परमताद्विशेषः ।

न चैवं सुखोत्पादविनाशानुभवविरोधः । आत्मनस्तदभावात्, "अहं सुखी"इति तस्यात्मधर्मत्वानुभवविरोधश्चेति वाच्यम् । तस्य सुखत्वविशिष्टवृत्तिविषयत्वात् । 'अहं सुखी'इति च स्वरूपसुखस्याहमर्थान्तःकरणसम्बन्धित्वमनुभूयते । अनित्यस्य सुखस्याभ्युपगमे मोक्षशास्त्राध्ययनविरहप्रसङ्गात् । जन्यस्य तदानीमशरीरावस्थायामसम्भवात् ।

ननु दुःखध्वंस एव मोक्ष इति चेन्न । मोक्षे आनन्दश्रुतिविरोधात् । वर्तमानदुःखस्य स्वत एव विनाशात् । अवर्तमानदुःखध्वंसस्याकाम्यमानत्वात् । न हि कश्चित् 'दुःखं मे भूत्वा विनश्यतु'इति कामयते । तस्योपादेयत्वानुपपत्तेः । मुमुक्षानन्तरं दुःखप्रागभावविरहादपि दुःखासम्भावनयाऽतिदुष्करब्रह्मलोकादिभोगवैराग्यपूर्वकं तद्ध्वंसोद्देशेन प्रवृत्त्ययोगात् । प्रागभावानामानंत्यात्कथमभाव इति चेत् तर्हि सुतरां मोक्षशास्त्रं नारभ्येत । प्रागभावानामवश्यं दुःखजनकत्वात् । तेषां चासंख्येयत्वात् ॥

चैतन्यातिरेकेण सुखस्याभावे सांख्यमतान्न विशेष

इत्याशङ्कामपवदति-एतेनेति । एतच्छब्दार्थमाह-आत्मेति । सांख्यसंमतसुखस्यैवात्मनो भेदनिराकरणात्ततो महान्विशेष इत्यर्थः । सुखस्यात्मरूपत्वे तस्यानित्यत्वगुणत्वानुभवविरोध इत्याशङ्क्याह-न चैवमिति । उत्पत्त्याद्यनुभवस्तावदन्यविषय इत्याह-तस्येति । अहं सुखीति सुखस्याहंकारसम्बन्धमात्रमनुभूयते । अहमसुखीतिवत्, न तु गुणत्वं तत्र । तदनुभवस्यौदासीन्यात् । सम्बन्धश्च सिद्धांतेऽप्यविरुद्ध इत्यभिप्रेत्याह-अहं सुखीति । सुखानित्यत्वमते किं मोक्षे सुखमेव प्रयोजकमुत दुःखध्वंसः ? । नाद्य इत्याह-अनित्यस्येति ।

द्वितीयं शङ्कते-नन्विति । "योऽश्नुते सर्वान् कामान् सच्चिदानन्दमात्रः स स्वराड् भवति"इत्यादिश्रुतिभिः परमानन्दप्राप्तेर्ज्ञानफलत्वाभिधानात् नैवमित्याह-न मोक्ष इति । किं वर्तमानध्वंसो मुमुक्षवभिलषित उतागामिदुःखविध्वंसः ? । उभयथाऽप्यनुपपत्तिरित्याह-वर्त्तमानेति । किं च किमेकैकजीवे दुःखप्राभावाः परिमिताः, उतापरिमिताः ? । आद्ये भाविदुःखध्वंसनिश्चयायोगात्तदुद्देशेन निःशङ्कप्रवृत्त्यनुपपत्तिरित्याह-मुमुक्षानन्तरमिति । अतिदुष्करत्वं वैराग्यविशेषणम् । द्वितीयं शङ्कते-प्रागभावानामिति । अस्मिन् पक्षे दुःखप्रागभावानां कदाप्यसमाप्तेर्न चरमदुःखध्वंसः संभवतीत्याह-तर्हीति ।

संख्यातोऽपरिमिताः स्वरूपतस्तु परिमिता एवेति शङ्कते-कथं चिदिति ।

**कथं चित्परिमिताश्चेत् । न, मुमुक्षानन्तरं तत्सत्त्वनिर्णयः । विनापि तत्त्वज्ञानं मोक्ष-**

प्रसङ्गाच्च । ननु मोक्षशास्त्राद्यन्यथानुपपत्त्यैव भावि दुःखं, तस्य ज्ञानैकनिवर्त्त्यत्वं च निश्चीयत इति चेन्न । तस्यान्यथैवोपपत्तेः । "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिशास्त्रानुरोधेन तत्प्रतिबन्धकस्यैव ज्ञानान्निवृत्तिः । "तरति शोकमात्मवित्" इति फलवचनार्थो न तु त्वदभिमतदुःखनिवृत्तिः । अन्यथा फलद्वयकल्पनागौरवात् । विरोधिगुणमात्रनाश्यस्य दुःखस्य तत्त्वज्ञानापेक्षायोगाच्च । अस्ति चात्र स्वविषयसाक्षात्कारो दुःखस्य विरोधी गुणः । दुःखस्य स्वसत्ताकालीनप्रत्यक्षविषयत्वनियमात् । अत एव दुःखस्थितिकाले तत्त्वज्ञानासम्भवान्न तस्य तन्निवर्त्यत्वम् । न च दुःखविषयसाक्षात्कार एव सर्वविषयतया तत्त्वसाक्षात्कार इति वाच्यम् । एवमपि विरोधिगुणत्वेनैव तस्य नाशकत्वात् । "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां, तथा मनुष्याणाम्" इति योग्ययोगिसाधारणमुक्तिश्रुतिविरोधाच्च ।

तर्ह्यनादिकालमारभ्य क्षीयमाणानामेतावता कालेन परिसमाप्तिसम्भावितदुःखाभावेन चरमध्वंसस्याप्ययत्नलभ्यत्वसम्भावनोपपत्तेर्न निःशङ्कप्रवृत्तिरित्याह-न मुमुक्षेति । प्रागभावसमाप्तावप्यसमाप्तत्वभ्रान्त्या प्रवृत्तिरित्याशङ्क्य तथापि तत्त्वज्ञानं व्यर्थमित्याह

विनापीति । मुमुक्षानन्तरं भाविदुःखाभावे तस्य ज्ञानैकनिवर्त्यत्वाभावे च मोक्षशास्त्रमनर्थकं स्यादतो भाविदुःखादिकमस्तीति निश्चयपूर्विका मुमुक्षुप्रवृत्तिरुपपद्यत इति चोदयति नन्विति । मोक्षशास्त्रस्य परमानन्दप्रापकत्वेनान्यथोपपत्तेर्नैवमित्याह-न तस्येति । ननु तरति शोकमात्मविदिति दुःखध्वंसस्यैव ज्ञानाधीनता श्रूयते इत्यत्राह-ब्रह्म वेदेति । आदिपदेन "तरत्यविद्यां विततास्"इत्यादि गृह्यते । तत्प्रतिबन्धकस्येति अनर्थपारंपर्य्यप्रदर्शनेन स्वाभाविकब्रह्मभावतिरोधायकाज्ञानस्येत्यर्थः । कारणान्तरादपि शोकनिवृत्तेः सम्भववान्न तत्त्वज्ञानस्य तत्फलमित्याह-विरोधीति । तत्त्वज्ञानमेव विरोधिगुणतया निवर्तकमित्याशङ्क्याह-अस्ति चेति। दुःखस्थितिकाले तद्विषयसाक्षात्कारस्यावश्यंभावित्वादेव तदा द्वितीयस्य तत्त्वज्ञानस्यायोगान्न तस्य निवर्तकमित्याशङ्क्याह-अत एवेति । तत्त्वज्ञानस्यैव दुःखविषयत्वे संभवति पृथग्दुःखज्ञानाभावात्तत्त्वज्ञानमेव तन्निवर्त्तकमित्याशङ्क्याह-न च दुःखेति । "तमेव विदित्वा ऽतिमृत्युमेति"इत्यादिशास्त्रादात्ममात्रज्ञानमेव तत्त्वज्ञानम्, तन्न दुःखविषयमिति भावः । अङ्गीकृत्याप्याह-एवमपीति । तथा च तत्त्वज्ञानं विनापि तन्नाशः स्यादित्यर्थः । ननु योगजधर्मसामर्थ्यात्सार्वज्ञ्ये सति पुण्यपापदुःखप्रागभावादीनां परिच्छेदसम्भवात्कायव्यूहपरिग्रहेण सर्वदुःखप्रागभावक्षये चरमदुःखध्वंससिद्धिरिति चेन्न । एतस्य मतस्य श्रुतिस्मृतिबाह्यत्वात्तद्विरुद्धत्वाच्चेत्यभिप्रेत्याह-तद्यो य इति । तद् ब्रह्म देवानां मध्ये यो यः प्रत्यबुद्ध्यत स एव तद्

ब्रह्माभवत् । तथा ऋषीणां मध्ये, तथा मनुष्याणां च मध्ये यो यः प्रत्यबुद्ध्यत स एव तदभवदिति योगिनामयोगिनां चाज्ञानतिरोहितब्रह्मभावस्य तज्ज्ञानमात्रप्राप्यताभिधानविरोधादित्यर्थः ।

दुःखध्वंसस्यापुरुषार्थत्वादनित्यसुखस्य च मोक्षेऽसंभवान्नित्यमेव सुखं मुमुक्ष्वभिलषितमित्युपसंहरति तस्मादिति ।

तस्मान्न दुःखध्वंसार्थं मुमुक्षुप्रवृत्तिरिति नित्यमेव सुखम् । अत उत्पादविनाशानुभवोऽन्यविषयः । अत एव नासाधारण्यम् । वैषयिकसुखस्यात्मातिरिक्तस्याभावात् ।

सुखस्य नित्यत्वमुपसंहृत्य सुखविशेषाननुभवेन तद्भेदशङ्का

नन्वेवमोत्मन्युदासीनदशायामिव विषयसंबन्धदशायामपि विशेषो नानुभूयेत । आत्मन एकरूपत्वात् । न च सुखाकारान्तःकरणवृत्तिस्तदा विशेष इति वाच्यम् । ज्ञेयातिशयं विना ज्ञानमात्रस्याविशेषत्वात् । अथ वृत्त्या सुखाभिव्यक्तिर्विशेष इति चेन्न । सुखस्यात्मनः स्वप्रकाशचैतन्यतया सदाभिव्यक्तत्वात् । इतरथाऽन्यदापि तन्मात्रत्वात्सुखं न प्रकाशेत । न च वृत्त्या सुखावरणतिरोधानमिति वाच्यम् । सुखस्यानावृतत्वात् । तस्य प्रतीयमानत्वनियमात् । अन्यथा तन्मात्रचैतन्यमप्यावृतं स्यात् । तयोर्भेदो वा स्यात् । एकत्रैकदा विरुद्ध-

धर्मद्वयानुपपत्तेः ।

सुखनित्यत्वसाधनफलमाह-अत इति । अन्यविषय इति । अवच्छेदकवृत्तिविषय इत्यर्थः । आत्मातिरिक्तसुखाभावे कदाचित्सुखविशेषानुभवानुपपत्तिरिति शङ्कते-नन्वेवमिति । विषयदशायां स्वतो विशेषाभावेऽपि स्वविषयवृत्तेरहमाकारवृत्त्यपेक्षया विशेषो न स्यादित्याह-चेयेति । अदृष्टविशेषजन्यवृत्तौ सत्यामेवानन्दाभिव्यक्तेः कदाचिदभिव्यक्तिरेव तत्र विशेष इति शङ्कते-अथेति । सुखाभिव्यक्तेरप्यात्मस्वरूपतया सदातनत्वेन कादाचित्कत्वायोगादित्याह-न सुखस्येति । आत्मरूपसुखस्य स्वप्रकाशत्वानङ्गीकारे बाधकमाह-इतरथेति । तन्मात्रत्वात् स्वप्रकाशात्ममात्रत्वादात्मातिरिक्तप्रकाशस्याप्यभावादित्यर्थः । स्वप्रकाशरूपमपि सुखं पूर्वमावृतं वृत्तिविशेषे सत्यभिव्यज्यते इत्याशङ्क्याह-न च वृत्त्येति । सुखस्याभिव्यक्तसत्ताकत्वादावरणायोगादिति हेत्वर्थः । विपक्षे दण्डमाह-अन्यथेति । चैतन्यस्यावृतत्वे तद्रूपात्मनि कदाचित्संशयादि स्यादित्यत आह-तयोरिति । चैतन्यसुखयोरित्यर्थः । आवरणानावरणरूपविरुद्धधर्मद्वयस्य धर्मिभेदं विनाऽनुपपत्तेरित्याह-एकत्रेति ॥ ८५ ॥

एकस्मिन्नपि शुक्तिशकले ज्ञातत्वाज्ञातत्वदर्शनान्न धर्मिभेदापेक्षेति शङ्कते नन्विति ।

नन्वावृतत्वानावृतत्वयोर्धर्मभेद एव प्रयोजको, न तु धर्मिभेदोऽपीति चेन्न । सुखैकरसे भवदभिमतात्मनि धर्मभेदे प्रमाणाभावात् । ज्ञा-

नत्वादीनां वृत्तिप्रतिबिम्बितात्मधर्मत्वेन केवलात्मन्यसत्त्वात् । सुखाकारान्तःकरणवृत्तेरविद्यानिवर्त्तकत्वाभावाच्च । न च विषयसम्बन्धदशायां सुखविशेष एव नेति वाच्यम् । अनुभवविरोधात्, विषयानुपादानप्रसङ्गाच्च इति चेत् ।

(सुखात्मनोर्भेद-शङ्कासमाधिः ।) तत्र किं सुखस्यावृतत्वाच्चैतन्याद् भेदः प्रतिपिपादयिषितः, किं वा चैतन्यस्यावरणमाहोस्वित्सुखस्यानावरणम् ? । न सर्वथापि । 'नास्ति' 'न प्रकाशत' इति व्यवहारयोग्यत्वं ह्यात्मन आवृतत्वं, तदभावोऽनावृतत्वम् । ततश्चैकस्मिन्नप्यानन्दो नास्ति, न प्रकाशते इति व्यवहारानुभवात् तद्योग्यत्वमस्तीत्यानन्दरूपेणावृतत्वम् । अहमर्थरूपं चैतन्यं नास्ति, न प्रकाशते इति व्यवहारानुभवाभावेन न तद्योग्यतेति चैतन्यरूपेणानावृतत्वम् । एकार्थकव्यवहारभेदश्च वाच्यभेदादुपपन्नः । तस्मादेकमेव निरंशं निरतिशयानन्दैकरसं चैतन्यमावृतमनावृतं चेत्युपपद्यते । उभयस्याप्यनुभवादविरोधाच्चेति ।

अज्ञानं चाज्ञानान्तःकरणाप्रत्यक्षधर्मावच्छिन्नचैतन्यातिरिक्तचैतन्यावरणस्वभावम् । उक्तेषु स्वसत्तायामज्ञानावरणकार्यस्य तत्सत्ताप्रकारकसंशयादेरभावात् ।

दृष्टान्तवैषम्येण परिहरति-न सुखैकरस इति । एकरसेऽप्यात्मन्यवास्तवा ज्ञानत्वादिधर्माः सन्तीत्याशङ्क्य तेषामप्यावरणपूर्वकवृत्तितादात्म्याध्यासद्वाराऽऽत्मधर्मत्वात्केवलात्मन्यावरणस्यैवायोगादित्यभिप्रेत्याह-ज्ञानत्वादीनामिति । अङ्गीकृत्याप्यावरणसुखाकारवृत्तेस्तन्निवर्त्तकत्वं दूषयति-सुखाकारेति । प्रामाणिकसाक्षात्कारस्यैव तन्निवर्तकत्वादिति भावः । कालविशेषे सुखविशेषानुभवो नास्तीत्याशङ्क्याह-न चेति । उक्तानुपपत्तिपरिहाराय पूर्वपक्ष्याशयं विकल्पयति-तत्र किमिति । चैतन्यानावृतत्वादिति शेषः । चैतन्यस्येति । आवृतत्वं सुखाभेदादित्यर्थः । सुखेति । अनावृतचैतन्यभेदादित्यर्थः । ज्ञानानन्दपदयोर्वाच्यभेदेनापर्यायत्वाभिधानात्तद्घटितचिदानन्दादिव्यवहारोऽपि भिद्यते । तथा चैकव्यवहारयोग्यस्यापीतरव्यवहारयोग्यत्वसंभवात्तदात्मकावरणानावरणयोरेकत्राप्युपपत्तेर्न कोऽपि पक्षः साधयितुं शक्यते इत्यभिप्रेत्याह-न सर्वथेति । एकस्मिन्नपीति । ज्ञानानन्दयोरभेदेऽपीत्यर्थः । अहमर्थरूपचैतन्यमिति । अहमर्थोऽहङ्कारो रूप्यते दृश्यतेऽनेनेति तत्प्रकाशरूपसाक्षिचैतन्यमित्यर्थः । उदासीनदशायामात्मनः सुखरूपेणावृतत्वं चिद्रूपेणानावृतत्वमिति सुखविशेषाननुभवादिरुपपद्यते इत्युपसंहरति-तस्मादिति । चन्दनादिविषयसंपर्कदशायां सुखाकारवृत्तेरावरणाभिभावकत्वं वक्तुमज्ञानस्य न कृत्स्नचैतन्यावरकत्वमित्याह-अज्ञानं चेति । धर्माद्यवच्छिन्नचैतन्यस्यावृतत्वात्प्रत्यक्षेत्युक्तम् । अज्ञानाद्यवच्छिन्नचैतन्येष्वावरणकल्पकस्य तत्कार्यस्याभावादिति । हेतुमाह-उक्तेष्विति । अज्ञा-

नादौ भावत्वादिप्रकारकसंशयादिभावेऽपि विद्यमानत्वप्रकारकः स नास्तीत्याह-तत्सत्तेति ।

अज्ञानस्य कृत्स्नचैतन्यावरकत्वस्वभाव एव किं न स्यादित्यत आह-अनुभवेति ।

(सुखात्मनोरैक्येऽपि सुखविशेषानुभवोपपादनम्) अनुभवानुरोधित्वात्पदार्थस्वभावकल्पनायाः । ततश्च तत्तद्विषयसंबन्धोत्थतत्तद्वृत्तिकवलीकृतमानन्दं विहायैवाज्ञानमानन्दमावृणोतीति तदा सुखविशेषानुभवः सङ्गच्छते । अयमेव वृत्तेरावरणाभिभवः । कारणकृतवृत्तिविशेषतारतम्याच्चावरणाभिभवतारतम्यमिति वैषयिकसुखतारतम्यं चोपपद्यते । अथ वा चिन्मात्राश्रयादज्ञानादनादिचिदानन्दभेदाध्यासादज्ञानमानन्दमावृणोति, न चैतन्यमिति व्यवस्था । अन्तःकरणवृत्त्या च विषयजन्यया ऽऽनन्दस्य चैतन्याभेदापादनाद्विषयदशायां सुखविशेषानुभवः । एतेनाविद्यावरणेनाप्यानन्दप्रकाशस्यानपायान्मुक्तिसंसारयोरविशेष एवानन्दप्रकाशः स्यादिति मुक्त्यर्थिप्रवृत्तिर्न स्यादिति निरस्तम् । इदानीं स्फुरतोऽप्यानन्दस्य 'नास्ति' 'न प्रकाशते' इति व्यवहारयोग्यताप्रतियोगितया 'अस्ति' 'प्रकाशते' इति व्यवहारयोग्यत्वाभावेन वा नष्टस्वीयसुखवदाविद्यकभेदप्रतियोगितया वा पुरुषा-

न्तरसुखवदिच्छाविरोधितालक्षणतृप्तिरूपताभावात्। मुक्तौ तदभावेनेच्छाविरोधित्वादिदानीं मुक्त्यर्थिप्रवृत्त्युपपत्तेः। एतेन वन्हौ गुञ्जाद्यारोपेऽपि वन्ह्युचितदाहादिवदात्मानन्दप्रकाशेऽप्रकाशमानत्वारोपेऽपि तदुचितं कार्यं स्यादिति प्रत्युक्तम् ।

एवमज्ञानस्वभावे सति चन्दनादिविषयसंसर्गजनितवृत्तौ सत्यां तदवच्छिन्नसुखात्मकचैतन्यमनावृतं स्पष्टमनुभूयते इत्याह- ततश्चेति । वृत्तौ सत्यां तदवच्छिन्ने चैतन्ये आवरणसंबन्धो नेत्ययमेव वृत्ते र्निमित्तादावरणाभिभव इति वृद्धवचनार्थ इत्याह-अयमेवेति । ननु वृत्तेरावरणाभिभवमात्र एवोपक्षीणत्वात्कथं वैषयिकसुखे तारतम्यमित्यत्राह-कारणेति । उद्भूतसत्त्ववृत्तेरेवावरणाभिभावकत्वात्सत्त्वोद्भवस्य चोद्भावकविषयतारतम्याधीनतरतमभूतत्वात्तदधीनसुखाभिव्यक्तितारतम्योपपत्तिरिति भावः। ज्ञानानन्दयोर्वास्तवाभेदेऽपि जीवेश्वरवत्कल्पितभेदेनावरणानावरणयोः संभवाच्चैतन्याभिव्यक्तावप्यानन्दानभिव्यक्तिर्घटते इत्याह-अथवेति । विषयभोगदशायां कथं तर्ह्यानन्दानुभव इत्यत आह-अन्तः करणेति । स्वस्य स्वाकारवृत्तिद्वाराऽनावृतसाक्षिचैतन्याभेदे संविदभेदादापरोक्ष्यमित्यर्थः। सुखस्वरूपस्यावृतत्वेऽपि तत्स्वरूपभूतः प्रकाशोऽस्त्येव । तथापि तस्येदानीमपुरुषार्थत्ववन्मुक्तावप्यपुरुषार्थत्वं स्यादित्याशङ्क्याह-एतेनेति । एतच्छब्दार्थमेवाह-इदानीमिति । वस्तुतः स्वरूपतया स्फुरतोऽप्यानन्दस्याप्राप्तत्वभ्रान्त्या

तत्प्राप्तिकामनापूर्विका प्रवृत्तिरुपपद्यते इत्यर्थः । अप्राप्तत्वभ्रमे हेतुत्रयमाह-नास्तीत्यादि । आनन्दरूपत्वमिति कर्तृनिर्देशोऽध्याहर्त्तव्यः । हेतुद्वयेनाप्यप्राप्तप्रतीतावुदाहरणमाह-नष्टेति । तृतीयमपि हेतुं सोदाहरणमाह-आविद्यकेति । तदभावेनेति । अज्ञानभ्रान्त्यादेरभावेनेत्यर्थः । एतेनेति । स्पष्टोऽर्थः ।

आनन्दप्रकाशकार्यमापाद्यमानं षोढा विकल्पयति-किं तदिति ।

(आनन्दोचितकार्यैर्विकल्पनिश्चयपूर्वकं सुखरूपत्वेऽपुरुषार्थत्वशङ्कानिरसनम् ।)

किं तदुचितकार्यमविद्यानिवृत्तिः, उत नास्तीत्यादिव्यवहारविच्छेदः, किं वाऽहमनतिशयानन्द इति व्यवहारः, किं वा सुखेच्छया विषयानन्वेषणम्, अथवाऽऽत्मनि प्रेम, किं वा तृप्तिः? । नाद्यद्वितीयौ । स्वरूपस्फुरणस्याविद्यातत्कार्याविरोधित्वात् । न तृतीयः । अविद्यावरणेन प्रतिबद्धत्वात् । न चतुर्थः । स्वरूपस्य नास्तीत्यादिव्यवहारयोग्यताप्रतियोगित्वेन पुत्रादेश्च सुखजनकत्वभ्रमेण तदुपपत्तेः । पञ्चमस्त्विष्यते । षष्ठे तूक्त एव परिहारः । दहनादेस्तु स्वरूपसत एव दाहहेतुत्वाद्वैषम्यम् ।

यत्तूक्तं सुखस्यात्मत्वेऽपुरुषार्थत्वप्रसङ्ग इति । तन्न । न तावदात्मस्वरूपं सुखमसुखं भवति । न च सुखमप्यात्मनोऽनन्यत्वादपुरुषार्थः ।

भेदस्य तत्समवायस्य वा सुखतत्साधनान्यतरान्तर्भूतस्याकाम्यतया पुरुषार्थत्वायोगात् । न चैवमात्मस्वरूपं सुखमपि कामनाविरहादपुरुषार्थः । "सदाऽहंभूयासम्"इति कामानाया एव स्वरूपसुखविषयत्वात् । न च "सुखं मे भूयात्"इति भेदादायुषि कामना दृश्यते इति वाच्यम् । कामनायाः सुखतत्साधनान्यतरभेदादिविषयत्वांशे बाधिततया सुखमात्रविषयत्वात् ।

साक्षिज्ञानस्याविद्यासाधकत्वात्तया तत्कार्य्यरूपेण नास्तीत्यादि व्यवहारेण चाविरोधान्नाद्यावित्याह-नाद्यद्वितीयाविति । अहमनतिशयानन्द इति व्यवहारो विपरीतव्यवहारयोग्यतालक्षणप्रतिबन्धान्न भवतीत्याह-न तृतीय इति । नित्यप्राप्तेऽपि सुखेऽप्राप्तत्वसाधनपारतन्त्र्यादिभ्रमात्तत्साधनगवेषणेत्याह-न चतुर्थेति । अहं भूयासमित्यात्मनि प्रेमास्त्येवेत्याह-पञ्चमस्त्विति । पूर्वोक्तहेतुत्रयाधीनाप्राप्तत्वभ्रमादेव तृप्तिर्नास्तीत्याह-षष्ठइति । वन्हाववह्नित्वारोपस्य तत्सत्ताप्रयुक्तकार्याप्रतिबन्धकत्वाद्वैषम्यमित्याह-दहनादेरिति ।

चोद्यान्तरं दूषयितुमनुवदति-यत्तूक्तमिति । किं सुखस्यात्मरूपत्वेऽसुखत्वापत्त्याऽपुरुषार्थत्वमुतात्मीयत्वाभावात् ? । नाद्यः । तस्यैव सुखत्वेन साधितत्वादित्यभिप्रेत्याह-न तावदिति । द्वितीयं दूषयति-न चेति । स्वतन्त्रकामनागोचरस्यैव पुरुषार्थत्वात्कामनायाश्च सुखतत्साधनान्यतरविषयत्वाद्भेदसमवाययोश्च तदन्य

तरत्वाभावादित्यर्थः । तर्ह्यात्माभिन्नसुखस्यापि काम नाऽभावादपुरुषार्थतेत्याशङ्क्याह-न चैवमिति । ननु सुखकामनाया भेदादिविषयत्वस्याप्यनुभवादात्मभिन्नमेव सुखं पुरुषार्थ इति चेन्न । तव मते भेदादेः सिद्धत्वेनानुपादेयत्वादकारणत्वाच्च कामनायास्तद्विषयत्वायोगात्तदनुभवो भ्रम इत्यभिप्रेत्याह-न च सुखमिति ।

कामनाया अयोग्यविषयत्वेनाप्यनुभवे निदर्शनमाह-अहमिति ।

"अहं स्वर्गी स्याम्"इति कामनाया इव "मम सुखं भूयात्"इत्यादिकामनाया अहमनुभवगोचरातिरिक्तात्मस्वरूपसुखविषयत्वाच्च । न च सुखमात्रस्य पुरुषार्थत्वे पुरुषान्तरसुखमपि तथा किं न स्यादिति वाच्यम् । सुखद्वयाभावात् । पुरुषान्तरीयत्वस्य चापुरुषार्थत्वात् । नन्वात्मा सुखरूप इत्यत्र न 'सुखत्वाश्रय'इति प्रतिज्ञार्थः । केवले आत्मनि तदभावात् । अत एव न सुखत्वविशिष्टाभिन्न इत्यर्थः । केवलस्य सुखस्य सुखत्वविशिष्टाभेदे केवलेऽपि तत्प्रसङ्गात् । नापि दुःखान्यत्वं साध्यं सिद्धसाधनत्वात् । नापि दुःखविरोधित्वम् । दुःखात्यन्ताभावत्वेनार्थान्तरत्वात्; इति चेन्न । निरवयवसुखपदवाच्याभेदस्य परमप्रेमास्पदताप्रयोजकरूपाभेदस्य वा साध्यत्वात् । न च बाधः । सुखव्यक्तेरात्मनश्च भेदमिथ्यात्व-

स्याप्यनेनैव सिद्धेः ॥

स्वर्गी स्यामिति कामनायास्तद्योग्याहमर्थविषयत्वानुभवत्वमित्यर्थः । किं चाहमर्थातिरिक्तसुखकामना न सिद्धान्तेऽपि विरुद्धा । आत्मरूपसुखस्य तद्भेदाङ्गीकारादित्याह-ममेति । सुखात्मसंबन्धस्यापुरुषार्थत्वेऽतिप्रसङ्गः स्यादित्याशङ्क्याह-न च सुखमात्रस्येति । किं पुरुषान्तरसुखं स्वरूपेण पुरुषार्थः स्यादित्युच्यते, किं वा पुरुषान्तरीयत्वाकारेण ? । आद्ये इष्टापत्तिरित्यभिप्रेत्याह-सुखदृशेति । द्वितीयं दूषयति-पुरुषान्तरीयत्वेति । आत्मा सुखरूपः निरुपाधिकप्रेमगोचरत्वादित्यनुमाने प्रकारान्तरेण साध्यानुपपत्तिमाशङ्कते-नन्विति । केवलात्मनीति । निर्विशेषात्मनि सुखत्वधर्माभावादित्यर्थः । अत एव-केवलत्वादेवेत्यर्थः । सुखत्वविशिष्टाभेदेऽपि केवलः किं न स्यादित्याशङ्क्याह-केवलस्येति । विवक्षितसाध्येनोक्तदोष इत्याह-न निरवयवेति । निरवयवं यत् सुखपदवाच्यं तत्प्रतियोगिकभेदाभावस्येत्यर्थः । अत्र सिद्धान्ते सावयववृत्तेरपि सुखपदवाच्यत्वात्तद्भेदसाधने बाध इति निरवयवेत्युक्तम् । वस्तुतस्त्वेतद्विशेषणं विनापि बाधितसुखपदवाच्यांशं विहायाबाधितस्वरूपसुखभेदाभावमादाय साध्यं सिध्यति । तथा च न बाधपरिहाराय विशेषणं, किं तु सुखपदवाच्यवृत्तिभेदस्य साध्यव्यतिरेकस्यात्मनि सत्त्वेऽपि हेतुव्यतिरेकाभावात् तत्र व्यतिरेकव्यभिचारपरिहाराय । न च निरवयवसुखपदवाच्यसुखत्वभेदोऽप्यात्मन्यस्तीति व्यतिरेकव्यभिचारस्तदवस्थ इति वाच्यम् । वृत्तिविशेषानुगतात्मस्वरूपसुखस्यैव

ण्वु तृच् इत्येतौ त्यौ भवतः । कारकः । कर्ता भोजकः । भोक्ता ॥

नन्दिग्रहिपचिभ्यो ल्युणिन्यचः ॥ १०६ ॥

नन्द्यादिभ्यः ग्रहादिभ्यो पचादिभ्यश्च यथासंख्यं ल्यु णिन् अच् इत्येते त्या भवन्ति । नन्दयतीति नन्दनः । लकारः युवोरनाकाविति सामान्यग्रहणाविघातार्थः । नन्दि वाशिमदिनर्दिभूषिसाधिशोभिवर्द्धिभ्यो ण्यन्तेभ्यः संज्ञायां सहितपिदमिज्वलिरुचिजल्पिदृपिरसिसङ्क्रन्दिसङ्कर्षिभ्यः संज्ञायामण्यन्तेभ्यः । जनार्दनः । मधुसूदनः । लवण इति निपातनाण्णत्वम् । विभीषणः । पवनः । चित्तनाशनः । कुलदमन एतावणोऽपवादौ इति नन्द्यादिः । ग्रह उत्सह उद्दास स्था. उद्भास मन्त्र संमर्द निरक्षी निश्रावी निवार्थ निवेशी एतेभ्यः निपूर्वेभ्यः । अयाची अव्याहारी असंव्याहारी अवादी अव्राजी अवासी एतेभ्यः प्रतिषिद्धेभ्यः । अचामचित्तकर्तृकाणां प्रतिषिद्धानामिति वर्तते । अकारी अहारी अविनायी विषयीशब्दौ देशे अग्रिभावी निपातनात्प्रविभावी भूते भवतः अपराधी उपरोधी परिभवी परिभावी इति ग्रहादिः । पच पठ वच वद् चल पत तथा चरिचलिपतिवदीनामच्यात्कस्येति वक्ष्यते । नदट् प्लवट् तरट् चरट् चोरट् चेलट् हट देवट् टित्करणं स्त्रियां यर्थम् । जर मर क्षरं सेच मेष कोष दर्भ सर्प नर्त प्रण दर अपि विषयेपि श्वपच चक्रधर पचादिराकृतिगणः ॥

ज्ञाकृप्रीगुडः कः ॥ १०७ ॥

ज्ञा कृ प्री इत्येतेभ्यः इगुडश्च धोः को भवति । जानातीति ज्ञः । आकारान्तलक्षणो णः प्राप्तः । इह अर्थं जाना-

तीति अर्थज्ञः । परत्वादातः के सति नित्यः सविधिः । उत्किरतीति उत्किरः । विकिरः । प्रिणातीति प्रियः । इगुङः । विक्षिपः । विबुधः । विनूः इह काष्ठभेदः इति परत्वादण् ।

## आतो गौ ॥ १०८ ॥

आकारान्ताड्डोः को भवति गौ वाचि । णापवादोऽयम् । प्रस्थः । सुग्लः । इह वडवासन्दाय इति परत्वादण् ॥

## पाघ्राध्माधेट्दृशः शः ॥ १०६ ॥

गाविति वर्तते । पादिभ्यः शो भवति । पा इति साहचर्यादलाक्षणिकत्वाच्च पिबतेर्ग्रहणम् । उत्पिबः । विपिबः । उज्जिघ्रः । विजिघ्रः । संज्ञायां तु व्याघ्रैकपमेये तद्योग इति निर्देशात् कः । व्याघ्रः । उद्धमः । विधमः । उद्धयः । विधयः । उत्पश्यः । विपश्यः । गाविति केचिदिह नाभिसम्बध्नन्ति । तेन । पश्यतीति पश्यः । जिघ्रः ॥

## लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यो ऽगेः ॥ ११० ॥

लिम्प विन्द धारि पारि वेदि उदेजि चेति साहि इत्येतेभ्यः अगिपूर्वेभ्यः शो भवति । लिम्पतीति लिम्पः । कथं कुड्यलेप इति मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरानिति इगुङः कस्यायं शो बाधको नाणः । विन्दतीति विन्दः । लिम्प विन्द इति सानुषङ्गनिर्देशादन्यत्राप्ययं विधिर्भवति । संज्ञायां गावपि । निलिम्पा नाम देवाः । अरविन्दम् । गोविन्दः । इति अगुविषयेऽपि सः सिद्धः । धारयतीति धारयः । पारयः । वेदयः । उदेजयः । निर्देशा-

देव णिपूर्वस्य ग्रहणम् । चेतयः । सातं करोतीति णिच सातयः । साहयः । आद्याभ्यां के इतरेभ्योऽचि प्राप्ते वचनम् ॥

दाञ्धाञोर्वा ॥ १११ ॥

कार्थे ताविभक्ती । दाञ् धाञ् इत्येताभ्यां अणिपूर्वाभ्यां वा शो भवति । ददः । दधः । दायः । धायः । अणावित्येव । प्रदः । प्रधः । अनुबन्धनिर्देशो यङ्लुवन्तयो शो मा भूदित्येवमर्थः ॥

ज्वलितिकसन्ताराणः ॥ ११२ ॥

इति आद्यर्थे अविभक्तिकश्च निर्देशः । ज्वलादिभ्यः कस गतौ इत्येवमन्तेभ्यः वा णो भवति । ज्वालः । ज्वलः । कासः । कसः । चालः । चलः । अणावित्येव । प्रज्वालः ॥

श्याद्व्यधास्रुसंस्रुलिहश्लिषश्वसतीणः ॥ ११३ ॥

श्यैङ् आकारान्त व्यध आस्रु संस्रु लिह श्लिष श्वस अतीण् इत्येतेभ्यो णो भवति । वेति निवृत्तं अणाविति च । अवश्यायः । आदिति सिद्धे पुनः श्यग्रहणं आतोणावित्यस्य बाधनार्थः । आत् । दायः । धायः । व्याधः । आस्रावः । संस्रावः । लेहः । श्लेषः । श्वासः । अवादिभ्यस्तनेरिति वक्तव्यम् । अवतनोतीत्यवतानः ॥

हृसोऽवे ॥ ११४ ॥

हृ सा इत्येताभ्यां अवपूर्वाभ्यां णो भवति । अवहारः । अवसायः ॥

दुन्योरणौ ॥ ११५ ॥

दुनी इत्येताभ्यां णो भवति । दुनोतीति दावः । नायः । अणाविति किम् । प्रदः । प्रणयः ॥

विभाषा ग्रहः ॥ ११६ ॥

ग्रहेर्विभाषया णो भवति । ग्राहः । ग्रहः । व्यवस्थितविभाषेयम् । जलचरे ग्राह एव । ज्योतिषि ग्रह एव । विभाषेति योगविभागात् भवतीति भावः ॥

गेहे कः ॥ ११७ ॥

ग्रहेर्गेहेऽभिधेये को भवति । गेहं सद्म तात्स्थ्याद्दारा अपि गृहं गृहाः ॥

शिल्पिनि वुः ॥ ११८ ॥

शिल्पिन्यभिधेये वु भवति धोः । नर्त्तकः । खनकः । रजकः । रजकरजनरजसां नखं वक्ष्यति । एत एव धवः प्रयोजयन्तीति केचित् ॥

गो यथुथकौ ॥ ११९ ॥

गायतेण्युं थक इत्येतौ त्यौ भवतः । शिल्पिनीति वर्तते । गायनः । गाथकः ।

हायनः ॥ १२० ॥

हायन इति निपात्यते व्रीहिकालयोः कर्त्रोः । जहात्युदकमिति हायना नाम व्रीहयः । जहाति सद्वृताः क्रियाः हायनः संवत्सरः ॥

प्रुसृल्वः साधुकारिणि वुन् ॥ १२१ ॥

प्रु सृ लू इत्येतेभ्यः धुभ्यः साधुकारिणि कर्तरि वुन् भवति । साधु प्रवते यः स प्रवकः । एवं सरकः । लवकः । साधुकारिणीति किम् । प्रवः ॥

आशिषि ॥ १२२ ॥

आशिषि वार्थे वुन् भवति धोः । जीवतादिति य उच्यते स जीवकः । एवं नन्दकः वर्धकः ॥

## इत्यभयनन्दिविरचितायां जैनेन्द्रमहावृत्तौ द्वितीयस्याध्यायस्य प्रथमः पादः ।

॥ ॐ नमः ॥

---

कर्मण्यण् ॥ १ ॥

कर्मणि कारके वाचि धोरणित्ययं त्यो भवति । कुम्भकारः । शरलावः । चर्चापारः । कुम्भादि शब्दात् कर्तृकर्मणोः कृतीति ता । वागमिङिति षसः । सीलिका-मिभक्ष्याचरीक्षिक्षमिभ्यो णो वक्तव्यः । धर्म्मशीलः । धर्म्म-शीला । धर्म्मकामः । वायुभक्षः । धर्म्माचारः । धर्म्मापे-क्षः । क्लेशक्षमः । नेदं वक्तव्यम् । घञन्तेन वसे सति सिद्धम् । धर्म्मं शीलमस्य धर्म्मशीलः । धर्म्मे कामोऽस्य धर्म्मकामः । धर्म्मं शीलयतीत्येवमादिविग्रहे अनभिधानादरान भवति यथा आदित्यं पश्यति हिमवन्तं श्रृणोतीत्येवमादौ न भवति । कुम्भकारादिष्वण् घञन्तेन च वस इत्युभयं भवति ॥

ह्वावामः ॥ २ ॥

ह्वा वा मा इत्येतेभ्यश्चाण् भवति कर्मणि वाचि । के प्राप्ते इदं वचनम् । स्वर्गह्वायः । तन्तुवायः । वातिवाय त्योर्मा तेश्चाकर्म्मकत्वादग्रहणम् । धान्यं मिमीते मयते वा धान्य-मायः । मीनातिमिनोत्योः कप्राप्तेरभावात् पूर्वेणैवाण ॥

## आतः कः ॥ ३ ॥

आकारान्तान्डोः कर्मणि वाचि क इत्ययं त्यो भवति । गोदः । अर्थज्ञः । पार्ष्णित्रम् । अङ्गुलित्रम् । ज्या वयोहानावित्यस्य ब्रह्म जिनातीति ब्रह्मज्यः । के कृते परत्वादातः खं पश्चाज्जिः । असिद्धवदत्राभादित्यात्वख-स्यासिद्धत्वादियादेशो न भवति । यणादेशः सिद्धः । जुहु-वतुः जुहुवुरित्यत्र ह्वेञ आत्वमकृत्वा जिः क्रियते इत्यात्वं नास्तीत्युवादेशः सिद्धः । आह्वः । प्रह्वः । इत्याकारान्तात् आतोगाविति कः प्रागात्वम्पश्चाज्जिः ॥

## प्रे ॥ ४ ॥

प्रपूर्वादातः को भवति कर्मणि वाचि । तत्वप्रज्ञः । मोक्षप्रज्ञः । नियमार्थोऽयमारम्भः । प्र एव गौ नान्यस्मि-न्नातः को भवति । गोसंदायः । वडवासन्दायः ॥

## दाज्ञः ॥ ५ ॥

अयमपि नियमः । दा ज्ञा इत्येताभ्यामेव प्रपूर्वाभ्यां कर्मणि को भवति । धर्म्मप्रदः । धर्म्मप्रज्ञः । नियमादिह न भवति । पार्ष्णिप्रत्रायः । अङ्गुलिप्रत्रायः । कथं भाष्ये प्रयोगः अभिज्ञश्च पुनरेकत्वादीनामर्थानामिति अत्राभि-धानवशादातो गाविति को भविष्यति ॥

## संख्यः ॥ ६ ॥

प्र इति नियमेन निवर्तिते के पुनरारम्भः । सम्पूर्वात् ख्या इत्येतस्मात्कर्मणि वाचि को भवति । पशून् सञ्चष्टे पशु-संख्यः । अश्वसंख्य; ॥

## सुपि ॥ ७ ॥

सुबन्ते वाचि धेरातः को भवति । पादैः पिबति पादपः । कच्छेन पिबति कच्छपः । द्वाभ्यां पिबति द्वीपः । समस्थः । विषमस्थः । धर्म्माय प्रददाति धर्म्मप्रदः । शास्त्रेण प्रजानाति शास्त्रप्रज्ञः । अकर्म्मण्यपि वाचि यथा स्यादिति सुप्ग्रहणम् । इह केचिदात इति नानुवर्तयन्ति । तेन मूलविभुजादिष्वभिधानवशात् कः सिद्धः । मूलान् विभुजति मूलविभुजो रथः । जलरुहम् । नखमुचानि धनूंषि । काकगुहास्तिलाः ॥

स्थः ॥ ८ ॥

सुपि वाचि तिष्ठतेः को भवति कर्त्तरि । पूर्वो योगः अनिर्दिष्टार्थत्वात् भावेऽपि यथा स्यादित्यारम्भः । आखूनामुत्थानमाखूत्थः । शलभोत्थः । स्थास्तम्भोः पूर्वस्योद इति सकारस्य पूर्वस्वत्वम् ॥

दुहो घश्च ॥ ९ ॥

इतः प्रभृति कर्म्मणीति सुपीति च द्वयमनुवर्तते । कर्मणि वाचि दुहेः को भवति घकारश्चादेशः । कामन्दोग्धि कामदुघो धर्म्मः । कामदुघा धेनुः ॥

तुन्दशोकयोः परिमृजापनुदोः ॥ १० ॥

तुन्द शोक इत्येतयोः कर्म्मणोर्वाचोः परिमृज अपनुद इत्येताभ्यां को भवति । अविशेषेण सुपीत्येतेनैव के सिद्धे आलस्यसुखाहरणयोरर्थयोर्यथा स्यादित्यारम्भः । तुन्दपरिमृजः अलसश्चेत् । शोकापनुदः पुत्रो जातः । पूर्वं तिकुप्रादय इति षसः पश्चाद्वाकसः । आलस्यसुखाहरणयोरिति किम् । तुन्दपरिमार्ज आतुरः । शोकापनोदो धर्माचार्यः ॥

गष्टक् ॥ ११ ॥

गा इत्येतस्माद्धोः कर्मणि वाचि टगित्ययं त्यो भवति वक्रगः । वक्रगी ।प्रेदाज्ञ इति नियमादगिपूर्वादातः कर्मणि को विहितस्तस्मिन्नेव विषये टक् अन्यत्राणेव भवति । वत्कसंगायः ॥

सुरासीध्वोः पिबः ॥ १२ ॥

सुरा सिधु इत्येतयोः कर्मणोः पिबतेः टग्भवति । सुरापः । सुरापी । सीधुपः । सीधुपी । अयमपि कापवादः । सुरासीध्वोरिति किम् । क्षीरं पिबतीति क्षीरपा कन्या । पिब इति विकृतनिर्देशः किम् । सुराम्पातीति सुरापा ॥

ग्रहेरः ॥ १३ ॥

ग्रहेर्धोः कर्मणि वाचि अ इत्ययं त्यो भवति । शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु वाक्षु प्रायेणाभिधानम् । शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । घटीग्रहः । धनुग्रहः । सूत्रग्रहो भवति धारयति चेत् सूत्रग्राहोऽन्यः ॥

हृञोऽनुत्सेधे ॥ १४ ॥

उत्सेध उत्क्षेपणम् । हृञ अनुत्सेधे वर्तमानात् कर्म्मणि वाचि अत्यो भवति । अंसं हरति अंसहरः । भागहरः । रिक्थहरः । अनुत्सेधे इति किम् । भारहारः । न केवलमुच्छ्राये उत्क्षेपणेऽप्युत्सेध इति शब्दो वर्तते तद्यथा नानाजातीया अनियता उत्सेधजीविन इति ॥

वयसि ॥ १५ ॥

शरीरिणां कालकृतावस्था वयः तत्र अत्यो भवति

वयसि गम्ये । अयमुत्सेधार्थ आरम्भः । कवचहरः क्षत्रिय कुमारः । अस्थिहरश्च शिशुः । इशोरसंभाव्यमानेन वा भारोत्क्षेपणेन वयो गम्यते ॥

आङि शीले ॥ १६ ॥

शीलं स्वाभाविकी प्रकृतिः । आङि च वाचि हृञ अत्यो भवति शीले गम्यमाने । पुष्पाहरः । फलाहरः । सुखाहरः । उत्सेधानुत्सेधयोरयं विधिरिष्यते । अनुत्सेधे पूर्वेण कस्मान्न भवति शीले परत्वात्तृत्स्यात् । शील इति किम् । भारमाहरति भाराहारः ॥

अर्हः ॥ १७ ॥

अर्हतेः कर्मणि वाचि अत्यो भवति । पूजार्हा प्रतिमा ।

स्तम्बेरमकर्णेजपौ ॥ १८ ॥

स्तम्बेरम कर्णेजप इत्येतौ शब्दौ हस्तिसूचकयोरर्थयोर्निपात्येते । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । स्तम्बकर्णयोरमिजपोरिति सूत्रं कर्त्तव्यं सुपीति वर्तते । षे कृति बहुलमित्यनुपा सिद्धम् । अर्थविशेषपरिग्रहार्थं निपातनम् । इह मा भूत् । स्तम्बे तृणस्तवके रन्ता गौः । कर्णे जपता वैद्यः ॥

शमि धोः खौ ॥ १९ ॥

शमि वाचि धोः खुविषये अत्यो भवति । शम्भवः । शंवदः । शङ्करः । धुग्रहणेऽनुवर्त्तमाने पुनर्धुग्रहणं बाधकबाधनार्थम् । शङ्करा नाम परिव्राजिका । खुविषये कृञो हेत्वादिषु परत्वाट्टो मा भूत् । खाविति किम् । शङ्करी जिनविद्या ॥

शीङो ऽधिकरणे ॥ २० ॥

शेतेरधिकरणे सुबन्ते वाचि अत्यो भवति । खे शेते खेशयः । गर्तशयः । षे कृति बहुलमिति पक्षे ऽनुप् । शीङ इति योगविभागात् पार्श्वादिषु सुबन्तेषु वाक्षु अत्यो भवति । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः । उत्तानादिषु च कर्तृषु । उत्तानः शेते उत्तानशयः । अवमूर्द्ध-शयः । दिग्वसहपूर्वाच्च अत्यो भवति । दिग्वेन सह शेते दिग्वसहशयः । कथं गिरिशः । लोमादिपाठान्मत्वर्थीयशः । यो हि गिरौ शेते गिरिस्तस्यास्ति ॥

चरेष्टः ॥ २१ ॥

चरेर्डौरधिकरणे वाचि टो भवति । कुरुषु चरति कुरुचरः । मद्रचरः । मद्रचरी । अधिकरण इत्येव । कुरूँश्चरति कुरुचारः ॥

भिक्षासेनादाये ॥ २२ ॥

अनधिकरणार्थमेतत् । भिक्षा सेना आदाय इत्येतेषु वाक्षु चरेष्टो भवति । भिक्षाचरः । सेनाचरः । आदाय-शब्दः ल्यान्तः । आदाय चरति आदायचरः ॥

पुरोऽग्रतोऽग्रेषु सुः ॥ २३ ॥

पुरस् अग्रतस् अग्रे इत्येतेषु सुबन्तेषु वाक्षु सरतेष्टो भवति । पुरःसरः । अग्रतस् आद्यादिभ्य उपसंख्यानमिति एबन्तात्तसिः । अग्रतःसरः । अग्रेसरः । अग्रेसरी । अनीबन्तत्वेऽप्येकारो निपातनात् ॥

पूर्वे कर्त्तरि ॥ २४ ॥

कर्तृग्रहणं कर्मनिवृत्त्यर्थं पूर्वशब्दे कर्तृवाचिनि सुबन्ते वाचि सरतेष्टो भवति । पूर्वः सरति पूर्वसरः ।

क्रियाया विशेषणेऽपीष्यते । पूर्वं प्रथमं सरति पूर्वसरः । कर्तरीति किम् । पूर्वं देशं सरति पूर्वसारः ॥

**कृञो हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदे ॥ २५ ॥**

शब्दश्लोकादिवर्जिते कर्मणि वाचि कृञः ट इत्ययं त्यो भवति हेतौ शीले आनुलोम्ये च गम्यमाने । हेतुशब्दोपादानात् इह हेतुः प्रकृष्टं कारणम् । विद्या यशस्करी । धनं कुलकरम् । शीलं स्वभावः । समासकरः । अर्थकरः । आनुलोम्यमनुकूलता । प्रेषकरः । वचनकरः । एतेष्विति किम् । कुम्भकारः । अशब्दादिष्विति किम् । शब्दकारः । श्लोककारः । सूत्रकारः । मन्त्रकारः । पदकारः ॥

**दिवाविभानिशाप्रभाभास्करान्तानन्तादिनान्दीलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्धनुररुष्षु ॥ २६ ॥**

अहेत्वाद्यर्थ आरम्भः । दिवाशब्दे सुबन्ते वाचि विभादिषु कर्मसु वाक्षु करोतेष्ट इत्ययं त्यो भवति । दिवेति खिसंज्ञं पदम् । दिवा करोतीति दिवाकरः । विभां करोतीति विभाकरः । निशाकरः । प्रभाकरः । भासनम्भाः भासं करोति भास्करः । सूत्रे भास्करान्तेति सकारस्य निपातनात् । जिह्वामूलीयविसर्जनीयौ न भवतः । कारं करोतीति कारकरः । अन्तकरः । अनन्तकरः । अन्तकरस्य नञ्समासे अन्योऽर्थः प्रतीयते इत्यनन्तग्रहणम् । आदिकरः । नान्दीकरः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृ-

करः । चित्रकरः । क्षेत्रकरः । संख्या एकत्वद्वित्वादिका । एककरः । बहुशब्दोऽपि नानाधिकरणवाची संख्याशब्दः । बहुकरः । जंघाकरः । बाहुकरः । अहस्करः । रोसुपीति रेफः । तस्य कुकम्यादिसूत्रेण सत्वम् । धनुस्करः । अरुस्करः । सस्सेघुस्थस्य इति सत्वं इणः ष इति षत्वम् ॥

कर्म्मणि भृतौ ॥ २७ ॥

कर्म्मशब्दे वाचि कृञष्टो भवति भृतौ गम्यमानायाम् । भृतिर्न्नियतं कर्म्ममूल्यम् । कर्म करोति कर्म्मकरः । भृताविति किम् । कर्म्मकारः ॥

किंयत्तद्बहुष्वः ॥ २८ ॥

किम् यद् तद् बहु इत्येतेषु वाक्षु कृञः अ इत्ययं त्यो भवति । किङ्करः । किङ्करा । यत्करः । यत्करा । तत्करः । तत्करा । चौर्ये तस्करः। बहुकरा इह बहुशब्दो वैपुल्यवाची । हेत्वादिषु ट एव भवति । किङ्कारणशीला किङ्करी ॥

सकृत्स्तम्बे वत्सव्रीह्योरिः ॥ २९ ॥

सकृत् स्तब इत्येतयोः कर्म्मणोः कृञ इरित्ययं त्यो भवति वत्सव्रीह्योः कर्त्रोः । सकृत्करिर्वत्सः । स्तंबकरिः व्रीहिः । वत्सव्रीह्योरिति किम् । सकृत्कारः । स्तंबकारः ।

दृतिनाथयोः पशौ हञः ॥ ३० ॥

दृति नाथ इत्येतयोर्वाचोः पशौ कर्तरि हञ इरित्ययं त्यो भवति । दृतिहरिः । नाथहरिः पशुः । पशाविति किम् । दृतिहारः । नाथहारः ।

फलेग्रह्यात्मम्भरिकुक्षिम्भरयः ॥ ३१ ॥

फलेग्रहि आत्मम्भरि कुक्षिम्भरि इत्येते शब्दा निपात्यन्ते । फलानि गृह्णाति फलेग्रहिः । वाच एत्वमिश्च निपात्यते । आत्मानं बिभर्ति आत्मम्भरिः । कुक्षिम्भरिः । वाचो मन्तत्वमिश्च निपात्यते ।

एजेः खश् ॥ ३२ ॥

एजतेर्ण्यन्तात्खशित्ययं त्यो भवति कर्म्मणि वाचि । खकारः खित्यभ्रेरिति विशेषणार्थः । शकारो गसंज्ञार्थः । अङ्गान्येजयति अङ्गमेजयः । जनमेजयः । वाततिलसर्धेषु अजतुदजहातिभ्यः खश्वक्तव्यः । वातमजाः मृगाः । तिलन्तुदः काकः । सर्द्धंजहा मृगाः ।

नासिकादौ धेट्ध्मः ॥ ३२ ॥

नासिकादिषु कर्म्मसु धेट्ध्मा इत्येताभ्यां खश भवति । नासिकान्धयति नासिकन्धयः । खरिन्धमः । नाडिन्धयः । नाडिन्धमः । मुष्टिन्धयः । मुष्टिन्धमः । घटिन्धयः । घटिन्धमः । वातन्धयः । वातन्धमः । सुनिस्तनयोर्धेट एव सुनिन्धयः । स्तनन्धयः । आदिशब्दः प्रकारवाची ।

उदि कूले रुजिवहोः ॥ ३४ ॥

उदीति काख्याने ईप् । उत्पूर्वाभ्यां रुजि वहि इत्येताभ्यां कूले कर्म्मणि खश् । कूलमुद्रुजः । कूलमुद्वहः ।

वहाभ्रे लिहः ॥ ३५ ॥

वह अभ्र इत्येतयोः कर्म्मणोः लिहेर्द्धोः खश् भवति । वहंलिहा गौः । अभ्रंलिहः प्रासादः ।

मितनखपरिमाणे पचः ॥ ३६ ॥

मितशब्दस्य पृथग्निर्देशात् परिमाणं प्रस्थादि गृह्यते। मितनखपरिमाण इत्येतेषु कर्मसु पचेर्डोः खश् भवति। मितं पचते मितंपचा कन्या। नखम्पचा यवागूः। प्रस्थम्पचा। आढकम्पचा। द्रोणम्पचा।

विध्वरुषोस्तुदः खम् ॥ ३७ ॥

विधु अरुस् इत्येतयोः कर्म्मणोः तुदेर्डोः खश् भवति सकारस्य च खम्। विधुन्तुदः। अरुन्तुदः।

वाचंयमासूर्यंपश्योग्रंपश्यललाटन्तपपरंतप द्विषन्तपेरम्मदपुरन्दरसर्वंसहाः ॥ ३८ ॥

एते शब्दा निपात्यन्ते। वाक्शब्दे कर्म्मणि यमेर्डोः खो निपात्यन्ते व्रते। वाचं यच्छति वाचंयमस्तपस्वी। वाग्यामोऽन्यः। सूर्यं न पश्यति असूर्यंपश्यं मुखम्। असूर्यंपश्या राजदाराः। निपातनादसामर्थ्येऽपि नञः दृशेः खश्। उग्रं पश्यति उग्रम्पश्यः। उग्रे कर्म्मणि दृशेः खश् निपात्यते। ललाटन्तपति ललाटन्तपो भास्वान्। खश् निपात्यः परांस्तापयति परंतपः। द्विषतस्तापयति द्विषंतपः परद्विषतोःकर्म्मणोस्तापेः खन्निपात्यते। तकारस्य च खं ख. चीतिप्रादेशः। स्त्रियामनभिधानम्। द्विषतीतापः। इरया-माद्यति इरम्मदम्। खन्निपात्यः। पुरो दारयति पुरन्दारः। खच् वाचोमन्तता च निपात्यते। सर्वं सहते इति सर्वंसहः। खश् निपात्यः। कथं पाण्यो ध्मायन्ते एषु पाणिन्धमाः पन्थान इति नासिकादौ पाणिशब्दः तत्र पाणिन्धमाः पथिकाः तात्स्थ्यात्पन्थानोऽपीत्यधिकरणे खश् न वक्तव्यः

## प्रियवशो वदः खच् ॥ ३९ ॥

प्रिय वश् इत्येतयोः कर्म्मणोः वदतेः खजित्ययन्त्यो भवति। प्रियम्वदः। वशंवदः। खकारो वागर्थम्। चकारः खचीति विशेषणार्थः। स्यान्तरकरणं किमर्थं खशि सति उत्तरत्र करोतेर्बिभर्तेश्च विकरणः स्यात्। घोरेहडः प्रादेशश्च न स्यात्।

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४० ॥

सर्व कूल अभ्र करीष इत्येतेषु वाक्षु कषतेः खच् भवति। सर्वंकषो विप्रः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या। भागे दारेः खज् वक्तव्यः। भगन्दरः।

## मेघर्तिभयेषु कृञः ॥ ४१ ॥

मेघ ऋति भय इत्येतेषु कर्म्मसु करोतेः खच् भवति। मेघङ्करः। ऋतिङ्करः। अभयाच्चेति वक्तव्यम्। अभयङ्करो जिनः। नञ्से अन्योऽर्थः प्रतीयते अणोऽपवादोऽयम्। परत्वेन हेत्वादिटस्य च बाधकः।

## क्षेमप्रियमद्रेऽण् च ॥ ४२ ॥

क्षेम प्रिय मद्र इत्येतेषु कर्म्मसु करोतेरणित्ययं त्यो भवति खच्च वेति सिद्धे कृञो हेत्वादिष्वपि टप्रतिषेधार्थमणग्रहणम्। क्षेमकरः। क्षेमङ्करः। प्रियकरः। प्रियङ्करः। मद्रकरः। मद्रङ्करः।

## आसितंभवः ॥ ४३ ॥

आसितम्भव इति निपात्यते अ सितशब्दे सुबन्ते वाचि भवतेर्भावकरणयोः खच् निपात्यते आसित इति

कर्त्तरि क्तौ दीर्घं चात एव निपातनात् आसितस्य भवनमासितम्भवो वर्त्तते । आसितो भवत्यनेनालमयमासितम्भव ओदनः । प्रकरणान्तरविहितोयुडपि भवति । भावे घञ् समत्वादयं बाधकः ।

भृतॄवृजिधारिसहितपिदमः खौ ॥ ४४ ॥

भृ तृ वृजि धारि सहि तपि दमि इत्येतेभ्यः खुविषये खञ् भवति कर्मणि सुपि वाचि यथासम्भवमयं विधिः । विश्वम्भरा । वसुन्धरा । रथन्तरो नाम राजा । वृणाव्रूणो पतिंवरा कन्या । अरिञ्जयः । युगं धारयति इति युगन्धरः । खचीत्युडः प्रादेशः । सकुंसहः । सकुन्तपः । दमिरन्तर्गतरायर्थः । अरिन्दमः । खाविति किम् । कुटुम्बभारः ॥

गमः ॥ ४५ ॥

खाविति वर्त्तते । सुबन्तवाचि गमेर्द्धोः खञ् भवति । सुतङ्गमो नाम कश्चित् । क्वचिदखावपीष्यते । मितंगमो श्वा । अमितङ्गमा हस्तिनी । विहायसो विहादेशः खच वा डिद्वक्तव्यः । विहायसा गच्छति विहङ्गः । विहङ्गमः । तुरभुजयोश्च । तुरङ्गः । तुरङ्गमः । भुजङ्गः । भुजङ्गमः ॥

डः ॥ ४६ ॥

खाविति निवृत्तं गम इति वर्तते गमेर्द्धो भवति । सुबन्ते वाची अन्तादिषु वाक्षु प्रायेणाभिधानम् । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । अनन्तगः । गुरुतल्पगः । ग्रामगः । सर्वत्र गच्छति सर्वत्रगः । पन्नं गच्छति पन्नगः । उरसः सखश्चेति वक्तव्यम् । विहायसो विहं च । उरसा गच्छति उरगः । विहायसा

गच्छति विहगः । सुदुरोरधिकरणे डो वक्तव्यः । सुखेन गच्छति अस्मिन् सुगः । दुर्गः । निशो दिशो निर्गो देशो डित्यभस्यापि डित्करणसामर्थ्यात् टेः खम् ॥

आशिषि हनः ॥ ४७ ॥

आशिष्यर्थे हन्तेर्डो भवति कर्मणि वाचि । तिमिं हन्ति तिमिहः । शापहः ॥

अपे क्लेशतमसोः ॥ ४८ ॥

अप इति कास्थाने इप् । अपपूर्वात् हन्तेः क्लेशतमसोः कर्म्मणोः वाचोः डो भवति । अनाशीरर्थोऽयमारम्भः । क्लेशापहः । तमोऽपहः ॥

कुमारशीर्षयोर्णिन् ॥ ४९ ॥

कुमार शीर्ष इत्येतयोः कर्म्मणोर्हन्तेर्णिन् भवति । अशीलार्थोऽयमारम्भः । कुमारघाती । शीर्षघाती । शीर्ष-शब्दो ऽकारान्तः शिरःपर्य्यायोऽस्ति ॥

टगमनुष्ये ॥ ५० ॥

हन इति वर्त्तते । हन्तेः कर्म्मणि वाचि टग् भवति अमनुष्ये कर्त्तरि । पित्तं हन्ति पित्तघ्नं घृतम् । श्लेष्मघ्न-मौषधम् । जायाघ्नस्तिलकः । पतिघ्नी रेखा । अमनुष्य इति किम् । पापघातस्तपस्वी । चौरघातो हस्तीत्यत्र युङा बहुलमिति बहुलवचनादण् ॥

जायापत्योर्लक्षणे ॥ ५१ ॥

लक्षणं चिह्नं तदस्यास्तीति लक्षणः । अर्शआदिपाठादः ।

जाया पति इत्येतयोः कर्म्मणोर्हन्तेर्लक्षण वति कर्तरि टग्भवति । जायाघ्नो ब्राह्मणः । लक्षणमस्य तद्विधमस्ति पतिघ्नी कन्या ॥

## शक्ति हस्तिकवाटे ॥ ५२ ॥

शकनं शक् शक्तिरित्यर्थः । हस्ति कवाट इति एतयोः कर्म्मणोः हन्तेष्टग् भवति शक्ति गम्यमानायाम् । अयं पूर्वश्च मनुष्यकर्तृकार्थ आरम्भः । हस्तिनं हन्ति हस्तिघ्नो मनुष्यः । हस्तिनं हन्तुं शक्त इत्यर्थः । कवाटघ्नो मनुष्यः । शक्तीति किम् । हस्तिघातो व्याधः उपायेन ॥

## पाणिघताडघराजघाः ॥ ५३ ॥

एते शब्दा निपात्यन्ते । पाणिघताडघौ शिल्पिनि निपात्येते । अन्यत्र पाणिघातः ताडघातः । राजघ इत्यविशेषेण । टग्घत्वं टिखं च निपात्यम् ॥

## सुभगाढ्यस्थूलपलितनग्नान्धप्रियेऽच्वौ स्नुखुकञौ भुवः ॥ ५४ ॥

अच्वाविति च्व्यन्तप्रतिषेधात् । नञिवयुक्तन्यायेन अर्थविज्ञानम् । अच्व्यन्तेषु च्व्यर्थे वर्तमानेषु सुभगादिषु वाक्षु भवतेः स्नुख् खुकञ् इत्येतौ त्यौ भवतः । असुभगः सुभगो भवति सुभगम्भविष्णुः सुभगम्भावुकः । आढ्यम्भविष्णुः । आढ्यंभावुकः । स्थूलम्भविष्णुः । स्थूलम्भावुकः । पलितम्भविष्णुः । पलितम्भावुकः । नग्नम्भविष्णुः । नग्नम्भावुकः । अन्धम्भविष्णुः । अन्धम्भावुकः ।

क्विड्दीर्घत्वं च निपात्यते। स्रजन्ति तामिति स्रक्। सृजेः कर्म्मणि क्विरमागमश्च निपात्यः। दिशन्ति तामिति दिक्। दिशेः कर्म्मणि क्विः। उत्स्निह्यतीति उष्णिक्। उत्पूर्वात्स्निहः ण्यन्तत्वं षत्वं च उष्णीषेण नह्यतीति वा उष्णिक्। षनत्वं प्रश्च। अञ्चु। प्राङ्। दध्यङ्। सुबन्तमान्ते क्विर्भवति। युजेः केवलादेव क्विः। युङ्। युञ्जौ। युञ्जः। क्रुङ्। क्रुञ्चौ। क्रुञ्चः। क्रुञ्चेरपि केवलात् क्विः। नत्वं न भवति। स एष विशेषो निपातनैः सह निर्देशाल्लभ्यते॥

## त्यदादौ दृशोऽनालोके टक् च॥ ५८॥

त्यदादिषु वाक्षु दृशेर्धातोरनालोकेऽर्थे टग् भवति क्विश्च आलोकश्चक्षुर्विषयः पर्युदस्यति। त्यादृक्। त्यादृशः। दृशदृग्दृक्षवताविति निर्देशात्क्सोऽपि भवति। त्यादृक्षः। आसर्वनाम्न इत्यात्वम्। एवं तादृक्। तादृशः। तादृक्षः। यादृक्। यादृशः। यादृक्षः। रूढिशब्दा एते टे तेष्ववयवार्थोऽस्ति तमिव पश्यति अथवा स इव दृश्यते इति यथा कथंचिद्वाक्यम्। समानान्ययोश्चेति वक्तव्यम्। सदृशः। सदृक्। सदृक्षः। अन्यादृक्। अन्यादृशः। अन्यादृक्षः। दृशदृग्दृक्षवताविति समानस्य सभावः। अनालोक इति किम्। यं पश्यति यद्दर्शः तद्दर्शः।

## सत्सूद्विषद्रुहद्रुह्युजविदभिदच्छिदजिनीराजो गावपि क्विप्॥ ५९॥

सदादिभ्यो धुभ्यः क्विप् भवति गौ वाचि अपि शब्दात् सुबन्तेऽपि। प्रसत्। दिवि सीदतीति द्युसत्। अन्तरिक्षसत्। सूइति द्विषा सहचरितः आदादिकः।

प्रसूते प्रसूः। अण्डं सूते अण्डसूः। शतसूः। गर्भसूः। विद्वेष्टीति विद्विट्। मित्रद्विट्। प्रद्रुह्यतीति प्रध्रुक्। मित्राय द्रुह्यति मित्रध्रुक्। प्रदोग्धि प्रधुक्। युजिर् योगे युज समाधावविति चाविशेषेण ग्रहणम्। प्रयुनक्ति प्रयुक्। अश्वयुक्। युजेरार्यंतस्याऽपि युज इति निपातनात् णरूप प्रयोजयतीति प्रयुक्। अश्वान् योजयति। अश्वयुक्। विदेरविशेषेण ग्रहणम्। प्रवित्। धर्मवित्। प्रभित्। बलभित्। प्रच्छित्। रज्जुच्छित्। प्रजित्। कर्मजित्। प्रणीः। ग्रामणीः। विराजते विराट्। सम्राट्। मन्वन्क्वनिड्विचः क्वचित्। क्विबिति क्विपि सिद्धे नियोगार्थमिदम्। सुपीति वर्तमाने णिग्रहणं किमर्थम्। अन्यत्रसुद्ग्रहणे निग्रहाणां नास्तीति ज्ञापनार्थम्। तेन वदः सुपि क्यप् चेति णो क्यन्न भवति। प्रवाद्यमनुवाद्यम्॥

## अदोऽनन्ने॥ ६०॥

अदेर्धोः क्विप् भवति अनन्ने सुवन्ते वाचि। आममत्ति आमात्। इत्वात्। अन्न इति किम्। अन्नादः॥

## क्रव्ये॥ ६१॥

क्रव्यमाममासं क्रव्यशब्दे वाचि अदेः क्विप् भवति। क्रव्यमत्ति क्रव्यात्। पूर्वेणैव सिद्धे पुनरारम्भः असरूपस्याणो बाधकः। कथं तर्हि क्रव्यादः पृषोदरादिषु कृत्तविकृतादः क्रव्याद इति द्रष्टव्यम्॥

## मन्वन्क्वनिड्विचः क्वचित्॥ ६२॥

मन् वन् क्वनिप् विच् इत्येते ण्याः क्वचिद् दृश्यन्ते। णावपीत्यनुवर्तते। सुशर्म्मा सुवर्म्मा। कृदिति वचनात्

केवलादपि । दामा । पामा । वामा । हेमा । वन् । विजावा । अग्रेगावा । वना इत्यत्वम् । क्वनिप् । प्रातरित्वा । प्रातरित्वानौ । केवलादपि । कृत्वा । कृत्वानौ । वोपा । पीवा । विच् । विशतीति वेट् । रेट् । वकारः कृत्कार्यार्थः । इकार उच्चारणार्थः । चकारः एवर्थः जागर्ति जागः । विरित्युच्यमाने जागुरविजिणण्ङितीति एप्प्रतिषेधः शक्येत ॥

क्विप् ॥ ६३ ॥

क्विप् धोः क्वचिद्दृश्यते गावपि गावपि उखेन स्रंशते उखास्रत् । वाहात् भ्रश्यति वाहभ्रट् । अनस्यापीति दीत्वम् । क्वचिदधिकारात्केवलादपि । याति याः । वाति वाः ॥

स्थः कः ॥ ६४ ॥

गावपीति वर्तते । तिष्ठतेः को भवति शन्तिष्ठति शंस्थः । सुस्थः । ननु सुपि स्थ इत्यनेनैव कः सिद्धः । न सिद्ध्यति । शमीधोः खावित्यत्र धुग्रहणस्य प्रयोजनमुक्तं समत्वेन पूर्वस्य कस्य बाधनमिति । यथा शङ्करा परिव्राजिकेत्यत्र हेत्वादिलक्षणस्य टस्य बाधात्कस्याकारस्य बाधनार्थं पुनः कविधानं क्विपो समत्वादस्यो न बाधक इति पूर्वेण क्विप्सिद्धः । शंस्थाः ॥

भजो ण्विः ॥ ६५ ॥

भजतेर्ण्विर्भवति सुपि गावपि । अर्धभाक् । प्रभाक् । णकार ऐवर्थः । वकारः सति साम्ये बाधार्थः । इकारः उच्चारणार्थः । समत्वेन क्विविचोर्बाधकोऽस्ति ण्विः ।

सुपि णीलेऽजातौ णिन् ॥ ६६ ॥

चतुष्टयी शब्दानां प्रवृत्तिरित्यस्मिन् दर्शने जाति प्रतिषेधोऽयम् । अजातिवाचिनि सुबन्ते वाचि शीले गम्यमाने धेर्णिन्भवति । सुपीति वर्त्तमाने पुनः सुपग्रहणं सुम्मात्रार्थम् । अन्यथा अजाताविति सत्ववाचिनः प्रतिषेधादन्यस्यापि सत्ववाचिनो ग्रहणं स्यात् । उष्णं भुंक्ते इत्येवंशीलः उष्णभोजी । उदासारिण्यः । प्रत्यासारिण्यः अजाताविति किम् । शालीन भुङ्क्ते इत्येवं शीलः शालिभोजः । साधूनामन्त्रयिता । शील इति किम् । उष्णभोजः आतुरः । क्वचिदित्यनुवृत्तेः साधुकारिण्यप्यर्थे णिन् । साधुकारी साधुदायी । ब्रह्मणि वदेः णिन् वक्तव्यः । असमस्याणो बाधकः । ब्रह्मवादिनो वदन्ति ॥

## कर्त्तरी वे ॥ ६७ ॥

कर्तरि वाचि इवार्थे धेर्णिन् भवति । उपमानभूते कर्तरीत्यर्थः । जात्यर्थं शीलार्थं चेदम् । उष्ट्र इव क्रोशते उष्ट्रकोशी । ध्वांक्षरावी । खरनादी । सिंहनर्दी । वृत्त्येवार्थस्योक्तत्वादिवशब्दस्याप्रयोगः । कर्त्तरीति किम् । तिलानिव भुक्ते कोद्रवान् । इव इति किम् । उष्ट्रः क्रोशति ॥

## व्रते ॥ ६८ ॥

सुवन्ते वाचि धेर्णिन् भवति । समुदायेन व्रतं गम्यते । शास्त्रपूर्वको नियमो व्रतम् । पार्श्वशायी । स्थण्डिलशायी । वृक्षमूलवासी । श्राद्धं न भुंक्ते व्रतमस्य अश्राद्धभोजी । अलवणभोजी । सापेक्षस्यास्यापि नञो वृत्तिर्व्याख्याता । व्रत इति किम् । स्थण्डिले शेते कामचारेण ॥

## प्रायोऽभीक्ष्ण्ये ॥ ६९ ॥

सुबन्ते वाचि धोराभीक्ष्णे गम्ये प्रायो णिन् भवति। शीलं गुणान्तरे द्वेषः। तत्तन्मुहुर्मुहुः सेवनमाभीक्ष्णम्। कषायपायिणो गांधारयः। सौवीरपायिणो इपिलाः। तक्रपायिणो अन्ध्राः। क्षारपायिण उसीनराः। मृदन्तं तुम्बिभक्ताविति। णत्वं प्रायोग्रहणादिह न भवति। कुल्माषखादाश्चोलाः॥

मनः॥ ७०॥

मन्यतेः सुपि वाचि णिन् भवति। अशीलाद्यर्थमेतत्। शोभनं मन्यते परं शोभनमानी दर्शनीयमानी। मन इति श्यविकरणस्य ग्रहणं व्याख्यानात्। उत्तरत्र खशि विशेषो भविष्यति॥

खश्चात्मनः॥ ७१॥

आत्मनो यत्सुवन्तं तस्मिन् वाचि मन्यतेः खश भवति णिश्च। शोभनमात्मानं मन्यते शोभनंमन्यः। शोभनमानी पण्डितमानी॥

भूते॥ ७२॥

भूत इत्यधिकारो वेदितव्यः। धोरिति वर्तते। अर्थवशाद्भूते ध्वर्थे वक्ष्यमाणा विधयो भवन्तीत्यर्थः। वक्ष्यति दृशेः क्वनिप्। मेरुं दृष्टवान् मेरुदृश्वा। भूत इति किम्। मेरुं द्रक्ष्यति। न च भूतशब्दस्येतरेतराश्रयत्वेनासिद्धिः, अनादित्वाच्छब्दव्यवहारस्य। भूत इति निसंज्ञको वा शब्दः। इयन्त इति संख्यानं निसञ्ज्ञानां न विद्यते। प्रयोजनवशादेते निपात्यन्ते पदे पदे॥ १॥

करणे यजः ॥ ७३ ॥

णिन्निति वर्त्तते । करणे सुबन्ते वाचि यजेर्द्धा; भूते णिन् भवति । अग्निष्टोमेन यजते अग्निष्टोमयाजी । वाजपेययाजी । विशेषणस्य करणत्वं यजनसामान्यं यजेरर्थः ॥

कर्म्मणि हनः ॥ ७४ ॥

कर्म्मणि वाचि हन्ते र्णिन् भवति भूते । पितृव्यं हतवान् पितृव्यघाती । मातुलघाती । कुत्साविशेष इति वक्तव्यमिह मा भूत् । देवदत्तं हतवान् देवदत्तघातः ॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ७५ ॥

ब्रह्म भ्रूण वृत्र इत्येतेषु कर्म्मसु हन्तेः क्विप् भवति । ब्रह्माणं हतवान् । ब्रह्महा । भ्रूणहा । वृत्रहा । सामान्येन क्विपि सिद्धे नियमार्थमिदम् । ब्रह्मादिष्वेव कर्मसु हन्तेः क्विन्नान्यस्मिन् । मित्रं हतवान् मित्रघातः । उभयथा नियमश्चायम् । ब्रह्मादिषु कर्म्मसु भूते क्विवेव नान्यस्त्यः । उभयथा शिष्यैः प्रतिपन्नत्वात् उभयथा नियमो लभ्यते । कथं मधुहा चिन्त्यमेतत् । हन इत्येव । ब्रह्माणं कृतवान् । भूत इत्येव । ब्रह्मणं हन्ति हनिष्यति वा ॥

सुकर्म्मपापमन्त्रपुण्ये कृञः ॥ ७६ ॥

क्विविति वर्तते । सुशब्दे वाचि कर्म्मादिषु च करोतेः क्विप् भवति भूते । सुष्ठु कृतवान् सुकृत् । कर्मकृत् । पापकृत् । पुण्यकृत् । एषोऽप्युभयथा नियमः । स्वादिष्वेव वाक्षु कृञः क्विप् भवति नान्यस्मिन् । सुत्रं कृतवान् सूत्र-

कारः । स्वादिषु च भूते क्विवेव नान्यस्त्यः । कृञ इति किम् । पापं चितवान् । भूत इत्येव । कर्म करोतीति कर्म्मकारः । स्वादिष्वेव भूते क्विप्भवतीति नायमिह नियम इत्येके । तेन भाष्यकृत् शास्त्रकृत् तीर्थकृदित्येवमादि सिद्धम् । वर्तमानकालविवक्षा वा तेनानियमः ॥

सोमे सुञः ॥ ७७ ॥

सोमे कर्म्मणि सुनोतेः क्विप्भवति भूते । सोमं सुतवान् सोमसुत् । सोमसुतौ । सोमसुतः । एषोऽप्युभयथा नियमः । सोम एव वाचि सुनोतेः क्विन्नान्यस्मिन् । सुरां सुतवान् सुरासावः । सोमे वाचि भूते क्विवेव नान्यस्त्यः । सुञ इति किम् । सोमं कृतवान् । भूत इत्येव । सोमं सुनोति सोमसावः ॥

अग्नौ चेः ॥ ७८ ॥

अग्नौ कर्म्मणि चिनोतेः क्विभ्भवति भूते । अग्निं चितवान् अग्निचित् । अग्निचितौ । अग्निचितः । अयमप्युभयथा नियमः अग्नावेव वाचि नान्यस्मिन् । कुड्यं चितवान् कुड्यचायः । अग्नौ वाचि भूते क्विवेव नान्यस्त्यः । चेरिति किम् । अग्निं कृतवान् । भूत इत्येव । अग्निं चिनोति अग्निचायः ॥

कर्म्मण्यग्न्याख्यायाम् ॥ ७९ ॥

कर्मणीति प्रकृतं वर्त्तते । कर्म्मणि वाचि चिनोतेः कर्म्मणि कारके क्विप्भवति समुदायेन चेदग्न्याख्या गम्यते । श्येन इव चितः श्येनचित् । काक इव चितः काकचित् ।

रथचक्रचित् । आख्या ग्रहणं किमर्थं रूढेः परिग्रहार्थम् । अन्यथं इष्टकाचयः श्येनचिदुच्यते ॥

## कर्म्मणोऽिविक्रियः ॥ ८० ॥

वाचि इन्नित्ययं त्यो भवति । विपूर्वात् क्रीणातेः । कर्मणीति वर्तमाने पुनः कर्मग्रहणमभिधेयनिवृत्त्यर्थम् । कर्मणि वाचि कर्त्तरि कारके यथा स्यात् । तैलं विक्रीतवान् तैलविक्रयी । घृतविक्रयी । कुत्सायामिति वक्तव्यम् । इह न भवति । धान्यविक्रायः ॥

## दृशेः क्वनिप् ॥ ८१ ॥

भूते कर्मणीति च वर्त्तते । कर्मणि वाचि दृशेर्धोः क्वनिप्भवति । मेरुं दृष्टवान् मेरुदृश्वा । विश्वदृश्वा । पित्करणमुत्तरार्थम् । सामान्येन क्वनि प्रे सिद्धे पुनर्वचनं भूते मन्वन्विचां निवर्तकम् ॥

## राज्ञि युधि कृञः ॥ ८२ ॥

राजशब्दे कर्मणि युधिकृञ् इत्येताभ्यां क्वनिप्भवति। युधिरन्तर्भावितण्यर्थः सकर्मकः । राजयुध्वा । राजकृत्वा अयमपि योगः मन्वन्विचां निवृत्त्यर्थः । कर्मणीत्येव । राज्ञा युद्धवान् ॥

## सहे ॥ ८३ ॥

सहशब्दे वाचि युधिकृञित्येताभ्यां क्वनि भवति भूते । सह युद्धवान् सहयुध्वा । सहकृत्वा । वानीच इत्यत्र न्यगवयवस्य वसस्य ग्रहणात् सहशब्दस्य सभावो न भवति । योगविभागो यथासंख्यनिवृत्त्यर्थः ॥

जनेर्डः ॥ ८४ ॥

सुपि शील इत्यतः सुपीति संबध्यते । जनेर्धातोः सुपि वाचि ड इत्ययं त्यो भवति । उपसरे जातः उपसरजः । मन्दुरायां जातः मन्दुरजः । ख्वेघायोः क्वचित् खौ चेति प्रादेशः । बलभीजः । कायामजातावभिधानम् । जाड्याज्जातं जाड्यजन्दुःखम् । सन्तोषजं सुखम् । सङ्कल्पजः कामः । बुद्धिजः संस्कारः । अजाताविति किम् । मृगाज्जातः । हस्तिनो जातः । गौ वाचि खुविषये प्रजाताः प्रजाः अनौ कर्मणि वाच्यभिधानम् । पुमांसमनुजातः पुमनुजः । स्त्र्यनुजः । अन्यस्मिन्नपि वाचि दृश्यते कारकान्तरेऽपि । किञ्जातो नञ्किञ्जः । अलं जातेन अलञ्जः । द्विर्जातो द्विजः । न जातः अजः । कायामजातावित्युक्त जातावपि दृश्यते ब्राह्मणजः पशुवधः । क्षत्रियजं युद्धम् । गौ वाचि खावित्युक्तः अखावपि दृश्यते । अधिजातः । अधिजः । अभिजः । परिजः । अनौ कर्मणीत्युक्तम् । अकर्मण्यपि दृश्यते । अनुजातः अनुजः । यद्यपि विशेषेण सुपीत्युच्यते इहापि प्राप्नोति सर्वाङ्गपरिपूर्णो जातः अहस्त्रो जातः अनभिधानान्न भवति । युङ्गा बहुलमिति बहुलवचनात् । कर्मणि कारके अन्यस्मादपि भवति परिखाता परिखा । पुंसा अनुजातः पुंसानुप्रकरणे पुंसानुजो जनुषान्ध इत्यत्रानुवर्तयिष्यते ॥

तः ॥ ८५ ॥

तसंज्ञस्त्यो भवति घोर्भूते । इह वाग्विशेषपरिग्रहो नास्ति कृतम् । कृतवान् । भुक्तम् । भुक्तवान् । क्तक्तवतो-

भाविनोः तत्संज्ञाश्रिता तेन संज्ञया त्यविधाने इतरेतराश्रयं नास्ति । आदिकर्मण्यपि कथं चित् भूतत्वमस्ति । प्रकृतः कटं देवदत्तः । प्रकृतवान् कटं देवदत्तः ॥

## सुयजोर्वनिप् ॥ ८६ ॥

सुपीति निवृत्तम् । सु यजि इत्येताभ्यां वनिप् भवति भूते । सुतवान् । सुत्वा । इष्टवानिति यज्वा ॥

## जृषोऽतृ ॥ ८७ ॥

जीर्यतेरतृ इत्ययं त्यो भवति भूते । जरन् । जरन्तौ । जरन्तः । क्तक्तवतोरसमत्वादबाधकोऽयम् ॥

## वस्सदिणो वसुर्लिण्मम् ॥ ८८ ॥

वस् सद् इण् इत्येतेभ्यः भूते वसुर्भवति लिड्वन्मसंज्ञश्च । अनूषिवान् श्रीदत्तं धान्यसिंहः । उपसेदिवान् उपाध्यायं शिष्यः । ईयिवान् उपेयिवान् उपाध्यायं शिष्यः । इणं क्रादिनियमादिटि द्वित्वम् । यकारस्य यणोत्योरिति यणादेशः । चस्य कितीणो दीरिति दीत्वम् । अथ क्रादिनियमलक्षणस्येटः वसीतिप्रतिषेधः कस्मान्न भवति उत्तरत्र स्तुवोर्निङ्क्त्यनिट्वचनं ज्ञापकं वसीतिप्रतिषेधो न भवति । उदात्तस्य वासप्रतिषेधः लिड्वदतिदेशाद्द्वित्वम् । न क्षितलोकेत्यादिना कर्म्मणि ताप्रतिषेधकश्च भवति । मसंज्ञायाः किं प्रयोजनं कर्म्मव्यतिहारे मा भूत् । व्यत्यये जनपद इति प्राक्तेर्वासम इति लुङादयोऽपि भवन्ति । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपासदत् । उपासीदत् । उपससाद । उपागात् । उपैत् । उपेयाय । क्सुकानौ लिडादेशौ सर्वधुभ्य इत्येके । क्सुर्लोममिति

मसंज्ञकः । कानस्य ङकानं द इति संज्ञा । भावकर्म्मकर्तृषु च सम्भवः । लिडादेशत्वादेव कित्वे सिद्धे स्फातार्थं कित्करणमनयोः । अञ्जेः अञ्जितवान् । खञ्जेः सस्वजान इति कित्वान्नखं सिद्धम् । ऋकारान्तस्य एप्प्रतिषेधार्थं च कित्करणं तितीर्वान् । ऋच्छतृनामित्येन्न भवति । कर्मणि ततिराणः । ऋतइद्धोरिति इत्वस्य द्वित्वे चीति स्थानिवद्भाव तृइति द्वित्वं । र इति अत्वम् । तैरेवाचार्यैः वस्वेकाजाद्घसामिङिति वसौनरतः । एकाचामाकारान्तानां घसेश्चेति विहितमेविचान् । पचिवान् । जघ्निवान् । इह कस्मान्न भवति बिभिद्वान् चिच्छिद्वान् हलाद्येलिघते इत्यनेन एत्वचरवयोर्वासौ य एकाच् तत्रैवेट् भवति यद्येवं ययिवानित्यत्रापि इटि चात् स्वमिति स्व एकात्वमस्तीति आद्ग्रहणमनर्थकं नियमार्थमेतत् यथा मिपिन मित्तमेकाच्त्वं तेषामाकारान्तानामेव इड्भवति नान्येषां च खन्वानिति । अत्रापीटि कृते उङ खे क्रियमाणे एकाच्सम्भवोऽस्ति अत एव नियमात् घसेरिडप्राप्ते ग्रहणम् । तथा वा दृशिगमहनविद्विशाम् । ददृशिवान् । ददृश्वान् । जग्मिवान् । जगन्वान् जघ्निवान् । जघन्वान् । मो नः स्वोरिति मकारस्य नत्वम् । दृशेरनेकाच्त्वात् गमहनोरातइति नियमात् इड्यप्राप्ते विभाषा वासौ परतौ वदेः शविकरणस्य ग्रहणम् । विविदिवान् । विविद्वान् । ज्ञानार्थस्य ग्रहणे तेर्यस्य वेति प्रतिषेधः स्यात् । विविशिवान् । विविश्वान् ॥

श्रुवोऽनिट् ॥ ८९ ॥

श्रु इत्येतस्माद्वसुर्भवत्यनिट् । उपशुश्रुवान् श्रीदत्तं धान्यसिद्धः । असमस्त्वाल्लङादयोऽपि उपाश्रृणोत् । उपशुश्राव ॥

## अनाश्वाननूचानौ ॥ ९० ॥

अनाश्वान अनूचान इत्येतौ शब्दौ निपात्येते । नञ्पूर्वादश्नातेः वसुर्लिड्वदिडभावश्च निपात्यते । अनाश्वांस्तपश्चकार । असमत्वात् नाश्नात् नाश इत्यपि भवति । वचेरनुपूर्वात् कर्तरि कानो निपात्यते । अनूचानो व्रतोपपन्नः । असमत्वात् अनूक्तवान् अन्ववोचत् अनूवाच इति च भवति ॥

## लुङ् ॥ ९१ ॥

लुङ् इत्ययं त्यो भवति भूते धोः । अकार्षीत् अहार्षीत् । क्व भवानुषितः । अमुत्रावात्समिति । अत्र भूतमात्रस्वविवक्षयैवं एवमिति लङ् न भवति ॥

## अनद्यतने लङ् ॥ ९२ ॥

भूत इति वर्तते । अविद्यमानाद्यतने भूते धोर्लङ् भवति । अतीताया रात्रेः आ पश्चिमयामात् आगामिन्याश्च रात्रेराप्रथमयामात् अद्यतनकालः । तत्प्रतिषेधादनद्यतनः । अकरोत् । अहरत् । अनद्यतनभूतविवक्षायाः समत्वाल्लुङो बाधको लङ् । अनद्यतन इति बसनिर्देशाद्यत्राद्यतनगन्धोऽप्यस्ति तत्र लङ् न भवति । अद्य ह्यश्वाभुद्महि यद्दिवसः अद्यतनेऽप्यद्यतनो नास्तीति लङ्वाप्नोति नायं दोषः । विशेषाद्यतने सामान्याद्यतनस्य विद्यमानत्वात् ।

इह भूतमात्रं विवक्षितम् । आगच्छाम घोषात् अपिबाम पय इति परोक्षे लोकविज्ञाते प्रयोक्तुः शक्यदर्शनत्वेन दर्शनविषये लङ् वक्तव्यः । अरुणन्महेन्द्रो मथुराम् । अरुणद्यवनः साकेतम् । परोक्षे इति किम् । उदगादादित्यः । लोकविज्ञात इति किम् । जगाम ग्रामं देवदत्तः । प्रयोक्तुः दर्शनविषय इति किम् । जघान कंसं किल वासुदेवः ॥

## अयद्यभिज्ञोक्तौ लृट् ॥ ९३ ॥

अभिज्ञोक्तिः स्मृतिवचनम् । अविद्यमाने यच्छब्दे अभिज्ञावचने वाचि अनद्यतने लृट् भवति । अभिजानासि देवदत्त कस्मीरेषु वत्स्यामः मद्रेषु वत्स्यामः । उक्तिग्रहणं पर्यायार्थम् । स्मरसि धुध्यसे चेतयसे वा कस्मीरेषु वत्स्यामः । लङोऽपवादोऽयम् । अयदीति किम् । अभिजानासि देवदत्तः यत् कस्मीरेष्ववसामः ॥

## न वा साकाङ्क्षे ॥ ९४ ॥

आकांक्षा सम्बन्धः अनद्यतन इत्येव साकाङ्क्षे अभिज्ञावचने वाचि धोर्न वा लुङ भवति । अयद्यभिज्ञावचने पूर्वेणाप्राप्तो लृट् नेति प्रतिषिध्यते ततः केवले यच्छब्दसहिते चाभिज्ञावचने साकांक्षे वाचि वेति सर्वत्र विभाषा । अभिजानासि देवदत्तः कास्मीरेष्ववत्स्यामः कस्मीरेष्ववसाम तत्रौदनान् भोक्ष्यामहे तत्रौदनानभुंज्महि । यच्छब्दसहिते अभिजानासि देवदत्त यत् कस्मीरेष वत्स्यामः यत्तत्रौदनान् भोक्ष्यामहे यत्त्रौदनानभुञ्ज्महि ॥

## परोक्षे लिट् ॥ ९५ ॥

भूते अनद्यतने इति च वर्तते । परावृत्तोऽक्षेभ्यः परोक्षः इन्द्रियागोचर इत्यर्थः । परोक्षशब्दस्य चेदमेव निपातनम् । भूतानद्यतनपरोक्षेऽध्वर्थे लिट् भवति । यद्यपि सर्वो ध्वर्थः साध्यत्वेनानुमेयत्वेन वा परोक्षस्तथापि यत्राश्रयद्वारेण प्रत्यक्षाभिमानो नास्ति लोकस्य स परोक्ष उक्तः । पपाच । चकार । आत्मनानुष्ठिता हि क्रिया सर्वस्य प्रत्यात्मं प्रत्यक्षेति सुप्तमत्तमस्मदः प्रयोगः । सुप्तोऽहं किल विललाप मत्तोऽहं किल जघान । अत्यन्तापह्नवे लिट् वक्तव्यः । नाहं कलिङ्गं जगाम । कलिङ्गगमनस्य प्रत्यक्षत्वाल्लिडप्राप्तः ॥

## हशश्वतोर्लङ् च ॥ ९६ ॥

ह शश्वदित्येतयोर्वाचोर्लङ् भवति लिट् च भूतानद्यतनपरोक्षे । इति हाकरोत् । इति ह चकार । शश्वदकरोत् । शश्वच्चकार ॥

## प्रश्ने चान्तर्युगे ॥ ९७ ॥

प्रष्टव्य इति प्रश्नः । पञ्चवर्षं युगम् । युगाभ्यन्तरे प्रश्ने भूतानद्यतने परोक्षे लङ्लिटौ भवतः । चकारः किमर्थः पूर्वसूत्रे चानुकृष्टस्य लिटोऽनुकर्षणार्थः । किमगच्छस्त्वं पाटलिपुत्रम् । अददादसौ दानम् । ददावसौ दानम् । प्रश्न इति किम् । देवदत्तो जगाम । अन्तर्युग इति किम् । अहं त्वां पृच्छामि । जघान कंसं किल वासुदेवः ॥

## पुरि लुङ् वा ॥ ९८ ॥

पुराशब्दो भूतानद्यतने वर्त्तते न भूतमात्रे । पुराशब्दे वाचि भूतानद्यतने वा लुङ् भवति पक्षे यथाप्राप्तं च । अवात्सुरिह पुरा छात्राः । अवसन्निह पुरा छात्राः । परोक्षविवक्षायां लिडपि भवति । ऊषुरिह पुरा छात्राः ॥

## लट् ॥ ९९ ॥

वेति निवृत्तम् । लट् भवति पुराशब्दे वाचि भूतानद्यतने । वसन्तीह पुरा छात्राः । योगविभाग उत्तरत्र लट एवानुवर्तनार्थः ॥

## स्मे ॥ १०० ॥

स्मशब्दोऽप्यनद्यतने परोक्षे च वर्तते न भूतमात्रे । स्मशब्दे वाचि अनद्यतने लट् भवति । इति स्मोपाध्यायः कथयति । स्वयं प्रभार्थं युध्यन्ते स्म विद्याधराः । लट्लिटोरपवादोऽयम् । स्मपुराशब्दयोर्युगपत्प्रयोगे परत्वात् स्मलक्षणो लट् । सुलोचनार्थं पुरा युध्यन्ते स्म पार्थिवाः । हशश्वल्लक्षणादपि विधिः परत्वेन स्मलक्षणः । इतिहाधीयते स्म । शश्वदधीयते स्म । तथा हशश्वल्लक्षणात् परत्वेन पुरालक्षणो विधिः । इति ह पुरा अध्यगीषत । शश्वत्पुराध्यगीषत । ननौ पृष्टप्रतिवचने भूतमात्रे लट् वक्तव्यः । अकार्षीः कटं देवदत्त ननु करोमि भोः । तथा नशब्दे नुशब्दे च वाचि पृष्टप्रतिवचने भूते वा लट् वक्तव्यः । अकार्षीः कटं देवदत्त न करोमि भोः नाकार्षं भोः । अहं नु करोमि अहं न्वकार्षम् । नेदं द्वयं वक्तव्यम् । पूर्वत्र

क्रियाया आपरिसमाप्तेर्वर्तमानत्वमुतरत्रासमाप्तिः समाप्तिश्च क्रियाया विवक्षिता ॥

सम्प्रति ॥ १०१ ॥

इवर्थे लट् भवति आरम्भात्प्रभृत्या उपरमाद्वर्तमानः कालः सम्प्रति इत्युच्यते । उक्तं च आरम्भाद्य प्रसृता यस्मिन् काले भवन्ति कर्त्तारः कार्यस्यानिष्ठातस्तन्मध्यं कालमिच्छन्ति । तरति । नयति । याति ॥

तस्य शतृशानाववैकार्थे ॥ १०२ ॥

तस्य सम्प्रतिकाले विहितस्य लटः स्थाने शतृ शान इत्येतावादेशौ भवतः न चेद्वान्तेन एकार्थ्यं भवति। पचन्तं पश्य। पचता कृतम् । पचमानेन कृतम् । तस्य ग्रहणं किम् । असम्प्रतिकाले विहितस्य लटः स्थाने मा भूत् । उच्यते इह पुरा छात्रैः। अधीयते स्म नटैः। अवैकार्थे इति किम्। पचति देवदत्तः। अत्र तस्य शतृशानाविति योग विभागः कर्त्तव्यः। न वा साकाङ्क्ष इत्यतो मण्डूकप्लुत्या नवाग्रहणं चाभिसम्बन्धनीयम्। ततो नेत्यनेन इतिशब्दयोगे प्रतिषेध एव भवति। वर्षतीति धावति। हन्तीति पलायते। वेति व्यवस्थितविभाषा। तेन इतिवादिभिर्योगैर्भिन्नाधिकरणेषु च हृत्सु नित्यो विधिः। कुर्वती भक्तिः। कुर्वद्भक्तिः। कौर्वतः। पाचमानः। भक्तिशब्दः प्रियादौ पठ्यते तेन पुंवद्यजातीयदेशीय इति पुंवद्भावः। समानाधिकरणेषु हृत्सु विकल्पः। कुर्वत्तरः। कुर्वद्रूपः। कुर्वाणरूपः। करोतितराम्। करोतिरूपम्। तस्मात् घुत्ययोरुपसंख्यानं

न कर्तव्यम् । पुनरवैकार्थ इति द्वितीयो योगः । अत्रापि नवेत्यधिकारात् क्वचिद्वा तेन सामानाधिकरण्येपि शतृशानौ भवतः । सन् घटः । अस्ति घटः । विद्यते घटः । जक्षत्तु जुहोति वा देवदत्तः । अधीयानो मुनिः । अधीते मुनिः । व्यवस्थितविभाषाबलात् माङ्याक्रोशे लुङपि । मा पचत् । मा पचमानः । मा पाक्षीत् ॥

## संबोधने ॥ १०३ ॥

सम्बोधनमभिमुखीकरणम् । तद्विषये लटः शतृशानौ भवतः वैकार्थत्वे नित्यार्थमिदम् । हे पचमान । उभयोर्योत्यं सम्बोधनमिति वाविभक्त्यपि भवति ॥

## लक्षणहेत्वोः क्रियायाः ॥ १०४ ॥

लक्षणं ज्ञापकं चिन्हं हेतुर्जनकः लक्षणं च । या क्रिया क्रियाया हेतुश्च या क्रिया तत्र वर्तमानाड्डोः परस्य लटः शतृशानौ भवतः । शयाना भुञ्जते यवनाः । तिष्ठन्तोऽनुशासति गणकाः । व्यभिचार्य्यपि लक्षणं दृश्यते यथा यत्रासौ काकस्तद्देवदत्तगृहमिति । अन्यथेदैव स्यात् शयाना वर्द्धते दूर्वा । आसीनं वर्द्धते विसम् । हेतौ । अधीयान आस्ते । अर्जयन् वसति । नवेत्यत्र वृतेरिह न भवति । वर्षतीति धावति । हन्तीति पलायते । लक्षणहेत्वोरिति किम् । पचति । जल्पति । क्रियाया इति किम् । यो वेपते सोऽश्वत्थः । यदुत्प्लवते तल्लघु । द्रव्यस्य गुणस्य च लक्षणे न भवतः । इह शास्त्रे अन्यत्र हेतुग्रहणे कारणग्रहणमिति लक्षणग्रहणे च ज्ञापकग्रहणमिति अन्यतरनिर्देशेनोभय-

प्रतिपत्त्योर्द्वयोरुपादानं द्वन्द्वेषु अल्पाच्तरमिति पूर्वनिपात-व्यभिचारार्थं च ॥

## तौ सत् ॥ १०५ ॥

तौ शतृशानौ सत्संज्ञौ भवतः। शतृशानयोः प्रकृतत्वात् तौग्रहणं शतृशानरूपपरिग्रहार्थम्। तेन लृङादेशयोरपि सत्संज्ञा सिद्धा। देवदत्तस्य कुर्वत् करिष्यत्। उदूग्रहणेत्यादिना तासप्रतिषेधः।

## पूङ्यजोः शानः ॥ १०६ ॥

सम्प्रतीति वर्तते। पूङ् यज् इत्येताभ्यां शानस्त्यो भवति अलादेशोऽयं कर्त्तर्येव भवति मभाग्भ्योऽपि भुभ्यो विधास्यते। सोमं पवमानः। यजमानः। न शितादिसूत्रे शतृ इत्यतः प्रभृति आतृनो नकारात् तृन्निति प्रत्याहार उक्तः। तेन कर्म्मणि ताप्रतिषेधः॥

## वयःशक्तिशीले ॥ १०७ ॥

वयस् शक्ति शील इत्येतेषु गम्यमानेषु धेः शानो भवति। शरीरावस्था वयः। कतीह शिखण्डं वहमानाः। कतीह कवचं पर्य्यस्यमानाः। शक्तिः सामर्थ्यम्। कतीह भद्रं निघ्नानाः। कतीह भुञ्जानाः। शीलं गुणान्तरद्वेषः। कतीह मण्डयमानाः। कतीह मुण्डयमानाः॥

## धारीङः शत्रकृच्छ्रिणि ॥ १०८ ॥

अकृच्छ्रमनायासो य अस्ति सोऽकृच्छ्री। धारि इङ इत्येताभ्यां शतृत्यो भवति अ..च्छ्रिणि कर्त्तरि। धारयन्

धर्म्मशास्त्रम् । अधीयन् जैनेन्द्रम् । अकृच्छ्रिणीति किम् । कृच्छ्रेण धारयति । कृच्छ्रेणाधीते ॥

द्विषोऽरौ ॥ १०९ ॥

द्विषः शतृत्यो भवत्यरौ कर्तरि । चौरस्य द्विषन् चौरं द्विषन् । द्विषः शतुर्वावचनमिति कर्मणि वा ता । अराविति किम् । द्वेष्टि पतिं भार्या । असमा एते त्या लटं न बाधन्ते ॥

सुञो यज्ञसंयोगे ॥ ११० ॥

संयुज्यते इति संयोगः संयुक्त इत्यर्थः । सुनोतेर्यज्ञसंयोगे कर्तरि शतृत्यो भवति । सर्वे सुन्वन्तः । यज्ञस्वामिन इत्यर्थः । यज्ञसंयोग इति किम् । सुनोति सुराम् ॥

प्रशंसेऽर्हः ॥ १११ ॥

अर्हतेः प्रशंसेऽर्थे शतृत्यो भवति । अर्हन्निह भवान् । पूजाम् । अर्हन्निह भवान् विद्याम् । प्रशंस इति किम् । अर्हति चोरो वधम् ॥

आङ्क्वः शीलधर्मसाधुत्वे ॥ ११२ ॥

आङभिविधौ द्रष्टव्यः । वक्ष्यति ग्रावस्तुवः क्विप् । आ एतस्मात् क्विप्संशब्दनात् यानित ऊर्द्ध्वं वक्ष्यामः शीलधर्म्मसाधुत्वेषु वेदितव्याः । शीलं व्याख्यातम् । धर्म आचारः । स्वर्थस्य साधुकरणं साधुत्वम् ॥

तृन् ॥ ११३ ॥

तृन्नित्यर्यं त्यो भवति सर्वधुभ्यः शीलादिषु । शीले कर्ता कटान् । वदिता जनापवादान् । धर्म्मे मण्डयितारः स्राविष्टायना भवन्ति । वधूमूढं अपहर्तारः आह्वरका भवन्ति । श्राद्धे सिद्धे साधुत्वे कर्ताविकटः गताखेलः गमेरुकज्वद्यते अधिकारात्तृन्नपि भवति ॥

**अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्य-
पत्रपवृतवृधसहचर इष्णुः ॥ ११४ ॥**

अलङ्कृञित्येवमादिभ्य इष्णुर्भवति शीलादिष । अलङ्करिष्णुः । मण्डनार्थे पूर्वविप्रतिषेधेन युचोऽयं बाधकः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः। वर्तिष्णुः। वर्धिष्णुः। सहिष्णुः । चरिष्णुः ॥

**ग्लाभूजिस्थः क्स्नुः ॥ ११५ ॥**

ग्ला भू जि स्था इत्येतेभ्यो धुभ्यः क्स्नुर्भवति शीलादिषु । ग्लास्नुः । भूष्णुः । जिष्णुः । स्थास्नुः । स्थोमित्वान्न स्थ ईकारः । ञ्जितोरीत्वस्य शासनात् एवभावस्त्रिषु स्मार्यः । स्फुकोनिङ्भङ्गकेरितोः ॥

**त्रसिगृधिधृषिक्षिपः क्नुः ॥ ११६ ॥**

त्रसि गृधि धृषि क्षिप इत्येतेभ्यः क्नुर्भवति शीलादिषु । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः । ध्युङ एप्प्रतिषधार्थं कित्करणमिदं ज्ञापकं त्यादिहलापेक्षया रुसंज्ञायामपि ध्युङ एप् भवतीति । वेत्ता । बोद्धा ॥

**ग्रामित्यामदेर्घिणिन् ॥ ११७ ॥**

इति आद्यर्थे आङभिविधौ शमादिभ्य आ मदेर्घिनिण् भवति । अष्टौ च शमादयः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी । उन्मादी । उडीत इत्यैप्प्राप्तः न सेटखामोवसिकमिचम इति प्रतिषिद्धः । मदेस्तु भवति । घकारः उत्तरत्र कुत्वार्थः । इकारः उच्चारणार्थः । अन्ये उकारमितं कुर्वन्ति तेषामिह शमिनितरा इति उगितश्चेति वा प्रादेशः प्राप्नोति । आमदेरिति किम् शसिता ॥

## दुहानुरुधदुषद्विषद्रुहयुजत्यजरजभुजाभ्याहनः ॥ ११८ ॥

दुहादिभ्यो घिनिण भवति शीलादिषु । दोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रज इति सूत्रे निपातनान्नखम् । रागी । भोगी । अभ्याघाती । अकर्मकाणामिति वक्तव्यमिह मा भूत् । गां दोग्धा । शत्रूनभ्याहन्ता ॥

## परेः सृदेविक्षिपरटवददहमुहः ॥ ११९ ॥

परिपूर्वेभ्यः सृप्रभृतिभ्यो धुभ्यः घिनिराभवति । परिसारी । देव देवन इत्यस्य परिदेवी । क्षिपेरविशेषेण ग्रहणम् । परिक्षेपी । परिपाटी । परिवादी । परिदाही । परिमोही ॥

## वौ कषविचलसकत्थस्रम्भः ॥ १२० ॥

विपूर्वेभ्यः कषादिभ्यो धुभ्यः घिनिण् भवति । विकाषी । विवेकी । विलासी । विकत्थी । विस्रम्भी ॥

अपे च लषः ॥ १२१ ॥

अपे च वौ च वाचि लषेर्घिनिण् भवति । अपलाषी । बिलाषी ॥

चरेः ॥ १२२ ॥

अप इति वर्तते । अपपूर्वाच्चरेः घिनिण् भवति । अपचारी ॥

अतेः ॥ १२३ ॥

अतिपूर्वाच्चरेर्घिनिण् भवति । अतिचारी ॥

समि पृचिसृजिज्वरः ॥ १२४ ॥

सम्पूर्वेभ्यः पृचि सृजि ज्वरि इत्येतेभ्यो घिनिण् भवति । संपर्की । संसर्गी । संज्वरी । अकर्मकाणामित्येव । संपृणक्ति साकम् ॥

आङि यमियसिक्रीडिमुषः ॥ १२५ ॥

आङ्पूर्वेभ्यः यमि यसि क्रीडि मुषि इत्येतेभ्यो घिनिण भवति । आयामी । तासावनिड्भावादैप्प्रतिषेधो न भवति । आयासी । आक्रीडी । आमोषी ॥

प्रे लपसृद्रुमथवदवसः ॥ १२६ ॥

प्रशब्दे वाचि लप सृ द्रु मथ वद् वस इत्येतेभ्यो घिनिण् भवति । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । वसेर उम्विकरणस्य प्रवासी ॥

निन्दहिंसक्लिशखादविनाशव्याभाषासूयो वुञ् ॥ १२७ ॥

निन्दादिभ्यो वुञ् भवति शीलादिषु । निन्दकः क्लिशेरविशेषेण ग्रहणे युचोपि बाधा। क्लेशकः । खादकः । विनाशेर्ण्यन्तस्य विनाशकः। असूय इति कण्ड्वादिर्यगन्त असूयकः । ण्वुना सिद्धे वुञ्ग्रहणं ज्ञापकमन्येभ्यः शीलादिषु ण्वादयो न भवन्तीति ॥

परौ वादिक्षिपरटः ॥ १२८ ॥

परिपूर्वेभ्यः वादि क्षिप रट् इत्येतेभ्यो वुञ् भवति । परिवादकः । परिक्षेपकः । परिराटकः ॥

देविक्रुशो गौ ॥ १२९ ॥

देवि क्रुश इत्येताभ्यां गौ वाचि वुञ् भवति । देवीति देवतेर्ण्यन्तस्य । परिदेवकः । आदेवकः । परिक्रोशकः । आक्रोशकः । गाविति किम् । देवयिता ॥

रुचलार्थाद्धेर्युच् ॥ १३० ॥

रौत्यर्थेभ्यश्चलत्यर्थेभ्यश्च धिसंज्ञकेभ्यः युच भवति । रवणः । शब्दनः । कथनः । चलत्यर्थेभ्यः । चलनः । चोपनः । कम्पनः । धेरिति किम् । पठिता शास्त्रम् ॥

अनुदात्तेतो ऽयसूददीपदीक्षो हलादेः ॥ १३१

अनुदात्तेतो हलादेर्धोर्युच् भवति यकारान्तसूददीपदीक्ष इत्येतान्वर्जयित्वा । द्योतनः । रोटनः । अनुदात्तेत इति किम् । यष्टा । अयसूददीपदीक्ष इति किम् । क्नूयिता । क्ष्मायिता । सूदेः सकर्म्मकस्यापि सूदिता । कथं मधुसूदनः । नन्द्यादिपाठाण्युः । दीपिता । दीपेर्विशेषेण रो विधास्यते युचः प्राप्तिर्नास्ति । इदं प्रतिषेधवचनं ज्ञापकं

शीलादिकेषु असमविधिर्न भवतीत्यनित्यमेतत् । तेन कमनः । कम्रः । कम्पनः । कम्प्रः । विकत्थी विकत्थनः इति च भवति । दीक्षिता । हलादेरिति किम् । एव इत्येवं शील रावेता । आदिग्रहणं हला तदन्तविधिर्मा भूत् इह न स्यात् । जुगुप्सनः । मीमांसनः । घेरेव । वसिता वस्त्रम् ॥

## सृजुज्वलगृधशुचलषपतपदः ॥ १३२ ॥

सृप्रभृतिभ्यो युच् भवति । शरणः । जवणः । ज्वलनः । गर्द्धनः । शोचनः । लषनः । पतनः । पदनः । चल्यर्थानां पदेश्च ग्रहणं सकर्म्मकार्थम् । पदिग्रहणं ज्ञापनार्थमित्यन्ये शीलादिकेषु चासमविधिर्न भवति इति पदेरुकञ् विशेषविहितेन सामान्यविहितस्य युचो बाधितत्वात् पुनरनेन प्रत्यापत्तिः ॥

## क्रुधमण्डार्थात् ॥ १३३ ॥

क्रुध्यर्थेभ्यः मण्डार्थेभ्यश्च धुभ्यः युच् भवति । क्रोधनः । कोपनः । रोषणः । मण्डार्थेभ्यः । मण्डनः । रचनः । भूषणः ॥

## क्रमिद्रमो यङः ॥ १३४ ॥

क्रमिदमिभ्यां यङन्ताभ्यां युच् भवति । चङ्क्रमणः । दन्द्रमणः ॥

## यजिजपिवददशासूकः ॥ १३५ ॥

यङ इति वर्तते । यज्यादिभ्यो यङन्तेभ्यः ऊको भवति । यायजूकः । जञ्जपूकः । दन्दशूकः । वावदूकः ।

जपिदंशिभ्यां लुपसदचरजपजभदहग्रदसोगर्हइति यङ्ज यजभदहदशभञ्जपसामितिचस्यनुगमः ॥

जागुः ॥ १२६ ॥

जागुरूको भवति । जागरूकः ॥

लषपतपदस्थाभूवृषहनशृकमगम उकञ् ॥ १२७॥

लषादिभ्यः उकञ् भवति । अपलाषुकं नीचसङ्गतम् । अपेचलष इति वचनात् घिनिणपि भवति । प्रपातुका गर्भाः । उपपादुकाः देवाः । उपस्थायुको गुरून् । प्रभावुकः । प्रवर्षुकः । आघातुकः । शृणोते शारुकः । कामुका वन्यस्य स्त्रियो भवन्ति । भप्भतेत्यादिना कर्म्मणि ताया प्रतिषेधे प्राप्ते उकप्रतिषेधः इत्युक्तः । आगामुकः स्वगृहम् ॥

जल्पभिक्षकुट्टलुण्टवृङष्टाकः ॥ १२८ ॥

जल्पादिभ्यो धुभ्यष्टाको भवति । जल्पाकः । जल्पाकी । अकर्म्मकविवक्षायां रुचलार्थाद्धेर्युजिति युच् प्राप्तः । भिक्षाकः । अनुदात्ततो युच् प्राप्तः । कुट्टाकः । लुण्टाकः । वराकः ॥

प्रे सृजोरिन् ॥ १२९ ॥

प्रपूर्वाभ्यां सृजुभ्यां इन् भवति । प्रसवी । प्रजवी ॥

परिभूजिदक्षिविश्रीण्वमाभ्यथाभ्यमः ॥१४०॥

इन्निति वर्तते । परिभू जि दक्षि विश्रा इण वम अव्यथ अभ्यम इत्येतेभ्य इन् भवति । परिभावि । जयी ।

आदरी । त्र्यी । विश्रयी । अत्ययी । वमी । अव्यथी । अभ्यमी ॥

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुः ॥ १४१ ॥

स्पृहिप्रभृतिभ्यो धुभ्यः आलुर्भवति । स्पृहयालुः गृहयालुः । पतयालुः । एते चुरादिष्वदन्ताः । दयालुः निद्रालुः । तन्द्रालुः । तन्निति निपातनमालुविषये न भवति । श्रद्धालुः ॥ इह शीङो ग्रहणं कर्त्तव्यम् । शयालुः ॥

## दाधेट्सिशदसदो रुः ॥ १४२ ॥

दा धेट् सि शद सद इत्येभ्यो रुर्भवति । दा इत्य विशेषेण ग्रहणम् । दारुः । धारुः वत्सोमातरम् । नशि. तेत्यत्र उकारप्रश्लेषात् तदन्तविधिना तायाः प्रतिषेधः सेरुः । शद्रुः । सद्रुः । यत्वात्मकर्मणि घतेदारु काष्ठं तद्गुणादिषु द्रष्टव्यम् ।

## सृघस्यदः क्मरः ॥ १५३ ॥

सृमरः । घस्मरः । अद्मरः । अनेनैवादेः घस्भावो निपात्यते ॥

## भञ्जभासमिदो घुरः ॥ १४४ ॥

भञ्जादिभ्यो घुरो भवति । भञ्जेरात्मकर्म्मण्यभिधानं भङ्गुरं काष्ठम् । भासुरं ज्योतिः । मेदुरं मुखम् ॥

## विद्भिच्छिदः कुरः ॥ १४५ ॥

विद् भिद् छिद् इत्येतेभ्यः कुरो भवति । विदुरः

इति ज्ञानार्थस्यैव । भिच्छिदोरात्मकर्म्मणि कुर इष्यते भिदुरं काष्ठम् । छेदुरा रज्जुः ॥

सृजीणनशः क्वरप् ॥ १४६ ॥

सृ जि इण् नश् इत्येतेभ्यः क्वरप भवति । सृत्वरः । जित्वरः । इत्वरः । नश्वरः । नश्वरी ॥

गत्वरः ॥ १४७ ॥

गत्वर इति निपात्यते गमेः क्वरप् मकारस्य त्वं निपात्यते । गत्वरः । गत्वरी ॥

नमिकम्पिस्म्यजस्कमहिंसदीपो रः ॥ १४८ ॥

नमि कम्पि स्मि अजस कम हिंस दीप इत्येतेभ्यो रो भवति । नमेरात्मकर्म्मण्यपि । नम्रं काष्ठम् । नम्रो देवदत्तः । कम्प्रा शाखा । स्मेरं मुखम् । जस्यतेर्नञ्पूर्वात् अजस्रं ज्ञानं भावयामः । कम्रा युवतिः । हिंस्रः पापमेति । दीप्रो मणिः । कम्पश्च रापर्थत्वात् कमदीप्योरनुदात्तेत्वात् युच् प्राप्तः ॥

सनाशंसभिक्ष उः ॥ १४९ ॥

सन्नन्त आशंस भिक्ष इत्येतेभ्य उत्यो भवति । चिकीर्षुः । जिहीर्षुः । आङ् शसि इच्छायामित्यस्य आशंसुः । भिक्षुः ॥

विन्दिच्छू ॥ १५० ॥

विन्दु इच्छु इत्येतौ शब्दौ निपात्येते । वेत्तेरुकारः नुमागमश्च निपात्यते विन्दुः । इच्छतीत्येवंशील इच्छुः । उश्छत्वं च निपात्यते ॥

स्वपितृषोर्नजिङ् ॥ १५१ ॥

स्वपितृषिभ्यां नजिङ् भवति शीलादिषु । स्वप्नक् । स्वप्नजौ । तृष्णक् । तृष्णजौ ॥

शॄवन्द्योरारुः ॥ १५२ ॥

शॄ वन्दि इत्येताभ्यां आरु इत्ययं त्यो भवति । शरारुः । वन्दारुः जिनान् ॥

भियः क्रुक्लुकौ ॥ १५३ ॥

बिभेतेः क्रु क्लुक इत्येतौ भवतः । भीरुः । भालुकः । क्रुकोपि वक्तव्यम् । भीरुकः ॥

स्थेशभासपिसकसो वरः ॥ १५४ ॥

स्था ईश भास पिस कस इत्येतेभ्यो वरो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ॥

यो यङः १५५ ॥

यातेर्यङन्ताद्वरो भवति । यायावरः । वरे अतः खंतस्य यत्वविधिंप्रति न स्थानिवद्भाव इति बलिव्यो-खमिति यत्वम् । यत्वे कृते अतः खस्य स्थानिवद्भावादिटि चात्वमिति आत्वं प्राप्तम् । वरे पूर्वादेशस्य न स्थानिव-द्भाव इति न भवति । शीलादिप्रकरणे धाञ्कृसृजनिन-मिभ्य इकिट् वक्तव्यः । धानशीलो दधिः । करणशीलः चक्रिः । सरणशीलः सस्रिः । जननशीलः जज्ञिः । नमन-शीलः नेमिः । हल्मध्ये लिघतः इति एत्वचखे ॥

यावस्तुवः क्विप् ॥ १५६ ॥

ग्रावपूर्वात् स्तौतेः क्विप् भवति शीलादिषु । ग्रावानं स्तौतीत्येवंशीलः ग्रावस्तुत् । शीलादिषु वा समविधिर्ग्रा-स्तौति सामान्यलक्षणः क्विप् न प्राप्नोति पुनर्विधीयते ॥

अन्येभ्योऽपि ॥ १५७ ॥

अन्येभ्योऽपि धुभ्यः शीलादिषु क्विप् भवति । अपि ग्रहणं विकल्पार्थम् । अन्येभ्योपि धुभ्यः शीलादिष्वपि भवत्यशीलादिष्वपि तत्राभिधानवशात् । भ्राजभासधु-र्विद्युतोर्जिपृजुभ्यः शीलादिषु क्विप् भवति । अन्येभ्यो-ऽन्यत्र । विभ्रानजशीले विभ्राट् । विभ्राजौ । भाः । भासौ । धूर्वाणः शीलः । धूः धुरौ । विद्युत् । विद्युतौ । ऊर्क् ऊर्जौ । पूः । पुरौ । जूः । जुवौ । जुवः । क्विकपिवचिप्र-च्छायतस्तुकटप्रुजुश्रीणां दीरजिश्चेति दीत्वम् । अन्येभ्यो शीलादिषु । पक् । पचौ । भित् । भिदौ । छित् । छिदौ । वाक् । प्रच्छेः प्राट् । आयतस्तूः । कटप्रूः ॥

भुवः खव्यन्तरे ॥ १५८ ॥

भवते क्विप् भवति खावन्तरे च गम्यमाने । मित्रभूः। मित्रभुवौ । मित्रभुवः । अन्तरे । प्रतिभूः । प्रतिभुवौ । प्रतिभुवः । पूर्वेणैव सिद्धे नियमार्थमेतत् खवन्तरयोरेव भुवः शीलादिषु नान्यत्र । भविता । भावुकः ॥

विप्रसमोऽखौ डुः ॥ १५९ ॥

शीलादिष्विति निवृत्तम् । सम्प्रतीत्यनुवर्तते एव । विप्रसंपूर्वाड्डोर्भुवो डुर्भवति अखौ । विभुः। प्रभुः । शम्भुः। अखाविति किम् । विभुर्नाम कश्चित् । डुप्रकरणे मितद्रु-प्रभृतीनामुपसंख्यानम् । मितं द्रवति मितद्रुः । शम्भुः ॥

गोले * प्रतिपादितत्वात् ।' इतः प्रभृत्यामध्यमाधिकारान्तं भाष्यं सुगमं किन्तु कुत्र चिद्विशेषार्थमुच्यते ॥ १२-१३ ॥

**मरीचिः**—अथ क्षेपदिनाख्योपकरणपूर्वकं लब्धहर्गणानयनं दोधकद्वयेनाह स्वोयनखांशयुता इति । क्षयनाड्यः पूर्वंज्ञाताः क्षयाहाद्यधोऽवयवरूपाः स्वीयनखांशयुताः स्वविंशत्यंशेन युताः सत्यः । क्षेपदिनानि सावयवानि भवन्ति । एषां प्रयोजनमाह दिवागणसिद्धौ इति । अहर्गणज्ञानार्थमेतेषां प्रयोजनम् । इदमुपलक्षणम् । पूर्वानीतोपकरणान्यपि तज्ज्ञानार्थमुपयुक्तानि ।

अथाहर्गणानयनमाह चैत्रेति । स्वेष्टकालेऽव्यवहितचैत्रशुक्लपक्षादिरूपप्रतिपदो गतस्तिथिगणो मासादिपरिभाषया ग्राह्यः । अयम् । शोधिता शुद्धिर्यस्मिन्निति शोधितशुद्धिः । प्राक्साधितावमघट्यूनाधिशेषदिनादिरूपशुद्धिहीनः । अयं सिद्धोऽधः कर्मभूमौ पृथक् स्थाप्यः । "त्वन्ताथादि न पूर्वभाक्" † इत्युक्तेनाधःपदस्योत्तरत्रान्वयादयमधःस्थः स्वीयकराभ्रतुरङ्गलवेन । स्वद्व्यधिकसप्तशतांशेन समेतो युक्तः । अयमधस्थः सिद्धः क्षेपयुतः पूर्वानीतक्षेपदिनयुतः । अयं सिद्धश्चतुःषष्टिभक्तो लब्धदिनक्षयवर्जितशेषः । भागादाप्तावमैर्हीन ऊर्ध्वस्थः । तस्य शेषोऽवशिष्टाङ्क इत्यर्थः । अयं सिद्धोऽङ्को द्युगणोऽहर्गणो मध्यमसूर्योदयावधकालेऽभीष्टे भवेत् । अत्रापि चतुःषष्ट्याऽवशेषाद्घट्यादि न ग्राह्यम् । दिनक्षयशेषत इत्याद्युक्तेः । नन्वयमहर्गणः कल्पाद्यहर्गणेन कल्याद्यहर्गणेन वा तुल्यः स्यादत आह । अब्दपतेरिति । पूर्वानीतसावयवाब्दपतेर्ज्ञातकालमवधीकृत्यायमागतः । तथा च यथा कल्पादिकल्याद्यहर्गणयोरतुल्यत्वं तथैव तस्यापि भिन्नत्वमिति भावः । एतेनागताहर्गणे पूर्वनीताब्दपः सावयवो यथायोग्यं योज्यः सिद्धोऽङ्को निरवयवः सप्त-

* गोलाध्याये इति ।

† शब्दानुशासनेऽमरकृतः संकेतस्तदन्यस्यथाक्यार्थमेवेति विवेचनीयम् ।

लब्धः शेषं सूर्यादिगतवारो भवत्युक्तगणनया वर्त्तमानवारज्ञानं स्यादिति सूचितम् ।

अत्रोपपत्तिः । अहर्गणपदवाच्यत्वं सावनदिनगण इति । पूर्वं कल्पादीष्टसूर्योदयसावनदिनगण आनीत इदानीमतिलाघवार्थं वर्षादितो वर्षमध्येऽहर्गणो लघुरानेयः । कल्पाद्यहर्गणवत् । वर्षादिग्रहाणां सिद्धत्वात् । तदग्रे ग्रहज्ञानार्थं तदादितः सावनाहर्गणस्योपयोगात् । तदानयनं तु वर्षादिकालेऽनुपातेन सावयवाहर्गणं कृत्वेष्टसूर्योदयेऽपि उक्तप्रकारेण कल्पाद्यहर्गणं कृत्वा तदन्तरं सावयवोऽहर्गण इति गौरवं विहाय लाघवादन्यथा यतितम् । तत्रेष्टसूर्योदयकाले सौरवर्षादितः सावनदिनानि ज्ञातव्यानि । एतज्ज्ञानं तदादितश्चान्द्रज्ञानेनावमद्वारा सुगममिति । पूर्वप्रतिपादनात् । प्रथमं तदादितश्चान्द्रदिवसा ज्ञेयाः । एतज्ज्ञानस्याप्यभावात् प्रथमं चान्द्रवर्षादिरूपचैत्रप्रारम्भकालान्मासतिथिज्ञानसम्भवात् संपूर्णास्तिथयो गताः । चान्द्राहर्गणः स्वसूर्योदयप्राक्कालीनतिथ्यन्तकाले चैत्रादितो ज्ञातस्तिथिग्रहणात् । अपेक्षितः सौरवर्षादित इति । चैत्रादिसौरवर्षाद्यन्तररूपचान्द्रदिनैरूनः कार्यः । तत्र शुद्धिस्तदन्तरत्वेन पूर्वप्रतिपादनादानीतशुद्धिनोऽत उक्तं 'चैत्रसितादिगतस्तिथिसङ्घः शोधितशुद्धिः' इति । ननु चान्द्रवर्षादिसौरवर्षाद्यन्तरचान्द्रदिनानां दिनादिशेषरूपत्वात् । अवमघट्यूनदिनाद्यधिशेषरूपशुद्धित्वाभावाच्च शोधितशुद्धिरिति कथमुक्तम् । अन्यथा तदादिचान्द्रे तदवमघटीतुल्यमधिकं स्यात् । शोध्ये न्यूनत्वात् । सौरवर्षादित इष्टतिथ्यारम्भकाले वस्तुभूतचान्द्रत्वासिद्धेरिति चेत् । उच्यते । वास्तवचान्द्राणां तदानीतसावयवावमहीनानां तिथ्यन्तकाले तदादिसावनत्वं स्यादिति भवतामप्यभिमतम् । तत्र सूर्योदयकालकरणार्थमवमशेषघट्यादितिथ्यन्तकालीनं योज्यम् । एतत्कालीनावमशेषं तु इष्टचान्द्रानीतावमाधोऽवयवघट्यादियोगः षष्टितष्ट इति रूपम् । तथा च सौरवर्षादितः सावनज्ञानार्थमिष्टचान्द्रानीतावमाधोऽवयवस्य

संपूर्णावमशेषैकदेशस्येष्टचान्द्रे न्यूनत्वं कार्यं सूर्योदयकालीनकरणार्थं संपूर्णावमशेषमुक्तरूपं योज्यमिति सिद्धम् । तत्रेष्टचान्द्रानीतावमानां साश्रयवानामवास्तवानां वास्तवावमानामधिकानां चान्तरे सौरवर्षावमशेषमधिकं तद्योज्यमिति पूर्वमेवेष्टचान्द्राणां योजितं कृतमित्यवमानयने स्पष्टमिति न क्षतिः । अत एवावमघट्यूनदिनाद्यधिशेषस्य चैत्राद्युत्तसूर्योदयसौरवर्षाद्यन्तरकालस्य शोध्यत्वेन शुद्धिरिति संज्ञा सम्यगुक्ता । अथ साश्रनार्थं दिनक्षयाः साध्याः । कल्पचान्द्रैः कल्पदिनक्षयास्तदेष्टैः किमित्यनुपातेन । तत्र कल्पावमरूपगुणस्य खण्डद्वयम् । एकं पञ्चाद्रिरामाङ्कयुगशरसाब्धिखतत्त्वमितम् २५०४६८५९३७५ । अपरं च तत्त्वरसखगोषट्पञ्चराममितम् ३५६९०६२५ । प्रत्येकं कल्पचान्द्रा हरश्च । प्रथमस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने चतुःषष्टिः । द्वितीयस्थाने गुणहरौ तत्त्वेन्दुगजाश्विमितै—२८१२५ रपवर्तितौ गुणस्थाने नवरससूर्याः १२६९ । हरस्थाने नखपञ्चेषुनवनन्दरसशरमिताः ५६९९५५२० । तथा च चतुःषष्टिभक्तचान्द्राणां द्वितीयस्थानोत्पन्नगुणाः १२६९ । गुणितचान्द्राणां द्वितीयस्थानोत्पन्नहरभागो योज्य इति सिद्धम् । तत्र लाघवार्थं गुणितस्य हरभागस्तदा चतुःषष्टिभक्तस्य को भाग इति लब्धांशः किञ्चिदूनः ७०१ । ४७ । अत्रान्तराभावदर्शनात् स्वल्पान्तराद् द्विमितो ध्रुवस्तेन चतुःषष्टिभक्तचान्द्राः स्वाधिकसप्तशतां—७०२ शेन योज्या दिनक्षयाः स्युरिति सिद्धम् । तत्रापि भाज्य एव स्वद्व्यधिकसप्तशतांशेनाधिके कृते चतुःषष्टिभक्ते फलस्य तुल्यत्वात् तदेव कृतम् । अत उक्तम् । 'अधस्तु समेतः स्वीयकराभ्रतुरङ्गलवेन' इति । न च वास्तवचान्द्रेषु सौरवर्षाद्यवमघट्यादीनामधिकत्वात् तदंशेन योजने घटीनामपि स्वद्व्यधिकसप्तशतांशोऽधिकमन्तरं स्यात् । अवमानयनार्थं शुद्धाश्चान्द्रा एवापेक्षितास्तस्मादहर्गणार्थं शुद्धानास्तिथयोऽवमानयनार्थमधिशेषदिनाद्यूनास्ता एव स्वद्व्यधिकसप्तशतांशेन योज्या इति युक्तमिति वाच्यम् । पृथग्विधयेण गौरवात् तत्त्यागात् । लाघवात् स्वल्पान्त-

राच्च अवमघटीयुतचान्द्राणामवमानयनेऽप्यङ्गीकारात् । अत एव न्यून-फलार्थमिवाधिकांशयोजनं स्वल्पान्तरेण कृतम् । किञ्च । अवमाधोऽव-यवे प्राणाः षष्ट्यंशादावन्तरपातेनाग्रेऽवमशेषत्यागाच्चाहर्गणमिष्टौ न क्षतिः । न चैवमत्र स्वीयकराभ्रतुरङ्गलवयोजनं व्यर्थमिति वाच्यम् । अव-माधोऽवयवे घट्यादिकेऽन्तरपातेनाग्रेऽवमशेषाच्चन्द्रसाधने चन्द्रस्य बह्वन्त-रत्वापत्तेः। अथैषां वास्तवत्वाभावेन सौरवर्षाद्यवमघट्यादिहीनम् । ततः सिद्धं चतुःषष्टिभक्तं कार्यं फलं सावयवदिनक्षयाः सौरवर्षादित इष्टतिथ्या-रम्भकाले । एतैर्वास्तवाश्चान्द्रा हीनास्तिथ्यारम्भकालेऽहर्गणः । अथ सूर्योदयकालीनसाधनार्थं कल्पादितोऽव्यवहितपतितावमान्तकालादव-शेषाद्घट्यादि यत् तद्योज्यम् । तिथ्यन्तसूर्योदयान्तरकालस्य संपूर्णवास्त-वावमशेषत्वादिति । एतज्ज्ञानं तु अहर्गणोपयुक्तसावयवावमसौरवर्षाद्य-वमघटिकायोगस्याधोऽवयवज्ञानेन तस्मादवमान्तादवमानयनार्थमिष्ट-चान्द्रा वास्तवाः सौरवर्षादितोऽव्यवहितावमान्तपातकालात् साध्याः । चतुःषष्टिभक्ता दिनक्षयाः सावयवाः पूर्वयोगरूपा भवन्तीति. सौरवर्षाद्य-मवघटीयुतेष्टचान्द्राणां स्वद्व्यधिकसप्तशतांशाधिकानां क्षेपदिनयोजनेन तादृशाश्चान्द्रा भवन्तीत्यत उक्तं क्षेपयुत इति ।

अथ क्षेपोपपत्तिं विना एतदुक्तस्यानिश्चयात् तदुत्पत्तिं शृणु । सौरवर्षाद्यमवघटिका अहर्गणोपयुक्तावमाधोऽवयवे योज्याः । तत्र चान्द्रे लाघवाद्योजनार्थं समच्छेदं विना तुल्यजातित्वाभावेन योगकरणे-ऽशक्यत्वात् । समच्छेदार्थे चतुःषष्टिगुणोऽवघटिकानां हराभावा-दविकारेणैव रूपहरकल्पनादिति चान्द्रा अविकृता एव । एतेनात्र चतुःषष्ट्या गुणनं स्थूलमपि स्वीकृतं स्वल्पान्तरात् । न हि चतुःषष्टि-चान्द्राणामेकोऽवमो भवति "द्व्यंशकोनाब्धिरसैः क्षयाहः" इत्यु-क्तेरिति निरस्तम् । ऋवमपूरणचान्द्रत्वेन तद्ग्रहणाप्रसङ्गात् । अव-मघटीनां भिन्नजातित्वेन चान्द्रदिने योगासंभवाद्दिनस्थानकरणार्थं

षष्टिर्हरस्तासां कल्पितः । अथैतास्तत्र योज्या अवमानयनार्थं शुद्धाश्चान्द्रा अपेक्षिता इति । तत्रावमघट्यादि सौरवर्षादिजमूनं कार्यमतो लाघवात् सौरवर्षाद्यवमघटीनां त्रिषष्टिरेव गुणः कृतः । ननु स्वीयकराश्रतुरङ्गलवयोजनेनेष्टचान्द्राणां मध्ये स्वद्व्यधिकसप्तशतांशाधिकावमघटीनामधिकत्वादवमघटीकराश्रतुरङ्गलवाधिक्येन चतुःषष्टिर्गुणो हीनः कार्यः । अतस्तासां त्रिषष्टिर्गुणः कथम् । न च क्षेपयोजनानन्तरमिष्टचान्द्राणामुक्तांशयोजनं व्यस्तव्याख्यानात् । तेनैक एव हीन इति त्रिषष्टिर्गुणो युक्तः । अत एवेष्टचान्द्राणां स्वल्पान्तरेण वास्तवत्वमिति प्रागुक्तमयुक्तम् । मदुक्तव्याख्यानेन तदंशयोजनावसरे वास्तवचान्द्राणां ज्ञानादिति वाच्यम् । एवमपि समच्छेदार्थं किञ्चिदूनचतुःषष्टिगुणत्वापत्तेः । न तु संपूर्णस्य इष्टचान्द्राणां स्वद्व्यभ्रागांशहीनचतुःषष्टेर्हरत्वात् । तदंशयोजनाभावेन संपूर्णचतुःषष्टेर्हरत्वाभावादिति चेन्न । अवमघट्यादितदंशस्य स्वल्पत्त्वेनाङ्गीकार इत्यादेः पूर्वमेवोक्तत्वात् । तथा चावमघट्यः षष्टिभक्तास्त्रिषष्टिगुणाः कार्यास्तत्र गुणस्य खण्डद्वयम् । एकं षष्टिमितं परं त्रिमितम् । प्रत्येकं षष्टिमितो हरश्च । प्रथमस्थाने गुणहरयोस्तुल्यत्वान्नाशादवमघट्याद्येव फलम् । द्वितीयस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने विंशतिस्तेन घटीनां विंशत्यंशफलतद्योगः क्षेपदिनसंज्ञः । इष्टचान्द्रे क्षेप्यत्वादत उक्तं 'स्वीयनखांशयुताः क्षयनाड्यः क्षेपदिनानि दिवागणसिद्धै '-इति । अथैते शुद्धाश्चान्द्राश्चतुःषष्टिभक्ताः सौरवर्षादितोऽव्यवहितपूर्वपतितावमान्तकालाद्दिनक्षयाः सावयवा भवन्ति । एते सौरवर्षाद्यवमघट्यादिभिरूना अहर्गणोपयुक्तसौरवर्षादितिथ्यन्तकालजदिनक्षयाः सावयवा भवन्ति । एत एव चान्द्राहर्गणे हीनास्तिथ्यन्ते सावनाहर्गणो भवति । सूर्योदयासन्नकाले करणार्थं पूर्वानीतावमाधोऽवयवो योज्यः । तत्र यदाऽहर्गणोपयुक्तावमाधोऽवयवात् संपूर्णावमाधोऽवयवोऽधिकस्तदोर्ध्वाङ्कसमत्वेनाधोऽवयवान्तरमेव सौरवर्षा-

क्षयमघट्यादिरूपम् । तद्योज्यमूर्ध्वाङ्कादिनतया हीनास्तथा चेष्टचान्द्रे पूर्वमेव सौरवर्षाक्षयमघट्योऽधिकाः कृताः । इदानीमूर्ध्वाङ्कवियोजनमिति निरग्रदिनतया हीनाः कार्या इति सिद्धम् । यद्वा चाहर्गणोपयुक्तावमाधोऽवयवात् संपूर्णावमाधोऽवयवो न्यूनस्तदाऽधोऽवयवान्तरं षष्टिशुद्धसौरवर्षाक्षयमघटीतुल्यं हीनं कार्यम् । अहर्गणोपयुक्तावमोर्ध्वाङ्कात् संपूर्णावमोर्ध्वाङ्को रूपेणाधिक इति रूपेणोनः कार्यः । तादृशश्चान्द्रो हीनः कार्यः । अहर्गणार्थं तादृशस्य हीनकरणोत्पत्तेः । तत्र लाघवात् संपूर्णावमोर्ध्वाङ्को हीनः कृतः । एवं सति सौरवर्षाक्षयमघट्योऽधिका न्यूनाः कृता इति ता योज्या अतस्ता इष्टचान्द्रे पूर्वमेव योजिताः । अत एव सौरवर्षाक्षयमघट्यान्यूनाधिशेषदिनरूपशुद्धिः शोधितेति पूर्वं प्रतिपादितम् । तथा च क्षेपयोजनेन ये शुद्धाश्चान्द्रास्तेषां चतुःषष्टिभागेन निरवयवेनोर्ध्वस्था अवमघटीयुतेष्टचान्द्रा हीनाः सूर्योदयासन्नकाले पूर्वरीत्याऽहर्गणः स्यात् । अवमशेषं च चन्द्रसाधनार्थमनष्टं स्थाप्यम् । न तस्माद्घट्यादिफलं ग्राह्यं प्रयोजनाभावात् । अयमहर्गणः सौरवर्षादित इष्टसूर्योदयासन्नकाले जात इत्यब्दपघट्यादिकाले न तदादिज्ञानादब्दपतेरित्युक्तम् । अत एवाहर्गणाधोऽवयवः सौरवर्षाद्यनन्तरसूर्योदयासन्नकालान्तरमावनघट्यात्मकाब्दपभोग्यघटीरूपः सिद्धः । अतः सावयवाब्दपयोजनेन निरवयवोऽयं सप्ततष्टः शेषं सूर्यादिवारो भवतीति सर्वं समञ्जसम् । एकदेशिनस्तु अवमानयनार्थमधिशेषदिनादूनचैत्रादितिथिगणरूपः शुद्धश्चान्द्राहर्गणो ग्राह्यस्तेनांशयोजनेऽप्यन्तराभावादयुक्तम् । अथ सौरवर्षाक्षयमघटीनां चतुःषष्टिरेव गुणो न त्रिषष्टिः । पूर्वमवमानयनार्थमिष्टचान्द्राणां वास्तवत्वेन सौरवर्षाक्षयमघट्यादेस्तत्राभावात् । तेनोक्तरीत्याऽवमघट्यः स्वपञ्चदशांशयुताः क्षेपदिनानीति सिद्धमतो नखांशेत्यत्र दिनांशेति युक्तः पाठस्ततो निरग्रदिनतयाः सौरवर्षाक्षयमघटीयुतेष्टचान्द्रेषु हीना इति युक्तम् ।

तस्माच्छुद्ध्यूनचैत्रादितिथिगणं कृत्वाऽधः सौरवर्षाद्यन्तमघटीभिर्हीनमिति ज्ञेयस्त्वर्थ इति वदन्ति तत्र स्वीयकराभ्रतुरङ्गलवयोजनान्तरं सौरवर्षाद्यन्तमघटीतदंशेन हीनमित्येव त्वर्थसिद्धेः पाठकल्पनस्यान्याय्यत्वात् ॥१३॥

इदानीं विशेषमाह ।

यावत् तिथिभ्योऽभ्यधिकाऽत्र शुद्धिः
प्राक्चैत्रतस्तावदहर्गणः स्यात् ।
प्राक्शुद्धिपूर्वेण तथैव खेटाः
प्राग्वर्षजातैर्ध्रुवकैः समेताः ॥ १४ ॥

**वा. भा.**—अत्र यावच्चैत्रादितिथिभ्यः शुद्धिर्न शुध्यति तावत् पाश्चात्यचैत्रादेरारभ्य तिथीर्गणयित्वा पूर्ववर्षभवैः शुद्ध्यब्दपक्षेपदिनैरहर्गणः साध्यः । तस्मादागता ग्रहाः पूर्ववर्षध्रुवकैश्च युताः कार्याः । यतो ह्यब्दादेरहर्गणस्यान्यरब्दान्तं यावदुपचय इयमेवात्र वासना ॥ १४ ॥

**मरीचिः**-ननु चैत्रादितिथिगणे शुद्धिरूना न स्यात् तदा लघ्वहर्गणः कथं साध्य इत्यतो विशेषमिन्द्रवज्रयाऽऽह यावदिति । अत्र लघ्वहर्गणानयने तिथिभ्यश्चैत्रादितिथिभ्यः शुद्धिरधिका यावत् यत्कालपर्यन्तं स्यात् तावत् तत्कालपर्यन्तम् । इष्टकाले ज्ञातचैत्रादितिथिषु शुद्धेर्हीनत्वेनाहर्गणासिद्धेः। प्राक्चैत्रतः पूर्ववर्षाद्यासन्नचैत्रशुक्लादित इष्टकालपर्यन्तं तिथिगणं गृहीत्वा प्राक्शुद्धिपूर्वेण पूर्ववर्षोत्पन्नशुद्ध्याद्युपकरणैरित्यर्थः । उक्तरीत्याऽहर्गणः स्यादिति नासिद्धिः । नन्वस्माद्ग्रहानयने स्वासन्नवर्षादिसंभूतग्रहध्रुवकयोजनेन च सिद्धत्वग्रहस्य तदहर्गणानीतग्रहेण विसंवादादतो ग्रहानयने विशेषमाह तथेति । यथा पूर्वचैत्रात् पूर्वशुद्ध्यादिभिरहर्गणः साधितस्तथेत्यर्थः । खेटा एतदहर्गणोत्पन्नाः सूर्योदये वक्ष्यमाणानयनात् प्राग्वर्षजातैः पूर्वसौरवर्षादिकाले 'कल्पजचक्र'-इत्याद्युक्तप्रकारेण सिद्धैर्ध्रुवकैः । एवकार इष्टकालासन्नवर्षादिग्रहध्रुवकनिवारणार्थो युक्तः । तथा च संवाद इति न क्षतिः ।

अत्रोपपत्तिः । अयमहर्गणः सौरवर्षादितदन्तरूपद्वितीयसौरवर्षाद्योरन्तरकालावच्छिन्नेष्टकाले साधित इति प्रतिपादनाद्यदा चैत्रादितिथिगणे शुद्धेर्हीनत्वं तदा चैत्रादितिथीनां शुद्धिकालान्तर्गतत्वेन चैत्रप्रारम्भेऽपि पूर्वसौरवर्षसमाप्त्यभावाच्चैत्रादितः शुद्धिदिनैरग्रे सौरवर्षसमाप्तेः सिद्धत्वाच्च । पूर्वचैत्रात् पूर्वशुद्ध्यादिनाऽहर्गणानयनं युक्तम् । अन्यथोक्तरूपाहर्गणस्यासिद्धत्वापत्तेः । अत एव तत्राहर्गणानीतग्रहाः पूर्वध्रुवैर्युक्ताः पूर्वध्रुवसम्बन्धिकालादहर्गणस्यागतत्वादत उक्तमुपपन्नं यावदित्यादि । ननु "यत्र क्वचिच्छुद्धिविधौ यदेह"—इत्यादित्रिप्रश्नाधिकारोक्तविधिना तदा शुद्धिरेव तिथिगणोना । शेषमधः स्वकराभ्रतुरङ्गलवयुतम् । सौरवर्षाद्यवमघट्यादितदंशेन युतम् । ततः क्षेपदिनेभ्यः शोध्यम् । यदा न शुद्ध्यति तदा चतुःषष्टियुतक्षेपदिनेभ्यः शोध्यम् । ततश्चतुःषष्टिभक्तं फलेन निरवयवेनाधःस्थशेषं हीनमभीष्टदिनसूर्योदये सौरवर्षान्ताद्विपरीताहर्गणो भवतीति पूर्वक्रियातोऽत्र विपरीतत्वात् । एतदुत्पन्नो ग्रहः स्वध्रुवेषु शोध्यः पूर्वागतमध्यग्रहो भवतीति प्रकारस्योक्तप्रायत्वादुक्तविशेषाभिधानं गौरवम् । एतत्प्रकारानीतगणान्मूलोक्तप्रकारानीतगणस्यातिमहत्त्वेन गौरवाच्च । अत एव

"यावन्न मेषं व्रजति प्रभाकरस्तावच्च पूर्वध्रुवकान् परित्यजेत् ।
चैत्रे प्रविष्टेऽपि विलोमकर्म वा शुद्ध्या विजह्यादगते क्रियं रवौ ॥
भास्वान्नृणाहर्गणतश्च सिद्धः पात्यो भचक्रात् स्वफलानि चैवम् ।
स्वस्वध्रुवादप्यथ खेचराणां शोध्यानि यत्नात् प्रवदन्ति सन्तः" ॥

इत्यनेन स्पष्टं पूर्वप्रकारस्य गौरवं लल्लेनाभिहितम् । तस्मात् पूर्ववर्षीयोपकरणात् पूर्वचैत्रानपेक्षेण लाघवादानीतोपकरणे तच्चैत्रादितिथिगणद्वारा सिद्धिराचार्योक्तं व्यर्थमिति चेन्न । विपरीतकर्मणि योगेतरत्वप्रतिपादनेन क्षेपयुत इत्यत्रैव विपरीतकर्मान्तसिद्धिरहर्गणोत्पन्नग्रहो ध्रुवेषु हीन इत्याद्यनुपपत्तेश्चतुःषष्टियुतक्षेपदिनविशेषकथनापत्तेश्चेति

ग्रहर्गणस्य सूर्यांशादिज्ञानार्थं गुण-३८४००० हरौ ३८९९६०९ । तत्र गुणनार्थं गुणस्य सहस्रघ्नवेदाष्टराममितस्य खण्डद्वयम् । एकमधोऽवयवैकत्रिंशद्युतपञ्चेशरामाष्टराममितम् ३८३११५ । ३१ । द्वितीयमेकोनत्रिंशदधोऽवयवयुतवेदाष्टाष्टमितम् ८८४ । २९ । प्रत्येकं तदधो हरश्च गोखरसनवाष्टराममितः ३८९९६९ । तत्रापि प्रथमस्थाने गुण-३८३११५।३१ हरौ ३८९९६०९ । एकोनत्रिंशदधोऽवयवयुतत्रिनन्दवेदाङ्कमिते ६४९३ । २९ रपवर्तितौ जातावेकोनषष्टिमितगुण–५९ षष्टिमितहरौ ६० । तथा चात्रोक्तरीत्याऽहर्गणः स्वषष्ट्यंशहीन इति सिद्धम् । द्वितीयस्थाने तु लाघवात् कलात्मकफलानयनार्थं गुणोऽयं–८८४।२९ मेकस्थः ५३०६९ । एतादृशगुण–५३०६९ पूर्वमिद्धहरौ–३८९९६०९ चत्वारिंशदधोऽवयवयुतनवाष्टाङ्कात्यष्टिभि-१७६८९।४० रपवर्तितौ गुणस्थाने त्रयो हरस्थाने द्वाविंशतिः किञ्चिदधोऽवयवयुता । तत्र लाघवार्थं वर्षान्तःपात्यहर्गणद्वारा ग्रहसाधनेन विकलान्तावयवेतराभावदर्शनाच्च हरस्थानेऽधोऽवयवत्यागाद्द्वाविंशतिरेव गृहीताऽतोऽहगर्णस्त्रिगुणो द्वाविंशतिभक्तः फलं कलासु खण्डत्वाद्द्व्योज्यम् । सूर्यतुल्याविव बुधशुक्रौ भगणैक्यत्वात् । अयं सूर्यो वर्षादित इष्टकाले इति तत्सिद्धध्रुवकयुतः कार्योऽपि तत्र सूर्यध्रुवकानयने भगणपूर्त्तिदर्शनेन राश्यादिध्रुवकाभावेन शून्यमितयोजने न विकार इति यथागतमेव फलं सूर्य इति सम्यक् । अत उपपन्नं दिनगण इत्यादिपद्योक्तम् ॥ १५ ॥

अथ चन्द्रानयनमाह ।

रविगुणैस्तिथिभिः पृथगुष्णगु-
र्लवगतः सहितः स हिमद्युतिः ।
स्वनगभागयुतेन दशाहत-
क्षयदिनोर्वरितेन कलान्वितः ॥ १६ ॥

वा. भा.–स रविः पृथक् । रविगुणतिथितुल्यैर्भागैः सहितो हिमद्युतिर्भवतीति प्रसिद्धा वासना । परमेवं तिष्यन्ते । अथ चोद्ध-

यिकः कार्यः । तिथ्यान्तार्कोदययोर्मध्येऽवमशेषम् । तत् सावनम् । तस्य चान्द्रीकरणायानुपातः । यदि त्रिषष्ट्या सावनैश्चतुःषष्टितिथय-स्तदाऽवमशेषान्तःपातिभिः सावनावयवैः किमिति । पूर्वमवमशेषस्य चतुःषष्टिश्छेद इदानीं गुणस्तुल्यत्वात् तयोर्नाशे कृते त्रिषष्टिरेव हरः । फलं तिथ्यात्मकम् । तद्द्वादशगुणं किल भागाः । पुनः षष्टिगुणे कलाः । एवं द्विसप्ततिर्दशगुणाऽवमशेषस्य गुणस्त्रिषष्टिर्हरः । हरगुणौ नवभिरपवर्त्तितौ । हरस्थाने जाताः सप्त ७ गुणस्थानेऽष्टौ दशगुणाः ८० । यो राशिरष्टभिर्गुणितः सप्तभिर्ह्रियते स स्वसप्तमांशेनाधिकः कृतो भवति । अत उक्तं स्वनगभागयुतेन दशाहतक्षयदिनोर्वरितेन कलान्वित इति । एवं ताभिः कलाभिश्च युत औदयिकः शशी स्यादि-त्युपपन्नम् ॥ १६ ॥

**वा.वा.**—रविगुणैस्तिथिभिरिति। अत्रैवं साध्यमानश्चन्द्रस्तिथ्यन्ते भवति। तस्यौदयिकत्वादहर्गणसाधितावमशेषस्य चान्द्रीकरणं क्रियते। अवमशेषस्य चतुःषष्टिश्छेदः। यदि त्रिषष्टिसावनैश्चतुःषष्टिश्चान्द्रा लभ्यन्ते तदाऽव-मशेषान्तःसावनेन किमिति चतुःषष्टितुल्ययोर्गुणहरयोर्नाशे त्रिषष्टिरेव हरः। द्वादशगुणनमंशकरणाय । पुनः षष्टिगुणं कलीकरणायेति गुण-घातो गुणः कृतोऽवमशेषस्य ७२० । गुणहरौ नवभिरपवर्त्त्य गुणस्थाने-ऽशीतिः सप्तमांशस्तु स्वसप्तमांशाधिका दशैव भवन्ति तस्मादुक्तं 'स्वन-गभागयुतेन दशाहतक्षयदिनोर्वरितेन कलान्वितः'—इति । अहारराशे रूपं हरः कल्प्यः। दशानामधो रूपं हरस्तदधः सप्तमांशो धनगतः स्थाप्यः । ततः सूत्रेण—

"स्वांशाधिकोनः खलु यत्र तत्र भागानुबन्धे च लवापवाहे ।
तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन तु तेन भागान्"॥

इति खवसूनां सप्तमांश इति स्पष्टम् ॥ १६ ॥

इति वासनावार्त्तिके प्रत्यब्दशुद्धिः।

मरीचिः—अथ लाघवादेतदहर्गणानयद्वारा ज्ञातावमशेषरूपभाज्याका-च्चन्द्रसाधनं लघ्वहर्गणनिरपेक्षं द्रुतविलम्बितेनाह रविगुणैरिति । ति-थिभिरिष्टकालाव्यवहितपूर्वचान्द्रमासान्ताद्गणितागततिथिभिरित्यर्थः । द्वादशगुणितैर्लवगतो भागादिकः सूर्यः प्रागानीतो युतः । योजनानन्तरं सूर्यराश्याद्यवयवज्ञानासंभव इति पुनः सूर्यानयनं कार्यमिति गौरवभयात् पृथगित्युक्तम् । वस्तुतोऽत्र कार्यकाले प्रमादात् पृथगित्यायातम् । स सिद्धः । अहर्गणानयने चतुःषष्टिभक्तेन फले दिनद्वये आगते सति यदु-र्वरितं शेषं केवलं ग्राह्यम् । तद्दशगुणितं तेन स्वसप्तांशयुतेन कला-स्थाने युतः कार्यश्चन्द्रः स्यात् ।

अत्रोपपत्तिः । सूर्यचन्द्रान्तरद्वादशभागैरेका तिथिर्भवतीति पूर्वं बहुधा प्रतिपादनाद्गततिथयो द्वादशगुणाः सूर्यचन्द्रान्तरांशा भवन्ति-तत्र राश्याद्यवयवात्मकचन्द्रस्य प्रयोजनाद्वंशान्ते तयोः समत्वाच्च भग-णज्ञाननिरपेक्षेण च लाघवान्मासादेर्गततिथयो गृहीताः । परमेते तिथ्यन्तकाले । अपेक्षिताः सूर्योदयासन्नकाले तत्रैव सूर्यज्ञानात् । अत एषां तदन्तरकालजसूर्यचन्द्रान्तरभागा योज्याः । तज्ज्ञानार्थं तु प्रथमतोऽवमशेषस्य चतुःषष्टिहरस्य सावनस्य तदन्तरकालात्मकस्य कल्प-कुदिनैः कल्पचान्द्रास्तदाऽवमशेषमितसावनैः किमित्यनुपातेन चान्द्रीकरणे शेषस्य कल्पचान्द्रदिवसाः १६०२९९९०००००० गुणाः । हरघातो हर इति चतुः-षष्टिगुणितकल्पदिवसा हर एतन्मितः । १०००९८६६५२८००००० सिद्धः ।

तत इदं चान्द्रांशत्वाद् द्वादशगुणमन्तरांशास्तदन्तरकाले भवन्ति । तत्राचार्यैः कलानयनार्थं षष्टिगुणः कृत इति गुणघातो गुण इति विंश-त्यधिकसप्तशत-७२० गुणितकल्पचान्द्रदिवसाः ११६४१५९२८०००००००० गुणः सिद्धः । अत्र गुणहरौ प्रयुतघ्नभूनवनवरसद्विवेदवेदचन्द्रमिते-१४४२६९९१०००००० रपवर्तितौ गुणस्थानेऽशीतिः ८० हरस्थाने किञ्चि-दूनाः सप्त ६।५९।५५ ते लाघवाद्विकलाद्योऽवयवेष्वन्तरादर्शनाच्च संपूर्णा

एव धृताः सप्त ७ । अत्रापि लाघवार्थं गुणस्य खण्डद्वयमेकं सप्ततिमितम् ७० । परं दशमितम् १० । प्रत्येकं हरश्च । प्रथमस्थाने गुणहरौ हरेणापवर्त्य गुणस्थाने दश । अतोऽयमशेषं दशगुणम् । तत्स्वसप्तभागयुतं खण्डत्वादिति सिद्धमुक्तम् । इदं द्वादशगुणतिथिष्वधो योज्यं सूर्योदयासन्नकाले सूर्यचन्द्रान्तरभागज्ञानार्थम् । ततोऽन्तरभागाः सूर्ये योज्याश्चन्द्रः स्यादित्याचार्यैर्द्वादशगुणगततिथिभिरवमशेषोत्थफलेन च सूर्यः पृथग्योजितः । अत्र चन्द्रध्रुवको न योज्यः । सूर्यस्य वास्तवस्य ग्रहणात् । ध्रुवकस्तु प्रकारान्तरेण चन्द्रसाधने उपयुक्त इत्यत उक्तं रविगुणैरित्याद्युपपन्नम् ॥ १६ ॥

इदानीं भौमानयनमाह ।

**दिनगणार्धमधो गुणसंगुणं**
**द्युगणसप्तदशांशविवर्जितम् ।**
**लवकलादिफलद्वयसंयुतः**
**क्षितिसुतध्रुवकः क्षितिजो भवेत् ॥ १७ ॥**

**वा. भा.**—स्पष्टार्थमिदम् ।

अत्रोपपत्तिः । दिनगणार्धे भागा इति प्रत्यहं त्रिंशत् कला गृहीताः $\frac{0}{30}$ । तत् पृथक् त्रिगुणं जातम् $\frac{1}{30}$ । एताः कलाः पूर्वकलाभिश्चैकृता जाताः $\frac{31}{30}$ । एतत् कुजगतेरधिकमतोऽतः कुजगतिं विशोध्य शेषम् । ० । ३ । ३१ । ५३ । अनेन सप्तदशगुणेनैका कला भवति । अत उक्तं द्युगणसप्तदशांशविवर्जितमिति । पूर्वफलेन भागादिनाऽनेन च कलादिना भौमध्रुवको युक्तः कुजो भवति । यतोऽयमहर्गणोऽर्कोब्दान्ताद्ध्र्वमतस्तत्तुल्यं फलं रविमण्डलान्तिके योज्यमित्युपपन्नम् ॥ १७ ॥

**मरीचिः**—अथ भौमानयनं द्रुतविलम्बितेनाह दिनगणार्धमिति । ऊर्ध्वाधःक्रमेण लवादिकलादिफलद्वयं सिद्धम् । ताभ्यां वर्षादौ साधितमङ्गलध्रु-

वक्रो युतो यथायोग्यम् । अहर्गणकाले मङ्गलो भगणादिकः स्यात् । पूर्वार्धं स्पष्टम् ।

अत्रोपपत्तिः । कल्पकुदिनैर्भौमभगणभागा नखनवाद्रिरसद्विगजेषुगजरसद्व्यष्टमिता-८२६८५८२६७९२० स्तदाऽहर्गणेन क इत्यनुपातेन गुणस्य लाघवार्थं खण्डद्वयम् । एकं सहस्रघ्नतत्त्वाश्विगजेषुगोष्टाष्टाद्रिमितम् ७८८९५८२२५०००।नखनवद्विवेदखाभ्राभ्रनवसप्तराममितम् ३७९०००४२९२० अपरम् । प्रत्येकं हरश्च । प्रथमस्थाने गुणहरौ गुणेनापवर्त्य हरस्थाने द्वयमतोऽहर्गणार्धमंशा इति सिद्धम् । द्वितीयस्थाने कलादिफलानयनार्थे लाघवाद्गुणः षष्टिगुणः २२७४००२५७५२०० अनेनाहर्गणे च गुण्यमाने इष्टोनयुक्तेनेति विधिना खखाष्टगोगोनखाद्रिगजद्व्यङ्कमितेष्टेन ९२८७२०९९८०० युतो गुणीकृतः २३६६८७४६७५००० । अत्र पूर्वापवर्त्ताङ्केन ७८८९५८२२५०० गुणहरावपवर्त्तितौ जातौ गुण३हरौ २ । अतोऽंशादिफलमेव त्रिगुणं कलात्मम् । ६६८७४६७४६७५००। अत्र पूर्वापवर्त्ताङ्केन ७८८९५०२२ द्वितीयखण्डमिदं पूर्वकल्पितेष्ट—९२८७२०९९८०० गुणिताहर्गणस्य कल्पकुदिनांशेन हीनं कार्यम् । पूर्वमधिकग्रहणात् । अत्रापि गुणहरौ गुणेनापवर्त्तितौ हरस्थाने किञ्चिन्न्यूनाः सप्तदश ते पूर्णा एव गृहीता अन्तराभावदर्शनात् । अतोऽधोंऽशादिफलं त्रिगुणमहर्गणसप्तदशांशेन हीनं कलात्मकं द्वितीयखण्डफलमुक्तम् । अतोऽनयोर्योगो वर्षादितो मङ्गलभोगो भवतीति । संपूर्णभोगज्ञानार्थं भौमध्रुवोऽस्य योज्यस्तत्र ध्रुवे एव फले यथायोग्यं योजिते कृतेऽन उपपन्नं दिनगणार्धमित्यादि ॥ १७ ॥

इदानीं बुधचलानयनमाह ।

दिनगणः कृतसंगुणितः पृथग्-
गुणगुणः खगुणेन्दुभिरुद्धृतः ।
फलयुतः खलु तेन लवादिना
बुधचलं भवति ध्रुवकोऽन्वितः ॥१८॥

**वा. भा.**—अत्रोपपत्तिः । अहर्गणश्चतुर्गुणो भागा भवन्तीति प्रसिद्धम् । अथ ज्ञचलस्य कल्पभगणानां भागान् कृत्वा तेभ्यश्चतुर्गुणान् कुहान् विशोध्य शेषस्यास्य १४५६५३८३४२४० द्वादशांशेनानेन १२१३७८१९५२० शेषं कुहाश्चापवर्त्तिता जाताः शेषस्थाने द्वादश १२ कुहस्थाने खगुणेन्दवः १३० । अतः पृथगहर्गणो द्वादशभिर्गुण्यः । पूर्वं चात्र चतुर्गुणोऽहर्गण आसीत् । स एव त्रिगुणो द्वादशगुणो भवतीति गुणगुण उक्तः । पृथक् स्थितो यश्चतुर्गुणितः स एव त्रिगुणीकृतस्तेन द्वादशगुणितो जातः । खगुणेन्दुभिर्भक्तः फलभागैः पृथक् स्थितश्चतुर्गुणोऽहर्गणो युतः कार्यः । एवं ते भागाः प्राग्वद् ध्रुवके क्षेप्या इत्युपपन्नम् ॥१८॥

**मरीचिः**—अथ बुधशीघ्रोच्चानयनं द्रुतविलम्बितेनाह दिनगण इति । फलेन युतः पृथगानीतफलेन चतुर्गुणाहर्गणो युत इत्यर्थः । तेन योगसिद्धेन भागादिना ध्रुवकः स्वस्य युतः । बुधशीघ्रोच्चं भवति । शेषं स्पष्टम् ।

अत्रोपपत्तिः । अत्रापि बुधशीघ्रोच्चभगणांशस्य खसिद्धवेदाग्निषडङ्कभूत्रिसप्तेषुवेदाङ्कमितस्य गुणस्य ६४५७३१९६३४२४० खण्डद्वयमेकं लवघ्नगजेषुषण्नृपभूरामाङ्कमितम् ६३११६६५८००००० । परं खसिद्धवेदाग्निगजरामेषुषडेषुशक्रमितम् १४५६५८३४२४० । प्रत्येकं हरश्च तत्र प्रथमस्थाने गुणहरौ हरेण १५७७९१६४५०००० अपवर्त्तितौ गुणस्थाने चत्वारः । द्वितीयस्थाने गुणहरौ नखेषुगोभूरामगजाद्रिविश्वार्कमितेन १२१३७८३१९५२० रपवर्त्तितौ गुणस्थाने द्वादश हरस्थाने किञ्चिन्न्यूनं त्रिंशदधिकशतम् । ते संपूर्णा एव गृहीताः । अत्रापि द्वाभ्यामपवर्त्तेऽप्याचार्यैश्चतुरैरपवर्त्तो न कृतो गणितक्रियागौरवात् । तथा च चतुर्गुणोऽहर्गणः प्रथमखण्डफलम् । द्वादशगुणिताहर्गणस्य खत्रीन्दुलवो द्वितीयखण्डफलम् । अत्र लाघवार्थं चतुर्गुणित एव त्रिगुणितः कृत आचार्यैः । तयोर्योगोऽंशाद्यं बुधशीघ्रोच्चं वर्षादित इति ध्रुवयोजितं कार्यमत उपपन्नं दिनगण इत्यादि ॥ १८ ॥

इदानीं गुरोरानयनमाह ।

द्युमणिभिः कुनगैर्द्युगणो हृतो
लवकलाः स्वमृणं ध्रुवके गुरुः ।

वा. भा.—अत्रोपपत्तिः । किञ्चिन्न्यूनाः पञ्च कला गुरोर्गतिरिति द्वादशभिर्दिनैरेको भागः । यन्न्यूनं तेन रूपे हृते एकसप्ततिर्लभ्यते । अत एकसप्तत्या दिनैरेका कलोनेत्युपपन्नम् ।

अथ शुक्रचलानयनमाह ।

ऋतुभिरब्धिदिगैर्दशसंगुणात्
फललवाः स्वमृणं ध्रुवके सितः ॥ १९ ॥

वा. भा.—अत्रोपपत्तिः । अत्र सुखार्थमहर्गणं दशगुणं कृत्वा भागहारद्वयेन फले साधिते । तत्र दशभ्यः षड्भिर्भागे हृते लब्धमेको भागश्चत्वारिंशत् कलाः १ । ४० । इदं दिनगतेरधिकं जातम् । अस्माद् गतिं विशोध्य शेषम् ० । ३ । ५२ । १५ । २५ । अनेन दशभ्यो भागे हृते लब्धाः पञ्चपञ्चेन्दवः १५५ । अतोऽहर्गणाद्दशघ्नात् पृथक् षड्भिः पञ्चतिथिभिश्च हृताल्लब्धे भागाद्ये धनर्णरूपे फले इत्युपपन्नम् ॥१९॥

मरीचिः—अथ द्रुतविलम्बितेन गुर्वानयनं शुक्रशीघ्रोच्चानयनं चाह । द्युमणिभिरिति । अहर्गणो द्वादशभक्तः फलमंशादि तद्गुरुध्रुवके संयुतम् । अहर्गण एकसप्ततिभक्तः फलं कलादि तत् तस्मिन्नेव ऋणं हीनं गुरुः स्यात् । दशगुणिताहर्गणात् षड्भक्तात् फलं भागादि तत् शुक्रशीघ्रोच्चध्रुवके युतं पुनर्दशगुणाहर्गणात् पञ्चपञ्चाशदधिकशत—१५५ भक्तात् फलमंशादि तत् तस्मिन्नेव हीनं सितः शुक्रशीघ्रोच्चं स्यादिति तात्पर्यार्थः ।

अत्रोपपत्तिः । खखाष्टविकृततिथ्यर्कभूविश्वमित-१३११२१५२३८०० गुरुभगणांशरूपगुणेन गुण्यमाने "इष्टोनयुक्तेन"—इति विधिना खखाद्रिविश्वतिथ्यद्रिराममितेष्टेन ३७१५१३७०० युतो गुणो जातः खाभ्रबाणगिरि-

रामखत्रिगोशक्रविश्वमितः १३१४९३०३७५०० । अनेनाहर्गणो गुण्यः कल्पकुदिनैर्भाज्य इति । गुण-१३१४९३०३७५००हरौ १५७७९१६४५०००० गुणेनापवर्त्य हरस्थाने द्वादशातोऽहर्गणो द्वादशभक्त इति सिद्धम् । अत्राधिकत्वात् कल्पितेष्टगुणिताहर्गणस्य कल्पकुदिनांशो हीन इत्यत्रापि गुण-३७१५१३७०० हरौ १५७७९१६४५०००० गुणेनापवर्त्य हरस्थाने किञ्चिन्न्यूनाः षष्टिद्विवेदाः * । अत्रान्तरादर्शनेन लाघवाच्च सम्पूर्णा एव धृताः ४२६० । अनेनाहर्गणे भक्ते फलमंशाद्यमित्याचार्यैः कलाद्विनिमित्तं षष्टिर्गुणः कल्पितस्तेन गुण-६०हरौ-४२६० गुणेना-६०पवर्त्य हरस्थाने७१ । तथा चाहर्गण एक सप्ततिभक्तः फलं कलाद्यम् । द्वादशभक्ताहर्गणांशादिफले हीनं ध्रुवयुतं कार्यम् । तत्र ध्रुव एव फले क्रमेण धनर्णे कृते धने धनर्णयोर्योगान्तरप्रसिद्धेः सर्वजनसिद्धत्वादत उपपन्नं द्युमणिभिरित्याद्यर्धम् ।

अथैवमेव खार्कात्यष्टिद्विषडशीतिद्वितत्त्वमित-२५२८०६०२०१७१२० शुक्रशीघ्रोच्चभगणांशरूपगुणस्याशीत्यष्टदन्तेषुखखधृतिदिङ्मितेष्टयोजनेऽयुतघ्नपञ्चाद्रिषष्टिगजगोद्विरसयममिते। गुणो जातः २६२९८६०७५००००। अत्र गुणहरौ सहस्रघ्नपञ्चाद्रिषष्टिगजगोद्विषड्यममितै—२६२९८६०७५००० रपवर्त्तितौ दशमितगुणषण्मितहरावुपपन्नौ ।

अथात्रेष्टगुण-१०१८००५३२८८०हरौ १५७७९१६४५०००० गजाष्टदन्तेषुखखधृतिदिङ्मितै १०१८०५३२८८रपवर्त्तितौ जातौ गुणहरौ १० । १५५ । तेन दशगुणाहर्गणः पञ्चपञ्चाशदधिकशतभक्तः फलं भागा हीनं कार्यम् । तत्र ध्रुव एव फले भागाद्ये क्रमेण युतहीने कृते इत्युपपन्नमृतुभिरित्यादि ॥ १९ ॥

* वस्तुतो हरस्थाने ४२४७ । १५...इत्यादि फलमागच्छति तत्र लाघवादाचार्यप्रकारोपचार्थं "किञ्चिन्न्यूनाः षष्टिद्विवेदाः" इति गणितज्ञैर्ध्येयम् ।

इदानीं शनेरानयनमाह ।

द्विघ्नो दिनौघः पृथगत्तभक्तो
लिप्ता विलिप्ता ध्रुवके स्वमार्किः ।

वा. भा—अत्रोपपत्तिः । गतिः कलाद्वयम् । अथोऽवयवात् पञ्चभिर्दिनैर्द्वे विकले च भवत इत्युपपन्नं द्विघ्नो दिनौघ इत्यादि ।

इदानीं विधूच्चानयनमाह ।

दिग्भिर्गजेभैश्च हृतो दिनौघः
क्षेप्यो ध्रुवांशेषु भवेद्विधूच्चम् ॥ २० ॥

वा. भा.—अत्रोपपत्तिः । कलाषट्कं गतिरिति दशभिर्दिनैर्भागः । भागादिगतेः कलाषट्कं विशोध्य शेषेणानेन ० । ० । ४० । ५३ । ५६ रूपे हृते लब्धा गजेभाः ८८ । अतो दिग्भिर्गजेभैरित्याद्युपपन्नम् ॥ २० ॥

मरीचिः—अथ शनेश्चन्द्रोच्चस्य चानयनमिन्द्रवज्रयाऽऽह द्विघ्न इति स्पष्टार्थम् ।

अत्रोपपत्तिः । खखाष्टषड्रामरसाग्निपञ्चाष्टपञ्चभूपराममितशनिभगणकलारूपगुणस्य ३१६५८५३६३६८०० खण्डद्वयम् । एकं लक्षघ्नगोदन्तगजेषुदिनराममितम् ३१५५८३२९००००० । परं तु विकलात्मकं सहस्रघ्नाष्टनखवेदसिद्धभूखरसमितम् ६०१२४४२०८००० । अत्र प्रथमस्थाने गुण-३१५५८३२९००००० हरौ १५७७९१६४५०००० हरेणापवर्त्ये गुणस्थाने द्वयम् । द्वितीयस्थाने गुण-६०१२४४२०८००० हरौ १५७७९१६४५०००० सहस्रघ्नाब्धिखस्वर्गरसखखदन्तमितैरपवर्तितौ । गुणस्थाने द्वयम् । हरस्थाने किञ्चिदूनाः पञ्च ४ । ५५ एतेऽन्तराभावदर्शनात् संपूर्णाः पञ्च धृताः । अत उक्तदिशा पूर्वार्धमुपपन्नम् ।

अथैवमेवाशीत्यष्टाष्टदिग्धृतिमप्तेषुसप्तेन्दुमितचन्द्रोच्चभगणांशरूपगुणस्य २०५७१८१०८८८० खण्डद्वयम् । एकं सहस्रघ्नशरवेदभूपगोसप्तसप्ततिथिपमितम् १५७७९१६४५००० । परमशीत्यष्टाग्निषड्नेदात्कृत्यङ्कात्यष्टिमि-

तम् १७९२६४६३८८०। तत्र प्रथमस्थाने गुणहरौ गुणेनापवर्त्त्य हरस्थाने दश द्वितीयस्थानेऽपि गुणेनापवर्त्त्य हरस्थाने किञ्चिदधिकाष्टाशीतिः ८८। १। परमविकारदर्शनात् पूर्णा गृहीता अत उपपन्नमुत्तरार्धम्। इतरमन्दोच्चानां सौरैकवर्षे संपूर्णैकविकलाभोगाभावाद्बर्षादितद्ध्रुवतुल्यत्वेनाहर्गणात् पृथगानयनं न कृतमाचार्यैर्व्यर्थप्रयासादिति ध्येयम्॥२०॥

अथ पातानयनमाह ।

**ताडितः खदहनैर्दिनसङ्घः**
**षट्कषट्कशरहृत् फलमंशाः ।**
**स्वं ध्रुवे कुमुदिनीपतिपातो**
**राहुमाहुरिह केऽपि तमेव ॥ २१ ॥**

**वा. भा.**—अत्रोपपत्तिः। कल्पराहुभगणानां राशिभिः कुदिनेषु भक्तेषु लब्धं षट्कषट्कशराः ५६६। एभिर्द्युगणे भक्ते राश्यादि फलम्। तद्भागादिकं कर्त्तुं ताडितः खदहनैरित्युपपन्नम् ॥ २१ ॥

**मरीचिः**—अथ चन्द्रपातानयनं "स्वागतेति रनभाद्गुरुयुग्मम्" इत्युक्तया स्वागतयाऽऽह ताडित इति । कुमुदिनीपतिपातश्चन्द्रपातः । अस्य पश्चिमगत्या भगणकथनान्मेषमीनकुम्भेत्यादिविपरीतगणनयाऽऽगतराश्याद्यवयवानुसारेण ज्ञेयम् । अत एव—

"विलोमगतयः पातास्तद्वच्चक्राद्विशोधिताः"* ।

इति सूर्यसिद्धान्तोक्तेर्द्वादशराशिभ्यः शोधितस्यान्यग्रहवन्मेषवृषादिक्रमेण नायुक्तेति ध्येयम् ।

ननु वशिष्ठसिद्धान्ते—

"राहोर्वेदाङ्गनागाश्विशैलबाणखकुञ्जराः"—इत्यनेन ।

आर्यसिद्धान्तेऽपि—

* द्रष्टव्यो मुद्रितसूर्यसिद्धान्ते मध्यमाधिकारे ५४ श्लो. ।

"स्वर्भानोर्विदतर्काष्टद्विशैलाग्नखकुञ्जराः" ।

इत्यनेन राह्वानयनमुक्तं युक्तं चैतत् ।

"राहुश्चतुष्टयस्थो निधनाय निरीक्षितो भवति पापैः" * ।

इत्यादौ "अजवृषभकर्कलग्ने रक्षति राहुः समस्तपीडाभ्यः" ।

इत्यादौ जातकसंहितासु चान्यग्रहलग्नवद्राहुर्धिष्ठितस्थानोपयोगात् । अन्यथाऽर्कादीनां साधनकथनस्य व्यर्थत्वापत्तेः । अत एव गणितस्कन्ध इति स्कन्धोपयुक्तत्वेन मुख्य इत्यभिज्ञानामुक्तं युक्तम् । अतस्तदानयनं न कृतमित्यत आह राहुमिति । इह गणितस्कन्धे केऽपि वशिष्ठादयस्तं चन्द्रपातम् । एवकारोऽन्ययोगव्यवच्छेदार्थः । राहुसंज्ञमाहुः । तथा च तैश्चन्द्रपातो नोक्तस्तत्स्थाने राहुरुक्त इति । राहोरेव चन्द्रपातत्वमुक्तं भवतीति दर्शनाच्चन्द्रपातराहुपर्यायशब्दौ घटकलशवदिति नोक्तदोष इति भावः ।

"दक्षिणोत्तरतोऽप्येवं पातो राहुः स्वरंहसा" † ।

इति सूर्यसिद्धान्तोक्तेश्च ।

अत एव विवाहवृन्दावने—

"किञ्च गोलगणितेषु जिष्णुजः सोमरोमकमयादयोऽपि च ।
पर्ययेण ननु राहुपातयोर्नामनी विदधुरेव तान्त्रिकाः" ॥ इत्युक्तम् ।

अत्रोपपत्तिः । नृपाश्वाब्धिरामाद्रिसप्ताष्टभमितचन्द्रपातभगणराशिरूपगुण—२७८७७३४०१६ कुदिनमितहरौ १५७७९१६४५०००० । गुणेनापवर्त्य हरस्थाने किञ्चिदधिका अपि पूर्वरीत्या संपूर्णाः षड्रसेषुमिता-५६६ गृहीतास्तेनाहर्गणो हरभक्तः फलं राश्याद्यमित्यंशादिग्रहणार्थं त्रिंशद्गुणाहर्गणः कृतः । अत्र गुणहरयोर्द्व्यपवर्तनसम्भवेऽपि गुणनक्रियागौरवाच्च कृतमाचार्यैः । एतेन "तिथिगुणास्त्रिगजाश्विहृतस्तमः" इति "करणकु-

* वराहमिहिरकृते बृहज्जातके स्वल्पजातके चारिष्टभङ्गाध्याये इत्यादि पद्यम् ।
† द्रष्टव्यो मुद्रितसूर्यसिद्धान्ते स्पष्टाधिकारे ६ श्लो. ।

ग्ठीरवो*"-क्तं निरस्तं गौरवात् । अयं पातो वर्षादित इति ध्रुवेषु योज्यः । कल्पादित इष्टकालपर्यन्तं भचक्रभोगसंख्या पश्चिमगत्या स्यादत उपपन्नं ताडित इत्यादि पात इत्यन्तम् । शेषोपपत्तिस्तु क्रान्तिवृत्तचन्द्रविक्षेपवृत्त-सम्पातस्य पातत्वेन प्रतिपादनात् तद्रासन्ने चन्द्रे राहुग्रस्तनिशाकररूप-ग्रहणसम्भवात् पातस्थाने राहुर्वसतीति तैर्ज्ञातम् ।

"सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते निशाकरे" ॥

इति स्मृत्या राहोर्ग्रहणे कारणत्वाच्च । किं च विष्णुनाऽमृतपा-नकाले राहोर्वधोपक्रमात् तस्यामृतांशलालसस्यामृतरूपचन्द्रभक्षणार्थं पातस्थाने वसतिर्युक्ता चन्द्रस्य निकटत्वात् । तेन चन्द्रपातराह्वोरभेदा-द्युक्तमुक्तं राहुमाहुरिह केऽपि तमेवेति ।

एतदभिप्रायनिबन्धनं विवाहवृन्दावनेऽपि व्यक्तम् ।

"वेश्म चास्य शशभृद्विमण्डलक्रान्तिमण्डलमिथश्चतुष्पथम् ।
वृत्तयोः पतनमेव पात इत्याहुरत्र किल राहुरीत्यते ॥
आपतन्तममृतद्युतिं सुधास्वादनदानहवनांशलालसः"—इति ।

केचित् भगणानुपातेनानीतः पातः स द्वादशशुद्धो राहुरिति तावनुलोमविलोमगतिक्रमेण भिन्नावित्याहुः । भौमादिपातानां ध्रुवतु-ल्यत्वेन ज्ञानादहर्गणद्वारा पृथगानयनं न कृतमाचार्यैः ॥ २१ ॥

इदानीं प्रकारान्तरेण ग्रहानयनमाह ।

**लब्धाहताद्दिनगणाच्छशिषट्कशक्र-**
**दिग्भिर्नगाष्टनगभूतिथिभिः क्रमेण ।**
**देवाष्टखाङ्कशशिभिश्च रसाग्निवेद-**
**सिद्धैः खखाब्धिदहनाश्वयमेन्दुभिश्च ॥ २२ ॥**

---

* नायं ग्रन्थः संप्रत्युपलभ्यते ।

भूपाङ्घ्रिलोचनरसैः खखखाभ्रनन्द-
नन्दाश्विभिर्गगनखाभ्रगजाङ्कनागैः ।
खाभ्राभ्रषड्गजधृतिप्रमितैश्च भक्ताद्-
भागादिकानि हि फलानि रवेः सकाशात् ॥२३॥
विधोः फलं खाश्विगुणं विधेयं
ग्रहध्रुवाः स्वस्वफलैः समेताः ।
ते वा भवन्ति द्युचराः क्रमेण
भागादिकः स्यात् फलमेव भानुः ॥ २४ ॥

**वा. भा.**—स्पष्टम् ।

अत्रोपपत्तिः । यदि कल्पकुदिनैः कल्पभगणभागा लभ्यन्ते तदाऽहर्गणेन किमिति । एवं त्रैराशिके कृते पश्चात् संचारः* । यदि भगणभागमिते गुणके कुदिनानि हारस्तदा लक्षमिते किमिति । एवं लक्षगुणकुदिनेभ्यः पृथग् भगणभागहृतेभ्यो यानि फलानि तानि लक्षाहतस्य द्युगणस्य भागहारा भवन्ति विधोस्तु लक्षेण विंशत्या च गुणितेभ्यः कुदिनेभ्यो हारः साध्यते । गतेर्बहुत्वादित्युपपन्नम् ॥ २२–२४ ॥

**मरीचिः**-ननु पूर्वानीतचन्द्रेचन्द्रध्रुवक्षयोजनाभावाच्चन्द्रध्रुवानयनस्य व्यर्थत्वापत्तेरित्यस्वरसात् । प्रकारान्तरेण ग्रहानयनं लाघवात् सिंहोद्धताभ्याम् ।

"आख्यानकी स्यात् प्रकटीकृतार्थे यदीन्द्रवज्राचरणः पुरस्तात् ।
उपेन्द्रवज्राचरणास्ततोऽन्ये विपर्ययोक्ता विपरीतपूर्वा" ॥

इत्युक्तलक्षणादाख्यायिकया चाह लक्षाहतादिति । सकाशात् तमारभ्य क्रमेण उत्क्रमक्रमेण भागादिकानि फलानि भवन्ति ।

---

* यदि कल्प्यते $\frac{\text{भगणांशाः}}{\text{कुदिनानि}} = \frac{१०००००}{\text{या}}$ तथा विलोमतः $\frac{\text{कुदिनानि}}{\text{भगणांशाः}} = \frac{\text{या}}{१०००००}$

$\text{या} = \frac{\text{कुदिनानि} \times १०००००}{\text{भगणांशाः}}$ । अयमेव प्राचीनैः संचारः कथ्यते ।

तत्र चन्द्रस्य फलं विंशतिगुणं कार्यम् । वर्षादिग्रहध्रुवाः स्वस्वफलैरं-शादिभिर्युक्ताः सन्तस्ते पूर्वानीता एव ग्रहा भवन्ति । क्रमेण । ननु सौरवर्षादौ रवे राश्यादिध्रुवकाभावात् । तद्योजने सूर्यफलस्यान्यग्रहव-द्विकाराभावेन किं योज्यमत आह भागादिक इति । आनीतफलं केवलम् । एवकारेण किञ्चिद्योजनेऽस्य व्यवच्छेदः । भागादिकः सूर्यः स्यात् । तथा च विकाराभावेऽपि सूर्यसिद्धौ न क्षतिरिति भावः ।

अत्रोपपत्तिः । कल्पकुदिनैः १५७७९१६४५0000 कल्पभगणभागा उक्तक्रमेण सू० १५५५२00000000 । चं० २0७९११८८000000 । मं० ८२६८५८२६७९२0 । बु० शी० उ० ६४५७३१९६३४२४0 । बृ० १३११२१५२३८00 । शु० शी० उ० २५२८0६0२१७१२0 । श० ५२७६४२२७८८0 । चं० उ० १७५७१८१0८८८0 चं० पा० ८३६३२0२0४८0 लभ्यन्ते तदेष्टाहर्गणेन क इत्यनुपातेन भगणां-शमितगुणकुदिनमितहरौ क्रमेणैतैरङ्कैः—

सू १५५५२000 ।

चं० २0७९११८८0 ।

मं० ८२६८५८२ । ४0 । ४५ । ७ । १२ ।

बु० शी० उ० ६४६७३१९६ । २0 । ३२ । ३८ । २४ ।

बृ० १३११२१५ । १४ । १६ । ४८ ।

शु० शी० उ० २५२८0६0२ । १0 । १८ । १९ । १२ ।

श० ५२७६४२ । १६ । २२ । ४ ४८ ।

चं० उ० १७५७१८१ । ५ । १९ । ४0 । ४८ ।

चं० पा० ८३६३२0 । १२ । १७ । १६ । ४८ ।

अपवर्त्तितौ गुणस्थाने सर्वेषां लक्षसंख्योत्पन्ना १00000 । हरस्थाने सावयवा उत्पन्ना अपि लघ्वहर्गणाद्ग्रहानयने निरन्तरदर्शनादेकत्रैव हरा लाघवात् कृतास्ते उक्ताङ्कमिता उत्पन्नाः । तत्र चन्द्रहरेऽपवर्त्तनेन सिद्धः सावयवः ७५८९ । २१ । अनेनाधोऽवयवहीनेन भक्ते चन्द्रस्य बहुगतिमत्त्वाद्-

बहून्तरमिति चन्द्रहर: सावयव: । एकत्र करणार्थं विंशतिगुणित: सिद्धो नगाष्टनगभूतिथिमित: १५१७८७ । अत एव हरोपचयात् फलापचय इति विंशतिगुणहरोपचयाद्विंशतिगुणितफलापचय: सिद्धोऽन: फलं विंशतिगुणं कृतम् । एतेंऽशाद्या ग्रहा वर्षादित इति संपूर्णभोगज्ञानार्थं ध्रुवयुता: कार्या: । तत्र सूर्यस्य राश्यादिध्रुवाभावात् फलमेव वास्तव: सूर्य:, अत उपपन्नं लक्षाहतादित्यादि भानुरित्यन्तं पद्यत्रयेणोक्तम् ॥ २२–२४ ॥

इदानीं दिनगतिसाधनमाह ।

महीमितादहर्गणात् फलानि यानि तत्कला: ।
भवन्ति मध्यमा: क्रमान्नभ:सदां द्युभुक्तय: ॥२५॥
समा गतिस्तु योजनैर्नभ:सदां सदा भवेत् ।
कलादिकल्पनावशान्मृदुर्द्रुता च सा स्मृता ॥ २६ ॥

**वा. भा.**–अत्रोपपत्तिस्त्रैराशिकेन । पूर्वं गतिर्योजनात्मिका ग्रहाणां तुल्यैवोक्ता । इदानीमतुल्या । सा कलादिकल्पनावशात् ॥ २५–२६ ॥

**मरीचि:**–नन्वेते ग्रहभोगा: प्रतिदिननियतभोगगणनया भवन्तीति प्रतिदिनग्रहभोगरूपा मध्यमा गति: कथं ज्ञेयाऽत: प्रमाणिकयाऽऽह महीमितादिति । महीमितादेकमितादहर्गणाद्यानि पूर्वोक्तप्रकारेण ग्रहफलानि तेषां कला ग्रहाणां क्रमान्मध्यमा द्युभुक्तयो दिनगतयो भवन्ति । अत्र फलानीत्युक्तेन ध्रुवयोजनं कार्यं नेति ध्येयम् । यथाऽहर्गण: १, लक्षगुण: १००००० सूर्यहर-१०१४६१ भक्त: फलमंशादि ० । ५९ । ८ । ९ । एतत्कला: ५९ । ८ । ९ । सूर्यस्य कलात्मिका गतिरेकदिने । एवं सर्वेषां स्वहरभक्तस्य कल्पगतय आनेया: । अस्य प्रकारस्य स्थूलत्वात् स्थूलगतिरित्येकाहर्गणात् "द्युचरचक्र"–त्यादिनाऽऽनीता भगणादिफलकला: सूक्ष्मगतयो भवन्तीति सूचनार्थं साधारण्येन फलानीत्युक्तम् । एता अवयवानवधित्वाच्च सिद्धा: पठिता: । एतेन ज्ञातग्रहस्य स्वमध्यमभुक्तिरेकादिगु

ष्विता योषिता अहर्गणसाधनं विनाऽपि ग्रहज्ञानं भवतीति ग्रहसाधन लाघवं दर्शितम् ।

अत्रोपपत्तिः । कल्पकुदिनैः कल्पभगणकलास्तदैकमिताहर्गणेन का इत्यनुपातेनैकदिनभोगो मध्यमगतिः । उपचयापचययोरनुपातेऽना-ग्रहात् । अत एव यत्प्रकारेण मध्यमानयनमुक्तं तत्प्रकारेणैकदिनमिताहर्ग-णात् फलं मध्यमगतिः स्यादिति तस्याः स्थूलत्वसूक्ष्मत्वं प्रकारस्थूल-त्वसूक्ष्मत्वानुसारेणेत्यलम् ॥ २५ ॥

ननु कक्षाध्याये "पादोनगोऽत्रधृतिभूमितयोजनानी"त्यादिना ग्रहाणां तुल्यगतिरुक्ता तत् कथं महीमितादित्यानीतग्रहगतिर्भिन्ना । न ह्येककाले तुल्याऽतुल्या च गतिः संभवति । असम्भवात् । अतः प्रमाणि-कयाऽऽह समा गतिस्त्विति । ग्रहाणां गतिर्नित्यं योजनैः समा तुल्या भवेत् । यथा कलादिका कदाचित् तुल्या तथा कदाचिद्योजनगतिरतुल्या न स्यादिति सूचनार्थं नित्यपदोपादानं ध्येयम् । सा गतिस्तुल्या योजना-त्मका । कलादिकल्पनावशात् कलाविकलाकल्पनावशात् ।

"भुक्तियोजनजा संख्या सेन्दोर्भगण·३२४००० संगुणा ।
स्वकक्षाप्ता तु सा तस्य तिथ्याप्ता गतिलिप्तिका" * ॥

इति सूर्यसिद्धान्तोक्तकल्पनावशादित्यर्थः । कस्य चिद्बहवः कलाः कस्यचित् स्वल्पाः कला गतिर्भवतीति । मृदुर्मन्दा । द्रुता शीघ्रा । गतिः स्मृता च पूर्वाचार्यैः परस्परम् ।

तथा च श्रीपतिः—

"तुल्या गतिर्योजनवर्त्मनैषां लिप्ताप्रकृत्या मृदुशीघ्रभावः" †—

इति । एवं च तुल्यगत्यामपि तत्र कलादिकाऽतुल्या गतिः प्राचीनैः प्रोक्तेति न क्षतिः ।

---

* सूर्यसिद्धान्ते भूगोलाध्याये ८३तमः श्लोको द्रष्टव्यः ।

† नेदानीं श्रीपतिकृतः सिद्धान्तग्रन्थ उपलभ्यते ।

अत्रोपपत्तिः । स्वकक्षायां परिवर्त्तमाणा ग्रहास्तुल्ययोजनप्रदेश-रूपगतौ कलाभेदस्य प्रत्यक्षसिद्धेनातुल्याश्चलन्तीति युक्तम् । अन्यथा कक्षाभेदभगणभोगभेदयोरनुपपत्तेः ॥ २६ ॥

इदानीमतुल्यत्वे कारणमाह ।

**कक्षाः सर्वा अपि दिविषदां चक्रलिप्ताङ्कितास्ता**
**वृत्ते लघ्व्यो लघुनि महति स्युर्महत्यश्च लिप्ताः ।**
**तस्मादेते शशिजभृगुजादित्यभौमेज्यमन्दा**
**मन्दाक्रान्ता इव शशधराद्भान्ति यान्तः क्रमेण॥२७॥**

**वा. भा.**—यतः सर्वा अपि कक्षाश्चक्रलिप्ताभिरेवाङ्किताः । अतो महति वृत्ते महत्यो लिप्ताः स्युः । लघुनि लघ्व्यः । तद्यथा चन्द्रकक्षा सर्वाधःस्था लघुः । तस्यामेका कला पञ्चदशभिर्योजनैर्भवति । शनेः कक्षा सर्वोपरिस्था सा महती । तस्यामेका कला योजनानां षड्भिः सहस्रैरेकसप्तत्यानै-५९२९ र्भवति । योजनं चतुःक्रोशमेव । अतश्चन्द्रात् सकाशादूर्ध्वोर्ध्वस्था बुधशुक्रादयः क्रमेण मन्दाक्रान्ता मन्दगतय इव भान्ति । मन्दाक्रान्ताच्छन्दोऽपि सूचितम् ॥ २७ ॥

इति सिद्धान्तशिरोमणिवासनाभाष्ये मत्यब्दशुद्धिः ।

**मरीचिः**—ननु कक्षासु योजनगतिप्रदेशे कलासमत्वमेवास्तु लाघवात् । न चैवं चक्रकलाङ्कितत्वं स्यात् कक्षास्विति वाच्यम् । स्वस्वकक्षायामतुल्यकलाङ्कितत्वे तत्तत्कक्षापरिवर्त्तकलाभोगेन भगणभोगकल्पनादिष्टापत्तेरित्यतस्तदुत्पत्तिकथनव्याजेनोक्तार्थं दृढयति कक्षाः सर्वा इति । ग्रहाणां सर्वाः कक्षाः । सर्वपदेन प्रतिवृत्तादीनि । ग्रहभ्रमवृत्तरूपकक्षाणां चलकर्णवशादनेकत्वाद्वा सर्वा इत्युक्तम् । चक्रलिप्ताङ्किताः । चक्रं द्वादशराश्यात्मकम् । तस्य कलाभिः । "त्रिंत्रे समाद्भने"-ति परिभाषया षट्शतयुतैकविंशतिसहस्रमिताभिरङ्किताश्चिह्निताः सन्ति । अपिरेवकारार्थः । तेन न्यूनाधिककलाङ्कितनिरासः । अन्यथा कक्षापरिवर्त्तेन ग्रहाणां भग-

णभेगानुपपत्तिः । न च तत्तद्वृत्ते० तत्तत्कलाभेगेन भगणभेगस्याङ्गीकाराव्व क्षतिरित्युक्तं प्रागिति वाच्यम् । तत्तद्वृत्तानामनेकत्वेन द्वादशराशिकलानां पृथगनन्तभेदेन गैारवात् । क्वचित् पूर्वशास्त्रे सूर्यादिभिस्ताद्दृशस्यानुक्तत्वान्मानाभावाच्च । लाघवात् परिभाषया चक्रकलानां सूर्याद्युक्तेन च सर्वकक्षास्वङ्कनं युक्तम् । तासां वृत्ते विनिगमनाविरहात् समप्रदेशाङ्कनाद्गतियोजनप्रदेशे कलातुल्यत्वाभावः प्रत्येकं सिद्धः । इदमेव स्पष्टयति ता इति । ताः समप्रदेशाङ्किताः कलाः । लघुनि वृत्ते कक्षायां लघ्व्यः स्वल्पप्रदेशमिताः । महति महत्यो बहुप्रदेशमिताः परस्परं भवन्ति । तद्यथा । चक्रकलाभिः खखरसस्वर्ग-२१६००मिताभिः कक्षायोजनानि तदैककलया कानीत्यनुपातेन चन्द्रकक्षायां पञ्चदशयोजनानां बुधकक्षायामष्टचत्वारिंशद्योजनैः शुक्रस्य त्रयोविंशत्यधिकशतेन रवेः शतद्वयेन भैामस्य सप्तनवत्यधिकशतत्रयेण गुरोश्चतुर्विंशतिशतेन शनेर्दशाधिकैकोनषष्टिशतयोजनैः कला भवति । नक्षत्रकक्षायां तु एकत्रिंशदधिकशतत्रययुतद्वादशसहस्रयोजनैरेका कला स्यात् । योजनमानं सर्वत्र नियतमेव । एतेन यस्य कक्षा लघ्वी तस्याधो यस्य महती तस्य तदूर्ध्वं कक्षेति सूचितम् । उपसंहरति तस्मादिति । तस्मात् । यतो लघुवृत्ते महद्वृत्ते यथायोग्यं लघ्व्यो महत्यः कलाः । तद्धेतोरित्यर्थः । चन्द्रात् एते दृश्यमानबिम्बाः प्रसिद्धा बुधशुक्ररविभैामगुरुशनैश्चराः । यान्तः स्वकक्षावृत्ते तुल्ययोजनानि गच्छन्तो मन्दाक्रान्ता मन्दं स्वल्पमाक्रमणं गमनमेषां ते मन्दगतयः । इव सादृश्ये । वस्तुतस्तुल्यगमनात् । क्रमेण यथोक्तक्रमेणोत्तरोत्तरं परस्परमपि । चन्द्रापेक्षया बुधो मन्दगतिस्तदधिकः शुक्रस्तदधिकमन्दगतिः सूर्य इत्यादिक्रमेण बुधापेक्षया शुक्रस्तदपेक्षया रविस्तदपेक्षया भैाम इत्यादिक्रमेणापि । अत एव सप्तमग्रहस्य शनैश्चरत्वं युक्तम् । तदूर्ध्वं ग्रहकक्षाभावात् । यद्यपि बुधशुक्रसूर्याणां मध्यगत्यभेदात् परस्परं मन्दगतित्वं न सम्भवति तथाऽपि बुधशीघ्रोच्चशुक्रशीघ्रोच्चगत्योर्भेदात् तत्कक्षायामेव तयोरवस्थानात् । चन्द्रान्मन्दगतित्व-

स्योक्तिश्च । भान्ति मनसि प्रतिभान्ति । तुल्ययोजनगमनेन मन्दत्वमसम्भवतीति भान्तीत्युक्तं वस्तुतो न सन्तीत्यर्थः । तथा च स्वस्वकक्षायां तुल्ययोजनप्रदेशे कलानां तुल्यसंख्याभावात् तत्र याः कलास्ता गच्छन्ति प्रतिदिनमतो गतेर्मन्दत्वं शीघ्रत्वं च सिद्धमिति भावः ।

"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत्"—इति ।

इत्युक्तत्वान्मन्दाक्रान्ता इत्यनेन तदाख्यं पद्यमपि सूचितम् ।

तद्व्याख्या तु याः कलाश्चरणव्यक्तयः सर्वाश्चतस्रो लघुनि वृत्ते छन्दसि लघ्व्योऽल्पाक्षराः । महति वृत्ते महत्यो बह्वक्षराः । ताः पादव्यक्तयः । द्विविषदां चक्रलिप्ताङ्किताः । ग्रहाणां चक्रं सर्वसंख्या । चक्रस्य समूहवाचकत्वात् । सा त्वष्टौ । राहोर्ग्रहपदे ग्रहणया स्थापितत्वात् । केतोश्च राहूतिरिक्तत्वाच्चाष्टसंख्यया युक्ता लिप्ताः षष्टिः । कलानां तन्मितत्वात् । तत्संख्याक्षरैरष्टषष्ट्यक्षरैरङ्किता युक्ता अष्टषष्ट्यक्षरघटितं पद्यमित्यर्थः । पादाक्षरमितिस्तु प्रत्येकं सप्तदशेत्यर्थसिद्धा । तस्माद्धेतोः । एते चरणवर्णाः । शशिजभृगुजादित्यभौमेज्यमन्दाः । शशिजो बुधः । तत्संख्या त्वादित्यवाराच्चतुर्मिता । भृगुजः शुक्रस्तत्संख्या षण्मिता । सूर्याद्भूमिसम्बन्धिप्राणिभिः पूज्यो मन्दः शनैश्चरः । वारक्रमेण तत्संख्या सप्त । तथा चैतत्संख्याभिश्चतुःषट्सप्तभिरुत्तरोत्तरमुन्मिता मन्दाक्रान्ता मन्द उच्चारणमार्गो येषां ते । एते वर्णा अवसानास्पदीभूता इवेत्यनेन वस्तुतोऽवसानाभावात् । अन्यथाऽऽनुपूर्वीपद्यपठनानुपपत्तेः । तस्मात् तेषु यतिर्भवतीत्यर्थः । च पुनरेते शशधरात् चन्द्रोन्मिताद्गणात् भगणात् । तमारभ्य । भान्तियान्तः क्रमेण । भो भगणः । अन्ति । "नामैकदेशे नामग्रहणात्" अन्तिमो नगणः । ययोर्गणयोर्मध्यस्थौ आद्यन्तवर्णलोपाच्चत्वारो वर्णा गुरुद्वयैकलघुगुरवः ऽऽ।ऽ । क्रमेण यगणक्रमेण । अथ रगणस्योक्ते रगण इत्यर्थः । तत्र क्रमेण तगणगुरुलघुभिर्लिप्ता अङ्किता इत्यर्थः । तर्हि मन्दाक्रान्ता आवृत्त्या तद्वृत्तसम्बन्धिनः स्युः । तद्वर्णोच्चारणानुपूर्व्या पद्यं मन्दाक्रान्तासंज्ञं स्यादित्यर्थः । न च वृत्तरत्नाकरोक्त-

लवणाब्धरेखान्तिमाचरस्य लघुत्वेऽपि गुरुत्वसिद्धावक्षतेरिति मद्दत्वमत्र कथमुपेक्षितमिति वाच्यम् । "पादान्तस्थं विकल्पेन"—इत्युक्त्याऽन्तिमाचरस्य लघुत्वेऽपि गुरुत्वसिद्धावक्षतेरिति मदुक्ता ।

अत्रोपपत्तिः । क्रान्तिवृत्ते वस्तुतो द्वादशराशीनां सत्त्वात् । परिभाषया कलाः खखषट्स्वर्गमिताः । तदनुरोधाद्ग्रहकक्षाणां सत्त्वात् तत्रापि द्वादशराशिकलास्तत्तुल्या एव कल्पिताः । अन्यथा ग्रहकक्षायाः क्रान्तिवृत्तस्य च महदन्तरेण स्थितत्वाद्ग्रहाधिष्ठितराश्यादिस्थानासिद्धेः । अत एव राश्यंशकलाकल्पनाद्ग्रहकक्षायां क्रान्तिवृत्तप्रदेशसमसूत्रेणेत्युक्तं प्राक् । ततश्चोक्तमुपपन्नम् ।

"उपरिस्थस्य महती कक्षाऽल्पाऽधःस्थितस्य च ।
महत्या कक्षया भागा महान्तोऽल्पास्तथाऽल्पया ॥
कालेनाल्पेन भगणं भुङ्क्तेऽल्पभगणाश्रितः ।
ग्रहः कालेन महता मण्डले महति भ्रमन् ॥
स्वल्पया तु बहून् भुङ्क्ते भगणान् शीतदीधितिः ।
महत्या कक्षया गच्छन् स्वल्पान् भुङ्क्ते शनैश्चरः* ॥"
इति सूर्योक्तमित्यलं पल्लवितेन ॥ २७ ॥

**मरीचिः**—अथाधिमयन्त्यस्यासंगतोक्तपरिहारमध्यायसमाप्तिं सूचयन् फक्किकयाऽऽह इति प्रत्यब्दशुद्धिरिति । अब्दमब्दं प्रतीति प्रत्यब्दं वर्षं वर्षं शुद्धिर्यस्यां शोधनकरणम् । ग्रहसाधने शुद्धेरेव मूलभूतात् । तथा चोक्तविषयस्य समाप्तत्वात् तदग्रिमस्य भिन्नप्रकरणत्वात् संगतमेवेति भावः ।



* मुद्रितसूर्यसिद्धान्ते भूगोलाध्याये ७५-७८ श्लोका द्रष्टव्याः ।

# अथाधिमासनिर्णयः ।

इदानीमहर्गणादौ विशेषमाह ।

अभीष्टवारार्थमहर्गणश्चेत्
सैको निरेकस्तिथयोऽपि तद्वत् ।
तदाऽधिमासावमशेषके च
कल्पाधिमासावमयुक्तहीने ॥ १ ॥

वा. भा.–इह किल स्थूलतिथ्यानयने यस्यां तिथौ यो वार आगतः स चेदहर्गणे नागच्छति तदाऽहर्गणं सैकं निरेकं कृत्वा ग्रहाः साध्या इति ज्योतिर्विदां संप्रदायो युक्तियुक्त एव । यतोऽहर्गणस्य वारो नियामकः । एवं कृते यो विशेषः सोऽभिधीयते । तिथयोऽपि तद्वदित्यादि । अत्रेत-दुक्तं भवति । यदा वारार्थे सैकोऽहर्गणः कृतस्तदाऽधिमासावमशेषाभ्यां चन्द्रार्कानयने कोट्याहतैरङ्ककृतेन्दुविश्वैरित्यादौ द्वादशगुणास्तिथयोऽर्क-भागेषु याः क्षेप्यास्ताः सैकाः कृत्वा द्वादशगुणाः क्षेप्याः । यदा निरेको-ऽहर्गणः कृतस्तदा निरेकाः कृत्वा । तथा यदि सैकोऽहर्गणस्तदाधिमा-सशेषं कल्पाधिमासैर्युतं कार्यम् । अवमैरवमशेषं च । यतः सैकासु तिथिषु सैकोऽहर्गणो निरेकासु निरेकः । तथा प्रतिदिनमधिमासशेषस्याधिमासै-रुपचयोऽवमैरवमशेषस्यातो युक्तमुक्तम् * ॥ १ ॥

मरीचिः-अथात्राधिकारे विशेषसंग्रहं विवक्षुः प्रथमं बृहदहर्गणादौ विशे-षमुपजातिकयाऽऽह अभीष्टवारार्थमिति । यद्दिनमभीष्टमधिकृत्याहर्गणः साधितस्तस्मात् सप्ततष्टाद्दिनीयवारो नायाति । किन्तु तस्मात् पूर्वो-ऽपरो वा वार आयाति तदाऽभीष्टवारीयाहर्गणसिद्ध्यर्थमहर्गण आनीतः ।

* इतोऽग्रे वासनावार्त्तिकटीकया भवितव्यं किन्तु तट्टीकाकारेण नृसिंहाचार्ये-णेतः प्रभृति बीजसंस्कारपर्यन्तमामध्यमाधिकारमेकत्रैव सम्मिलिता निर्गलितार्था: संरचिता अतो यथावत् प्रत्येकश्लोकान्ते संरचनमसंगतमवगम्याधिमासनिर्णयान्ते सा स्थापितेति विद्भिर्विवेचनीयम् ।

सैक एकयुक्तो निरेक एकेनोन इति प्राचीनगणनासम्प्रदायो "युचर-चक्रहतो दिनसंचयः"—इत्यादिप्रकारेण ग्रहसाधनार्थं कृतश्चेत् तदा सूर्यचन्द्रसाधनार्थं च तिथ्योऽहर्गणानयनार्थे या योजिताः शुक्लादिगतास्तिथयश्चैत्रादिगततिथयश्चाहर्गणवत् सैका निरेकाः कार्याः । एताभ्यः "कोट्याहते"-रित्यादिना श्लोकत्रयेण यथायोग्यं सूर्यचन्द्रौ साध्यौ । अत्राधिशेषावमशेषयोरावश्यकत्वादहर्गणात् तद्वारीयाधिशेषज्ञानार्थमाह तदेति । तदा यदा तिथयः सैका निरेका इत्यर्थः । अधिशेषावमशेषके अहर्गणानयने ज्ञाते कल्पाधिमासावमयुक्ते हीने कार्ये । क्रमेण कल्पोक्ताधिमासावमाभ्यां युतहीने । तिथिवशतः सैकतिथिनिरेकतिथिक्रमेणेत्यर्थः । ते सिद्धे शेषे सर्वत्र ग्राह्ये न पूर्वागते । पूर्वागताहर्गणस्य तद्दिने तत्त्वाभावात् । अत्र कल्पाधिमासयुतमधिशेषं कल्पसौरदिनाधिकं चेत् तैस्तष्टं कार्यम् । तथाऽवमशेषं कल्पावमयुतं कल्पचान्द्रदिनाधिकं चेत्तैस्तष्टम् । तत्र वास्तवमध्यममानेन गताधिमासावमज्ञानार्थमागताधिमासाः सैका गतावमानि च सैकानि । न त्वहर्गणसिद्ध्यर्थम् । तस्य सैकनिरेकत्वाभ्यां सिद्धेः । यदा त्वधिशेषमवमशेषं च कल्पाधिमासावमाभ्यां क्रमेण हीनं न तदा-तच्छेषं क्रमेण कल्पोक्तसूर्यचान्द्रदिनाभ्यां युतं कृत्वा कल्पाधिमासावमाभ्यां हीनं क्रमेण कार्यम् । अत्राप्यागताधिमासा अवमानि च वास्तवज्ञानार्थं निरेकाः कार्याः । न त्वहर्गणसिद्ध्यर्थमिति ध्येयम् । यदि तु इष्टदिनमधिकृत्याहर्गण आनीतस्तस्मात् सप्ततष्टात् तद्दिनीयवारे नायाति पूर्वोऽपरो वार आयाति तदाऽपि इष्टदिनमुपेत्याहर्गणानीतवारे ग्रहानयनमभीष्टं स्यात् । तदाऽहर्गणादौ सैकनिरेकत्वादिविशेषो न कार्यः । किन्तु यथास्थिताहर्गणागततिथ्यधिशेषावमशेषेभ्यो ग्रहानयनं कार्यमिति सूचनार्थं चेदित्युक्तमिति ध्येयम् ।

अत्रोपपत्तिः । ननूपपत्तिसिद्धाहर्गणादभीष्टदिनमधिकृत्य साधितादपि अभीष्टवारः कथं नायाति । तन्निमित्तं सैकनिरेकतादिकं कुतः कार्यमिति चेत् । उच्यते । अभीष्टवारेऽहर्गणसाधनार्थं त्रिंशद्गुणस्य

मासगणस्य तद्वारीयमध्यमगततिथयो योज्याः । अहर्गणस्योक्तप्रकारेण मध्यमत्वात् । स्पष्टमानस्यानियतत्वात्तदनुपातद्वारा तदभिप्रायेण तत्साधनस्याशक्यत्वाच्च । न हि मध्यममानेनाहर्गणसाधनार्थं स्पष्टगततिथियोजनं युक्तं विसदृशत्वादिति स्थितिः । तत्र मध्यमगततिथीनामज्ञानात् तद्वारे स्पष्टमानसिद्धतिथिपत्रदर्शनेन स्पष्टगततिथिरेव मध्यत्वेन योजिता । अस्या यदि पूर्ववारे मध्यममानेनाप्यन्तिमकालस्तदा स्पष्टगततिथियोजनमेव मध्यमगततिथियोजनं भवतीति यथागताहर्गणाद्वार आयात्यतः स एवाहर्गणोऽभीष्टदिनग्रहसाधनार्थमुपयुक्तो भवति । अथ यदि स्पष्टगततिथेर्मध्यममाने न ततोऽपि पूर्ववारेऽन्तिमकालस्तदा स्पष्टगततिथियोजनं पूर्ववारे मध्यमगततिथियोजनं भवतीति । साधिताहर्गणाद्वारः पूर्वो यात्यतोऽभीष्टवारेऽहर्गणसिद्ध्यर्थं सैकत्वमहर्गणे । एकदिनान्तरत्वात् । अत एवाभीष्टवारे स्पष्टगततिथयः सैका मध्यममानेन गततिथयो भवन्ति । यदा तु स्पष्टगततिथेर्मध्यममानेनाभीष्टवारेऽन्तिमकालस्तदा स्पष्टगततिथियोजनमभीष्टदिनोत्तरवारे मध्यमगततिथियोजनं भवतीति साधिताहर्गणोऽभीष्टदिनान्तिमवारे भवत्यतोऽभीष्टवारेऽहर्गणसिद्ध्यर्थं साधिताहर्गणो निरेकः । अत एवाभीष्टवारे स्पष्टगततिथयो निरेका मध्यममानेन गततिथयो भवन्ति । अत एव यदाऽभीष्टवारमधिकृत्य साधिताहर्गणः पूर्वापरवारे भवत्यपि तत्रैवेष्टस्तदा स्पष्टगततिथयोऽहर्गणश्च यथास्थिता एव तत्र तेषां वस्तुतस्तादृशत्वात् । अतः सुष्ठूक्तमभीष्टवारार्थमहर्गणश्चेत् सैको निरेकस्तिथयोऽपि तद्वदिति । अत एवाभीष्टवारे मध्यममानसिद्धतिथिपत्रदर्शनेन गततिथयो योज्यास्तदा नायं विशेष इति ध्येयम् । अथाहर्गणानयनार्थं यथास्थिताः स्पष्टगततिथयो योजिता न तु सैका निरेकाः । अन्यथाऽहर्गणे सैकत्वनिरेकत्वानुपपत्तिरित्यहर्गणगणितसाधने यदधिशेषं यच्चावमशेषं तयोर्यथास्थितयोजिततिथ्यन्तकालीनत्वात् । ताभ्यां 'कोट्याहते'रित्यादिश्लोकत्रयसाधनं सूर्य-

# जैनवार्तिकवृत्तौ ।

## प्रत्यक्षपरिच्छेदः ।

सूत्रं सूत्रकृता कृतं मुकुलितं तद्भूरिबीजैर्घनम् ।
तद्भाष्यः किल वार्त्तिकं मृदु मया प्रोक्तं शिशूनां कृते ॥
भानोर्यत्किरणैर्विकाशि कमलं नेन्दोः करैस्तत्तथा ।
यद्वेन्दूदयतो विकासि जलजं भानोर्गभस्तैर्न तत् ॥
नमः स्वतःप्रमाणाय वचःप्रामाण्यहेतवे ।
जिनाय पद्मरूपेण नमः प्रत्यक्षदर्शिने ॥

अन्यार्थवृत्तेति न वाच्यमेतत् सामान्यमन्येन ततोऽन्यथा तु ।
व्युत्पादितं तत्र भवन्तु सन्तो निर्मत्सरा यत्र भवेदशुद्धा ।

**हिताहितार्थसंप्राप्तित्यागयोर्यन्निबन्धनम् ॥**
**तत् प्रमाणं प्रवक्ष्यामि सिद्धसेनार्कसूत्रितम् ॥ १ ॥**

हिताहितेत्यादिनाऽभिधेयप्रयोजनमभिधीयते । तदभिधानात् सम्बन्धाभिधेयप्रयोजनान्तराण्यप्यभिहितानि । तथाहि-प्रमाणमभिधेयम्, प्रयोजनं व्युत्पत्तिः, व्युत्पादकत्वं च शिष्याचार्ययोः । परं तु निश्रेयसमिति । संबन्धस्तूपायोपेयलक्षण इति । तच्च श्रोतृजनप्रवृत्त्यर्थमिति कश्चित् । तदुक्तम्—

अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः ।
शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥

तदेतदन्ये न क्षमन्ते । यतो यथा ते प्रेक्षापूर्वकारितया

फलमभिलषन्तः प्रवर्तन्ते तथा प्रेक्षापूर्वकारी तथैव प्रमाणात् प्रवर्तते । अप्रमाणात्प्रवर्तमानानां प्रेक्षावत्त्वं न स्यात् ।

न च शब्दानां बहिरर्थे प्रत्यक्षवत् प्रामाण्यम्, नापि प्रदीपवद् असंबद्धानामपि प्रकाशकत्वम्, किन्तु संबन्धबलात् । न च तेषां बहिरर्थैः संबन्धोऽस्ति । विवक्षायां संबन्धेऽपि न । ये यथा यमर्थं विवक्षन्ति ते तथैव तमर्थं प्रतिपादयन्तीति विसंवादेनाभिप्रायाणामन्यथाभिधायान्यथा प्रवृत्तिदर्शनादिति कथं प्रेक्षावतां प्रवृत्त्यर्थमादौ वाच्यमिति ।

तत्र निष्फलमिदं शास्त्रं काकदन्तपरीक्षावद्, असाध्यानुष्ठानं वा ज्वरतक्षकचूडारत्नालङ्कारोपदेशवद्, अनभिमतं वा मातृविवाहोपदेशवत् । अतो वा शास्त्राल्लघुतर उपायः । प्रमाणमुत्पत्तेरनुपाय एव चेद्, प्रमित्यनर्थसंशयनिवृत्त्यर्थमर्थसंशयोत्पादनार्थं प्रेक्षावतामादौ वाच्यमिति । ते हि कृषीवलादय इवार्थसंशयात् प्रवर्तन्त इति ।

एतदन्ये दूषयन्ति । युक्ता कृषीवलादीनामवधृतबीजाङ्कुरस्वभावानामुपायनिश्चये सति उपेयसन्देहेऽपि प्रवृत्तिरिति । अत्र तु उपायनिश्चयाभावात् कथं प्रवृत्तिरिति । साधकबाधकप्रमाणाभावाच्चार्थसंशयस्य निवारितत्वात् । तथा प्रमाणव्युत्पादकानां च शास्त्रान्तराणां दर्शनात् किमस्य प्रमाणव्युत्पत्तिः प्रयोजनमुतान्यदिति प्राक् प्रवर्तमानः संशयः केन विनिवार्येत । तस्मात्प्रेक्षावतां न प्रवृत्तिः । प्रयोजनं च तथा व्याप्तमिति निष्प्रयोजनमिदं शास्त्रं नारब्धव्यमिति, व्यापकानुपलब्ध्या प्रत्यवतिष्ठमानस्य परस्यासिद्धतोद्भावनमनेन क्रियत इति ।

न चैतद्वाक्यमप्रमाणकेनानेन कथमेतदपि क्रियते इति । यतोऽप्रमाणकेनैव वचसा परेण व्याप्यानुपलब्धिरुपन्यस्ता ।

सा च वचनमात्रेणैवासिद्धोद्भाव्यत इति ।
एतदप्यपरे दूषयन्ति—यतो यथा मिद्धसाधनमादाय वादी प्रत्यवतिष्ठमानो निगृह्यते तथाऽसद्दूषणवादी प्रतिवाद्यपीति । अथाग्रे तस्यार्थस्य शास्त्रेण समर्थनान्न दोष इति । यद्येव तस्यादिवाक्येन शास्त्रार्थः प्रतिज्ञायत इति युक्तम् ।

एतदप्ययुक्तम् । यतः शास्त्रार्थोऽनेन किं प्रमाणभूतेन प्रतिज्ञायते किं वाऽप्रमाणभूतेनेति ? । तत्र यदि प्रतिज्ञैव प्रमाणभूता साध्यमर्थं प्रतिपादयति किमङ्ग हेतूपन्यासेन । अथाप्रमाणभूता तर्हि तदेव दूषणमिति । तस्माद्वचनस्य प्रत्यक्षादिवत् प्रमाणभूतत्वात् ततः प्रेक्षावतां फलार्थिनां युक्ता प्रवृत्तिरिति युक्तम् ।

अथ कस्यचिद्वाक्यस्य 'नद्यास्तीरे शर्कराशकटं पर्यस्तम्' इत्यादिकस्य मिथ्यात्वरूपस्योपलब्धेः कथं प्रेक्षावतां ततः प्रवृत्तिरित्यभिधीयते, तर्हि मरुमरीचिकाजलोल्लेखिनः ज्ञानस्य मिथ्यात्वोपलब्धेः कथं प्रेक्षावतां प्रत्यक्षादपि प्रवृत्तिरिति । अथ मिथ्येतरयोः संवादासंवादलक्षणो विशेषोऽस्तीत्युच्यते । अत्रापि आप्तप्रणीतत्वाप्रणीतत्वलक्षणोऽस्तीति वक्ष्यामः । नच शब्दानां सम्बन्धबलादर्थप्रतिपादकत्वम्, किंतु विवक्षावशात् । सा च पुरुषसत्यासत्येन सत्यासत्येतरा भवन्ती शब्दानां सत्यतासत्यत्वं व्यापयतीति पुरुषप्रामाण्यमेव दर्पणसंक्रान्तप्रतिबिम्बमिव शब्देष्वभिधीयते इति ।

अथेष्टोयमर्थः शब्दे तस्मात्तु भोऽतिशयो यदित्यभिधीयते । एतत्प्रत्यात्म निपादयिष्यामः । हितोऽपि कालान्तरेण क्षारितादेरिव दुग्धादिकं यद्यप्यहितो भवति, तथापीष्टत्वाद्धितः । अहितोऽप्येवम् । उपेक्षणीयोऽपि प्रमाणाविषयत्वाद्यदि

चाऽनुपादेयत्वात् सोऽप्यहित एव । तयोर्हिताहितयोः प्राप्ति-
त्यागौ यतः प्रमाणनिबन्धनावतस्तत्प्रकर्षेण संख्यालक्षणगो-
चरफलविप्रतिपत्तिनिराकरणरूपेण स्वतःपरतःप्रामाण्यलक्षणेन
वा प्रत्यक्षपरोक्षरूपेण वा वक्ष्यामः । नन्वतीतवर्तमानयोरुपयुक्त-
फलत्वेन प्रवृत्त्यविषयत्वाद्भाविनस्त्वर्थक्रियाकारिणः प्रमाणा-
गोचरत्वाद्भाविनि प्रमाणाभावादिति, तत् कथं हिताहितयोः
प्राप्तित्यागौ प्रमाणनिबन्धनाविति ? । नैष दोषः । अतीतानाग-
तवर्तमानानां कथंचिदेकत्वस्य प्रतिपादयिष्यमाणत्वादिति ।
यदि वा हितो मोक्षः अहितः संसारस्तयोः प्राप्ति-
त्यागौ सर्वज्ञनिबन्धनौ ततस्तमेव भगवन्तं प्रमाणभूतं
प्रतिपादयिष्याम इति । तत् किं स्वातंत्र्येण ?, नेत्याह—सिद्ध
सेनार्कसूत्रितमिति । सिद्धसेन एव जगज्जन्तुमनोमोहसन्त-
तितामसीतमःसमूहापोहकारित्वादर्क इवार्कस्तेन सूत्रितम् -
तत्सूत्राणामतिगम्भीरार्थत्वात्किंचिल्लेशतो यथाबोधं व्याख्या-
स्यामः ॥ १ ॥

तदेवाह प्रमाणमित्यादि ।

**प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।**
**प्रत्यक्षं च परोक्षं च द्विधैव च विनिश्चितम् ॥ २ ॥**

अथेदं सूत्रं किं सकलमेव शास्त्रार्थं प्रतिपादयति किंवैकदे-
शमिति ? । न तावत्सकलम् । फलप्रमाणाभासताद्यप्रतिपत्तेः ।
नाप्येकदेशम् । सकलप्रमाणलक्षणप्रतिपादनादित्याशङ्क्याह
शास्त्रार्थसंग्रह इति ।

तथाहि । प्रमाणं सामान्यविशेषरूपतयाऽनेन संगृहीत
इति स एव शास्त्रार्थ इति । संग्रहस्तु विस्तरविरोधीत्य-
नवयवेनाप्रतीतावपि न दोष इति । लक्षणं च यद्वस्तु येषां
प्रतिपाद्यते तल्लक्षणविकलं तद्वस्तु तदाभासतया ते स्वयमेव

प्रतिपद्यन्त इति किं प्रमाणाभासप्रतिपादनेनेति । निश्चया-
त्मकप्रमाणप्रतिपादनात्तद्रूपस्य फलस्य प्रतीतेः किं तदु-
पन्यासेन । तत्र सूत्रपूर्वार्द्धेन प्रमाणसामान्यमुत्तरार्द्धेन तद्वि-
शेषोऽभिहित इति समुदायार्थः । अवयवार्थस्तु सकलमेव शास्त्र-
मभिधास्यतीति ! तत्र विधिवाक्ये लक्ष्यानुवादेन लक्षणं विधी-
यते तदुत्तरकालं तु तत्र तत्र लक्षणानुवादेन लक्ष्यमिति । तत्र
प्रमाणमिति लक्ष्यनिर्देशः, शेषं लक्षणमिति । नचैतद्वाच्यं
तादात्म्याल्लक्षणासिद्धौ लक्ष्यस्याप्यसिद्धिः, तत्सिद्धौ वा
तस्यापीति । यस्माद्यदेतत्प्रमाणशब्दवाच्यं वस्तु सर्वेषु
प्रसिद्धं तदनुवादेन विप्रतिपत्त्याऽसिद्धं लक्षणं विधीयत इति ।
तत्र ज्ञानं प्रमाणं न संनिकर्षादि, तदाह—संनिकर्षादि-
कमित्यादि :

**संनिकर्षादिकं नैव प्रमाणं तदसंभवात् ।**
**अवभासो व्यवसायस्तत्तु ग्रहणमात्रकम् ॥ ३ ॥**

तदसंभवादिति । तस्यैव संनिकर्षस्यासंभवाद्, यदि वा
तस्य प्रमाणत्वस्यासंभवात्-तथाहि-न संनिहितवस्तुद्वयव्य-
तिरिक्तः कश्चिद्दृश्यमानः संयोगः प्रत्यक्षेणोपलभ्यते । तयो-
रङ्गुल्योरयं संयोग इति प्रतीतेः कथं नोपलभ्यत इति चेत्
तासामङ्गुलीनामयं मुष्टिरिति किं न प्रतीतिः? । तत्रापि संयोग
विशेषो निमित्तमिति चेत् । न, संयोगविशेष इति स्यात्
मुष्टिरिति ।

न हि नीले पीतमिति प्रत्ययो भवति । अथ सङ्केतवशा-
त्तथा प्रतीतिस्तर्हि पुरुषेच्छानिर्मितसङ्केतवशात्प्रवर्तमाना एवं-
विधाः शब्दा विकल्पे न किञ्चिद्वस्तुकृत निमित्तमवलम्बन्त इति ।
नैतद्वशाद्वस्तुव्यवस्था विदुषामुपपन्नेति । अन्यथेदं नगर-

मित्यादिष्वपि निमित्तमभिधानीयम् । तत्र न तावन्नगरम् द्रव्यम्, गृहैरसंयुक्तैर्विजातीयैश्च तस्यानारम्भात् । कतिपयगृहाणामस्ति संयोग इति चेत् । ननु संयोगेऽपि संयोगः । यतो गृहाण्यपि द्रव्याणि । विजातीयैः काष्ठेष्टकादिभिस्तदारम्भात् ।

सत्ता नगरमिति चेत् । किं नाट्यां तत्प्रत्ययमुत्पादयति । गृहैर्विशेषितेति चेत् । न, कूटस्थनित्याया विशेषणायोगात् । अकिञ्चित्करस्याविशेषणत्वात् । किंचित्करत्वे नित्यताहानेः । एषा नगरीत्यत्र च समूहार्थो वाच्यः सत्ताया एकरूपत्वेन समूहार्थानुपपत्तेः । सत्तां चेद्विषेत्स्यामः गृहाणां संयोगरूपाणां संयोगाभावाद् गुणैर्द्रव्यानारम्भाच्चेति न कश्चित्समूहार्थः । तेनैवंविधाः प्रत्ययाः वस्तु व्यवस्थापयन्तीति, न संयोगः प्रत्यक्षगम्यः ।

नाप्यनुमानात्तत्प्रतीतिः—तथाहि । क्षितिबीजसलिलादयः सर्वे विरलदेशस्थाः अन्यनिमित्तापेक्षाः । सामर्थ्ये सति कार्यानुत्पादकत्वात् । यद्यत्सामर्थ्ये सति कार्यानुत्पादकं तत्तदन्यापेक्षं दृष्टम् । यथा त एव बीजादयोऽन्यतरविकला नोत्पादयन्ति च समर्था अपि विरलदेशस्थाः सर्वे अङ्कुरमिति । तस्मादन्यनिमित्तापेक्षाः । यन्निमित्तं स संयोग इति । ननु बीजादयो दूरदेशस्था अपि सहकारिणं किं न संयोगमुत्पादयन्ति । तस्याभावादिति चेत् । स किं न भवति? । कारणाभावात् । किं तस्य कारणम् । त एव । किं न दूरस्थाः? । संयोगाभावात् । तत्किं संयोगेऽपि संयोगः? । तत्राप्यपर इत्यनवस्था ।

अथ योग्यदेशस्थाः संयोगमन्तरेणापि संयोगमुत्पादयन्ति । कार्येण किमेषामपराद्धं यत्तन्नोत्पादयन्ति । अपि च किमेषां दूरदेशस्थानां कार्यानुत्पादकत्वं संयोगापेक्षया व्याप्त

प्रत्यक्षेण प्रतीयते किं वाऽनुमानेन ? । न तावत् प्रत्यक्षेण । तेन तस्याप्रतीतिरित्युक्तम् । नाप्यनुमानेन । अनवस्थाप्रसङ्गात् । अथ निमित्तमात्रापेक्षया व्याप्तं प्रतीयते । तर्हि योग्यदेशादिविशिष्टं सामर्थ्यमात्रपर्यायमपेक्षमाणास्ते कार्यं न कुर्वन्तीति, न पुनः संयोगमिति । तन्नास्ति कश्चित्सन्निकर्ष इति । भवतु वा, तथापि तस्य प्रमाणत्वं न सम्भवति । तथाहि—किमसौ स्वयमेव प्रमाणं किंवा प्रमाणजननादिति ? । स्वयमेव किं ज्ञातोऽर्थं ज्ञापयति अज्ञातो वा ? । ज्ञातोऽपि किं प्रत्यक्षेण किं वाऽनुमानेन ? । प्रत्यक्षेणापि किं सामान्यरूपतया किंवा विशेषरूपतया ? । यदि सामान्यरूपतया न प्रतिकर्म व्यवस्थां कुर्यात्, विशेषरूपतयाऽपि तज्ज्ञानं कर्मणि ज्ञाते स्यात् । नहि नीलाज्ञाने नीलस्यायं संनिकर्ष इति ज्ञानं भवति ।

नीलज्ञानं किं तत एव संनिकर्षात् अथान्यतः ? । यदि तत एव, तदा इतरेतराश्रयत्वम् । नीले ज्ञाते तज्ज्ञानं तज्ज्ञानाच्च नीलज्ञानमिति । अथान्यतः संनिकर्षात्, तदा तदेव चोद्यं तदेवोत्तरमिति अनवस्था च । अथान्यतः प्रमाणान्नीलज्ञानं तर्हि किमन्तर्गडुना तेन । तदर्थं हि स परिकल्प्यत इति । किं वा स्वसंवेदनप्रत्यक्ष नाभ्युपगम्यते । तत्परिज्ञानं पुनरन्येन इन्द्रियसन्निकर्षेण तस्याप्यन्येनेत्यनवस्था । न च सन्निकर्षे सन्निकर्षः । निर्गुणा गुणा इत्यभ्युपगमात् । अथ संयुक्तसमवायात्तस्य ग्रहणम् । तथाहि—संयोगाद् द्रव्यग्रहणम्, संयुक्तसमवायाद् गुणग्रहणम्, संयुक्तसमवेतसमवायाद् गुणत्वग्रहणम्, समवायाच्च शब्दग्रहणम्, समवेतसमवायाच्छब्दत्वग्रहणमिति, विशेषणविशेष्यभावादभावग्रहणमिति षोढा सन्निकर्ष इति । तद्-

मत् । यतश्चक्षुर्नीलसंनिकर्षः किं स एव यः संयुक्तसमवायाद्
गृह्यते किं वा संनिकर्षान्तरमिति? । यदि स एव, तन्न । यतो
न स्वयमेव स्वं ज्ञापयति । स्वसंवेदनप्रसङ्गात् । सन्निकर्षान्तर-
परिकल्पनेऽनवस्था । तन्न प्रत्यक्षप्रतीतः संनिकर्षः । अनुमान
तु तस्मिन् प्रागेव निरासीदिति न पुनरुच्यते । नचाज्ञातो
ज्ञापयति । अज्ञातस्यार्थज्ञापकत्वे शशविषाणस्यापि प्रसङ्गः ।
असमवायान्न शशविषाणमिति चेत् । किं न रूपादि । अज्ञा-
पकत्वान्नेति चेत् । न, तत्र समवाय एव संनिकर्षस्यापि ज्ञापक-
त्वम्, तच्च रूपादेरप्यस्तीति । वस्तुस्वभावैरुत्तरं वाच्य-
मिति चेत् । तदेतत् पादप्रसारणमिति । तन्नाज्ञातस्यापि
ज्ञापकत्वम् । अथ प्रमाजननात् संनिकर्षादिः प्रमा-
णम् । तन्वौपचारिकमिदं स्यात् । किञ्चेदं लक्षणमतिव्यापक-
मव्यापकं च स्यात् । तथाहि—आत्मनोऽपि प्रमाजन-
कत्वात् प्रमाणत्वं स्यात्, ईश्वरस्य चेन्द्रियादिसंनिकर्षाभा-
वात् प्रामाण्यं न स्यात् । अथेश्वरस्यापि सर्वार्थैः सहास्ति संनि-
कर्षः कथमविद्यमानैरतीतानागतैरिति । मा भूदिति चेत् ।
कथमतीतागतज्ञः । अथ नित्यं तस्य प्रामाण्यं तर्हि न संनि-
कर्षस्तत्रेत्यव्यापकम् । अथोत्सर्गोऽपवादेन प्रमातृत्वेन बाध्यत
इति नातिव्याप्तिः । किं न प्रमेयत्वेन संनिकर्षादौ । अपिच
कारणत्वाविशेषेऽपीदं प्रमाणमयं प्रमातेति विशेषोऽत्र
वक्तव्यः । अथ यत्र प्रमाणं समवेतं स प्रमाता, तदितरत्प्र-
माणमिति । नैतदस्ति, यतः समवायस्य व्यापित्वनित्यत्वोप-
गमात् सर्वप्रमाणैः सर्वे प्रमातारः प्रसज्येरन् । समवायिविशेषा-
द्विशेषोपगमे नित्यत्वक्षतिः । न च किंचित्समवायं प्रत्यक्षात्प्र-
तीमः । अनुमानतस्तत्प्रतीतिरिति चेत् । तथाहि-इहेतिप्रत्ययः

सम्बन्धनिबन्धनः । अबाधितेहेतिप्रत्ययत्वात् । यो योऽबाधितेहेतिप्रत्ययः, स स सम्बन्धनिबन्धनः । यथेह कुण्डे दधीति प्रत्ययः, यथा चेह तन्तुषु पट इतिप्रत्ययः, तस्मात् स सम्बन्धनिबन्धन इति । इह ग्रामे वृक्षा इति भ्रान्तप्रत्ययनिवृत्त्यर्थमबाधितग्रहणम् । तथा सामान्येन सम्बन्धनिबन्धनत्वे साध्ये नान्वयदोषः। सामर्थ्याच्च विशेषसिद्धिरिति । उक्तमत्र एवंविधानां कुकल्पनाज्ञानानां वस्तुव्यवस्थापकत्वाभावादिति । न चासम्बद्धलिङ्गादुदयतामनुमानानां प्रामाण्यमुपपत्तिमत् । अन्यथा 'स श्यामः, त्वत्पुत्रत्वात्, परिदृश्यमानत्वत्पुत्रवद्' इत्यादीनामपि प्रामाण्यं स्यात् । बाधितत्वान्नेति चेत् । अत्र किन्न ? । बाधा काऽसाविति चेत् । इयमेव तावद् यद्विनियमवतो लिङ्गादुत्पत्तिरिति ।

तथाऽयुतसिद्धानामाधाराधेयभूतानां स व्यावर्ण्यते इति । तत्रायुतसिद्धिः किं देशैकत्वेन, किमेककालत्वेन, अथ स्वरूपैकत्वेनेति ? । तत्र न तावद्देशैकत्वेन । नहि य एव तन्तूनां देशः स एव पटस्यापि । तथाहि-तन्तवः स्वारम्भकेष्वंशुषु स्थिताः पटस्तु तेष्विति कथं देशैकत्वम् ? । आकाशैकत्वे सर्वेषामेकदेशत्वं स्यात् । न च तदेकदेशदेशत्वेनैकदेशत्वम् निर्द्दे शत्वान्नभसः । कल्पितास्तस्य ते इति चेत् । तत् किं कल्पनातो वस्तुव्यवस्था ?। तन्न प्रथमपक्षः । नापि कालैकत्वेन । नहि य एव तन्तुनां कालः स एव पटस्यापि । कार्यकारणभावाभावप्रसङ्गात् । कारणेन हि समानकालत्वमन्यतः सिद्धस्य स्यात् । ततश्च किं सिद्धोपस्याविना कारणेन ? । तन्न कालैकत्वेनाप्ययुतसिद्धिः । स्वरूपैकत्वे किं कुत्र समवेतु ? । तन्नायुतसिद्धिः । आधाराधेयभावोऽप्यात्मज्ञानयोर्नोपपद्यते । यथा चाधाराधेयभावो नास्ति तथा

नास्तिकमतनिराकृतावभिधास्यते । यथा च प्रत्युतानुत्पन्नस्थि- रैकरूपतया नित्यः समवायोऽन्यो वा न सम्भवति तथा यथाऽवसरं प्रतिपादयिष्यते । तन्न कश्चित्समवायः । तद्- भावान्नात्मनो विशेषः । तस्मात्प्रमाणजननात् सोऽपि प्रमाणं स्यात् । न वाऽन्यदपीति । तन्न सन्निकर्षः । आदिग्रहणात्साम- ग्र्येकदेशश्चक्षुरादि न प्रमाणं किंतु ज्ञानमिति ।

अथ किमिदं ज्ञानस्य प्रामाण्यम्-किमर्थग्रहणम्, उताग्रृ- हीतार्थप्रापणम्, आहोस्विद् गृहीतार्थप्रापणमिति ? । तत्रार्थ- ग्रहणमगृहीतार्थप्रापणं च मिथ्याज्ञानेऽप्यस्तीति तस्यापि प्रा- माण्यं स्यात् । गृहीतार्थप्रापणं तु क्षणिकपर्यायवादिनो न सं- भवति । तथाहि यः पर्यायो गृहीतः नासौ प्राप्यते, यस्तु प्राप्यते न स गृहीत इति । अथ वस्तुमात्रं गृहीतं प्राप्यते । तदपि सर्व- मेकं कथंचिदितिवादिनो मिथ्याज्ञानेऽप्यस्तीति तस्यापि प्रा- माण्यं स्यादित्याशङ्काह-अवभासो व्यवसायो न तु ग्रहणमात्र- कमिति । तेन यद्यपि मरुमरीचिकासु उदकचुम्बिज्ञानमिदमि- त्यंशेन मरीचिकास्वरूपमुल्लिखदुत्पद्यते तथापि विपर्ययाक्रान्त- त्वान्न प्रमाणमिति ।

अथ कोऽयं व्यवसायः । किमर्थग्रहणमुताग्रहणमिति ? यदि ग्रहणम्, तदा तदेव दूषणम् । अग्रहणे कथं प्रामाण्यमिति । अत्रोच्यते । सदसद्व्यवहारजननसामर्थ्यं व्यवसायः । तथा- हि-सदिति ज्ञानाभिधानप्रवृत्तिलक्षणः, सद्व्यवहारः, नास्ती- त्यादिलक्षणश्चासद्व्यवहारः, तयोर्जननसामर्थ्यं व्यवसायं ब्रुवते । तेन मिथ्याज्ञाने तन्नास्तीति न तस्य प्रामाण्यमिति ।

भवतु ज्ञानं प्रमाणम् । तत्पुनः केन वेद्यते किं स्वयमेव किंवा ज्ञानान्तरेणेति ? । यदि ज्ञानान्तरेण तदाऽभ्युपेतहानिः ।

अथ स्वयं तदपि नास्ति । यतः—

यद्यर्थवेदनं ज्ञानमात्मनोऽपि प्रकल्प्यते ।
सुशिक्षितो बटुः स्कन्धं स्वमारोहतु दासवत् ॥

तथाहि-वेद्यतेऽनेनेति वेदनम्, वेद्यते तदिति वेद्यमिति विरुद्धयोः करणकर्म्मणोः कथमेकत्र सद्भाव इति । कथमात्मानमात्मनाऽसौ वेत्तीति व्यपदेशः । तस्मात्कल्पिताः क्रियाकारकव्यपदेशाः प्रवर्त्तमाना न वस्तुं विरुन्धन्ति । अपि च प्रमाणसिद्धे वस्तुनि को विरोधः । एतदेवाह—प्रदीपवदिति ।

**दीपवन्नोपपद्येत बाध्यवस्तुप्रकाशकम् ।**
**अनात्मवेदने ज्ञाने जगदान्ध्यं प्रसज्यते ॥४॥**

सजातीयानपेक्षत्वेन दृष्टान्तः । तथाहि-ज्ञानमात्मप्रकाशकत्वाऽन्यथानुपपत्तेः प्रदीपवत् । एनमेव हेतुं विपर्यये बाधकप्रमाणेन समर्थयितुमाह—नोपपद्येतेत्यादि । आत्मानं वेदयतीत्यात्मवेदनम्, न तथा । तस्मिन् सति न केनचित् किञ्चिद् विज्ञायेतेत्यन्धमूकं जगत् स्यात् । तथाहि-यत् सदुपलम्भकप्रमाणगोचरतावतारि न भवति तत् सकलमेव न सद्व्यवहृतिपथमवतरति । यथा शशविषाणम् । नावतरति च सदुपलम्भकप्रमाणगोचरतामात्मव्यापारादिलक्षणं विज्ञानमिति । तथाहि-तद्ग्राहकं प्रत्यक्षं वा स्यात् परोक्षं वा? । प्रत्यक्षमपि किमिन्द्रियार्थसंप्रयोगजम्, अहोस्विदात्ममनःसन्निकर्षसमुत्थम्, उतस्वित्स्वसंवेदनं यदर्थोऽयमारम्भ इति ? । तत्र ज्ञानेनेन्द्रियस्य सन्निकर्षाभावादनभ्युपगमाच्च न प्रथमः पक्षः । नापि द्वितीयः । मनःसद्भावे प्रमाणाभावात् । न चाप्रमाणं वस्तु विपश्चितः समाश्रयन्ते । न च युगपज्ज्ञानानुत्पत्तिस्तत्प्रमाणम् । तस्या अन्यथाऽप्युपपत्तेः । तथाहि-यस्मिन्नात्माऽऽभिमुख्यं प्रतिपद्यते तस्मिन् विज्ञानमु-

देति, अन्यत्र नेति किं मनःपरिकल्पनया । अथेदमाभिमुख्यं किमात्मनो व्यतिरिक्तम्, आहोस्विदव्यतिरिक्तमिति? । तत्र यदि व्यतिरिक्तं तदा संज्ञामात्रं भिद्यते नार्थ इति । अथाव्यतिरिक्तं तदाऽऽत्मनः स्वरूपाप्रच्युतेः स सर्वदा तदस्तीति सर्वदा सर्वविषयं विज्ञानं स्यात् । नन्वात्मनः मनसा संयोगकर्तृत्वं किं भिन्नमभिन्नमिति? । यदि भिन्नं नात्मनः कर्तृत्वम् । अथाभिन्नं तदा तदपि तत्स्वरूपवत् सर्वदाऽस्तीति सर्वदा संयोगः स्यात् । ततश्च सर्वदा ज्ञानोत्पत्तिरिति स्यादिति । अथ शक्तिः कर्तृत्वं सा च सहकारिकारणवशात् कदाचिद्भवन्ती दोषमावहति । यद्येवं तर्हि कर्मणः सामर्थ्यादाभिमुख्यमात्मनः समुत्पद्यमानं सम्भवन्तीं ज्ञानोत्पत्तिं विधास्यतीति किं मनःपरिकल्पनया?। विधास्यते चायमर्थो जीवांशात् कर्मनिर्मुक्तादित्यत्रान्तरे। तस्मात्मनो जनितमपि प्रत्यक्षं ग्राहकमिति । अपि च तत्तस्य कारणं कार्यमनुभयं वा सद् ग्राहकं स्यात् । न तावत् कारणम् । तदानीं ग्राह्यस्याभावात् । नाप्यनुभयम् । असम्बन्धात् । अथैकसामग्रीतस्तदुभयं ग्राह्यग्राहकरूपं समुत्पद्यते इति । तन्न । युगपज्ज्ञानोत्पत्त्यनभ्युपगमात् । किंच ज्ञानाविशेषेऽप्येकं ग्राह्यमपरं ग्राहकमिति किंकृतोऽयं विशेषः?। अथ कार्यं तदा तदपि ज्ञानमज्ञातं वा? । अज्ञातस्य ज्ञापकत्वायोगात् । तदुक्तम्-अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति । अथ ज्ञातम् । तदपि यदापि प्रज्ञान्तरेण तदा किं ग्राह्येण किं वा ज्ञानान्तरेण? । यदि ग्राह्येण तदा तस्य ग्राहकत्वात् कार्यत्वं, ततश्चाग्रेपानः द्वितीयस्य तस्याप्येवमेवमिति काचपच्यं ज्ञानयोः स्यात् । तत्र ग्राह्येण ज्ञानान्तरेणापि ग्रहणे तस्याप्यन्येनेत्यनवस्था । तन्न प्रत्यक्षं तद्ग्राहकम् । नापि

परोक्षम्। यतस्तदपि किमर्थापत्तिरुतानुमानमिति?। तत्र न तावत्प्रथमपक्षः। अर्थापत्तेरप्रमाणत्वात्। तथाहि। अर्थप्राकट्याद्साबुत्पद्यते इत्यभ्युपगमः। तच्च तत्र किं नियतमनियतं वा?। यद्यनियतं कथं नियमेन गमयेत्। अथ नियतम् तदा नियमग्रहः किं तस्मिन्नेव धर्म्मिणि किं वा धर्म्यन्तर इति?। यदि तस्मिन्नेव तदा येनैव प्रमाणेन नियमग्रहस्तेनैव साध्यस्यैव साधितत्वात् किमर्थापत्त्या। अथ धर्म्म्यन्तरे तदाऽन्यत्र गृहीतप्रतिबन्धमन्यत्र गमयदनुमानतां नातिक्रामति। अपि चार्थापत्तिरपि किमर्थापत्त्या ज्ञायते किंवा स्वसंवेदनेनेति?। यदि स्वसंवेदनेन तदा प्रथमे कः प्रद्वेषः। अथार्थापत्त्या तदा किं तेनैव प्राकट्येनोत्थाप्यते किं वान्येन?। यदि तेनैव तदा किं युगपत् किंवा क्रमेण?। प्रथमपक्षेऽभ्युपगमाहानिः। अथ क्रमेणैतदपि नास्ति। अननुभवात्। अथान्येन तदा तदर्थापत्तावपि ज्ञानप्रश्नेऽपरिमितार्थापत्तिमाला प्रसज्येत। तन्नार्थापत्त्याऽपि ज्ञायते इति। निषेत्स्यते चार्थापत्तिस्तत्प्रस्ताव इति। अनुमानमपि न तद्व्यवस्थापकम्। यतस्तदपि गृहीतसंबन्धमेव प्रवर्तते। संबन्धग्रहस्तु किमन्वयमुखेन किंवा व्यतिरेकमुखेन?। न तावदन्वयमुखेन। यतस्तद्भाव एव भाव इति स प्रतीयते। तद्भावभावित्वं च किं प्रत्यक्षेण प्रतीयते किं वाऽनुमानेन?। न तावदत्यन्तपरोक्षे विज्ञाने प्रत्यक्षेण। नाप्यनुमानेन। अनवस्थाप्रसङ्गात्। व्यतिरेकमुखेनापि नास्ति। यतो विपक्षे हेतोरभावः किमभावप्रमाणेन प्रतीयते आहोस्विदनुपलम्भेन?। अभावप्रमाणाभावान्न प्रथमः पक्षः। अनुपलम्भनेऽपि किं दृश्यानुपलम्भः, किं वाऽदृश्यानुपलम्भः?। अन्त्यस्य सत्यपि वस्तुनि भावान्न व्यतिरेकसाधकत्वम्। दृश्यानुपलम्भमपि स्वभावकारणव्यापकाद्यनुपलम्भभे-

देन व्यावर्णयन्ति । तत्र दृश्यानुपलम्भो, नादृश्ये ज्ञाने सम्भवति । नापि कार्यकारणभावः । स हि प्रत्यक्षानुपलम्भसाधकः कथं परोक्षे वस्तुनि स्यात्? । व्याप्यव्यापकभावोऽपि प्रत्यक्षानुमानाभ्यां तस्य न प्रतीयते इत्युक्तम् । तत्कथं ततस्तद्भाव इति । तत्र व्यतिरेकद्वारेणापि संबन्धनिश्चयः । किंच तल्लिङ्गम्-अर्थश्चक्षुरादयो वा?। अथाऽपि किं सामान्यरूपः विशेषरूपो वा? । सामान्यस्य ज्ञापकत्वेऽतिप्रसङ्गः । विशेषोऽपि यदि प्राकट्यनाभिमुख्यं तदप्यर्थाद्भिन्नमभिन्नं वा?। यदि भिन्नं स्वप्रकाशं तदा सिद्धं साध्यं किमन्येन । अथाभिन्नं तदा स्वप्रकाशोऽर्थः प्रसज्येत। एवं चक्षुरादिष्वपि वाच्यम् । किं चेदमर्थशून्यं विकल्पविज्ञानं केन ज्ञायते?.। न च तस्यानुभवः।नापि तद्ग्राह्यम्। अध्यात्मं परिस्पन्दात् । योऽपि कारकसंबन्धान्यथाऽनुपपत्त्या व्यापारः परिकल्प्यते सोऽपि न युक्तो, यतः, यदि तेषां मीलनं क्रियते तदा तेषां सम्बन्धः स्यात्। पूर्वमेव सिद्धत्वात् संबन्धानां यदि स स्यात् तदा किं तेन? । स्वयमेव संबन्धात् । अपि च स किं कारकजन्यो वाऽजन्यो वा?। अजन्यो भावरूपोऽभावरूपो वा? । भावरूपत्वे न फलजनकत्वं स्यात्। भावोऽपि किं नित्योऽनित्यो वा ?। नित्यत्वे न कदाचिदर्थाधिगतिविरतिः स्यात् । अजन्यश्चानित्यश्चेति व्याहतम् । जन्योऽपि किमेकक्षणस्थायी किं वा कालान्तरस्थायी? | प्रथमपक्षे क्षणादूर्ध्वं प्रतीतिविरतिः स्यात् । प्रतिक्षणमपरापरोत्पत्तौ न कदाचिद्विरमेत्। अथ कालान्तरस्थायी तदा 'क्षणिका हि सा'इत्यभ्युपेतहानिः | अपि चासौ क्रियारूपोऽक्रियारूपो वा ?। सोऽपि किं परिस्पन्दरूपोऽपरिस्पन्दरूपो वा?| परिस्पन्दात्मिका नास्पन्दस्यात्मनः स्यात् । यदर्थःप्रयासः स एवं प्रत्युक्तः स्यात् ।

नार्थेन जनिताकारो बुद्धौ भोगस्तदात्मनः ।
नियतं विषयत्वेन ज्ञानाकारो निवर्तितः ॥
अर्थान्वयातिरेकेण व्याप्ता नीलादिभासवत् ।
भिन्नाभःसितदुःखादिरभिन्ने बुद्धिवेदने ॥
अभिन्नाभे विभिन्ने चेद् भेदाभेदौ किमाश्रयौ ।
नानात्वैकत्वयोर्यः स्यादेवं सति जगत्त्रये ॥
तस्मादन्तर्भवा एते चेतनाश्चेति साधितम् ।

तत्स्थितमेतत् स्वसंवेदनं ज्ञानमिति । अथ प्रमाणात् प्रवर्त्तमानाः किं निश्चितप्रामाण्यात् प्रवर्त्तन्ते किं वाऽनिश्चितप्रामाण्यादिति ?। यद्यनिश्चितप्रामाण्यात् किं प्रमाणपरीक्षया ?। अथ "निश्चितप्रामाण्यात् तन्निश्चयः किं संवादज्ञानात् किंवा कारणगुणज्ञानादिति ? । प्रथमपक्षे संवादज्ञानं सहकारिकारणं सत्तन्निश्चयमुत्पादयति, किं वा ग्रहणंसदिति ?। यदि सहकारिकारणं तन्नोपपद्यते । भिन्नकालत्वात् । ग्राहकमपि कि प्रत्यक्षं सत् किंवा लिङ्गभूतमिति । न तावत् प्रत्यक्षम् । सत् प्रवर्तकस्य सुदूरं नष्टत्वात् । अपि चेन्द्रियजप्रत्यक्षं ज्ञानान्तरे स्वरूपमपि न प्रतिपद्यते कुत एव तत्प्रामाण्यमिति । लिङ्गभूतमपि नास्ति । यतो लिङ्गं गृहीतसम्बन्धं ज्ञापयति । सम्बन्धग्रहोऽपि न ताभ्याम् । परस्परस्याग्रहणात् । नापि ज्ञानान्तरेण, तत्स्वरूपाग्रहणादेव । अथानादित्वात् संसारस्य संवादकज्ञाननिबन्धनं प्रवर्तकस्य प्रामाण्यमनेकशो विनिश्चित्यं संदेहभाजि प्रवर्त्तकज्ञाने संवादकज्ञानान्निश्चय इति । तत्रत्र चक्रकं दूषणम् । तथाहि । निश्चतप्रामाण्यात्प्रवृत्तिः, प्रवृत्तौ संवादज्ञानम्, ततः प्रामाण्यनिश्चय इति । किं चानादौ संसारे निरात्मवादिनः केन सम्बन्धो गृह्यते ?। अथास्त्यनन्तवासना-

ऽऽलयभूतमालयविज्ञानं रागादिबाह्याहंकारास्पदभूतं तेनेति । ननु निरन्वयक्षणिकविनाशे भेदाविशेषाद् विभिन्नसंतानवासनासंक्रान्तिरपि कस्मान्न भवति । अथ—यस्मिन्नेव हि संताने आहिता कर्मवासना । फलं तत्रैव सन्धत्ते कर्पासे रक्तता यथेत्यभिधीयते । न । संतानिव्यतिरिक्तस्य संतानस्याभावात् । अथास्ति कार्यकारणप्रवाहरूपः संतानः । न । कार्यकारणभावस्य निरन्वयक्षणिकपक्षे निषेत्स्यमानत्वादिति । किंच संवादज्ञानमपि यदि संवादज्ञानापेक्षया प्रमाणम् । तदपि तदन्यापेक्षयेत्यनवस्था । अथ स्वतस्तदा पूर्वमपि तथैवास्तु किं संवादज्ञानेन । अथ प्रेक्षाकारिणः प्रयोजनमुद्दिश्य प्रवर्तमानाः अर्थक्रियायां सिद्धायां निष्पन्नप्रयोजनाः न तत्प्रामाण्यपरीक्षायां मनः प्रणिदधति, अन्यज्ञानस्यापि यत् प्रामाण्यकारि तत्स्वतः कथं न प्रमाणमिति । नैतदस्ति । यतो यथा ते प्रेक्षावत्तया प्रवर्त्तकं विचारयन्ति, तथाऽर्थक्रियाज्ञानमपि किं स्वप्नदशायामिवासत्यमुतसत्यमिति । अथ तस्य बाधितत्वेनैवासत्यत्वम् । तथाहि—प्रबोधानन्तरमेव शरीरवस्त्रादिरित्यन्यदवस्थमुपलभमाना भिन्नमेवेदं जलार्थक्रियाज्ञानमिति निश्चिन्वन्ति । जाग्रदवस्थायां तु सर्वदैवाबाधितमर्थक्रियाज्ञानमनुभवन्तो न साशङ्का इति न प्रमाणान्तरमपेक्षन्त इति नानवस्था । तच्च बाधितत्वेनैव प्रामाण्यनिश्चयः । किंच तत्संवादकज्ञानं किमेकसंतानम्, भिन्नसंतानं वा ? । तदपि किमेककालं भिन्नकालं वा ? । तदपि किं समानजातीयमुत भिन्नजातीयम् ? । समानजातीयमपि किमेकविषयकमाहोस्विद्भिन्नविषयम् ? । तत्रैकसंतानवर्ति समानकालं समानजातीयं समानविषयं वा भिन्नविषयं वा विज्ञानद्वयं युगपन्नोपपद्यते । भिन्नकालं तु तत् तैमिरिकचन्द्रद्वय-

दर्शितदर्शनेन ऽव्यभिचारि । तैमिरिकस्य पुनःपुनस्तज्ज्ञानमुत्पद्यते एव । किं च एकविषयत्वे यथा प्राक्तनविज्ञानमप्रमाणं तथा तदुत्तरकालभाव्यपि तस्मिन्नेव विषये प्रवर्त्तमानमप्रमाणं स्यात् । प्राक्तनस्य प्रामाण्ये तदभिन्नविषयत्वादधिकं किञ्चिदपरिच्छिन्दद्गृहीतग्राहित्वेनाप्रमाणं स्यात् । न वा प्रमाणेन प्रामाण्ये ऽनिश्चयो युक्तः । भिन्नकालस्य भिन्नविषयस्य रूपादिज्ञानस्य संवादकत्वे मरीचिकाजलज्ञानस्यापि तदुत्तरकालेनापि मरीचिकारूपग्राहिदर्शनं संवादकं स्यात् । भिन्नजातीयं त्वेकसंतानवर्त्ति समानकालं, भिन्नकालं वा यदि संवादकं तदा मिथ्यादर्शनस्यापि विभिन्नवस्तुस्पर्शादिज्ञानं संवादि स्यात् । एकविषयत्वे सतीति चेत् । कथं रूपस्पर्शादिज्ञानानामेकविषयत्वम् ? । न चैकं द्रव्यमभ्युपगम्यत इति । भिन्नसन्तानं तु समानजातीयं भिन्नविषयमेककालं, भिन्नकालं वा यदि संवादकं स्यात् । तदा मिथ्याज्ञानस्यापि तथा भवेत् । एकविषयत्वं तु तत्स्वरूपापरिज्ञाने तत्कर्तृताप्रतिपत्तौ तयोर्नोपपद्यते । अथ तुल्याभिधानप्रवृत्तिदर्शनात् तयोरेकविषयत्वं प्रतीयते । ननु तैमिरिकद्वयद्विचन्द्रदर्शनेऽप्येतदस्तीति तयोरपि परस्परस्य संवादकत्वेन प्रामाण्यं स्यात् । अथ तत्र बाधकोपपत्तेर्नैतदेवमित्युच्यते । तर्हि तदेव प्रामाण्यनिबन्धनं न संवादकज्ञानमिति । अथ कारणगुणज्ञानम्, तत्किं प्रत्यक्षमुतानुमानमिति ? । न तावत् प्रत्यक्षम् । इन्द्रियाणां परोक्षत्वात् । न हि धर्मिणः परोक्षत्वे तद्धर्माणां प्रत्यक्षत्वं दृष्टम् । कथं बुद्ध्यादीनामिति चेत् । न तेषामपि परोक्षत्वात् । येषां तु तत्प्रत्यक्षत्वम्, तेषामात्मनोऽप्यन्येषां बुद्ध्यतिरेकिणोऽभाव एव । अपरेषां कथं चिद्भेदात्तद्ग्रहणे एव तेषां ग्रहणमिति न व्यभिचारः । अथानुमानम्, तदपि प्रतिबन्धबलादुदयमासादयति ।

प्रतिबन्धग्रहश्च न तावत् प्रत्यक्षेण, द्विष्ठसंबन्धसंवित्तिर्नैकरूपप्रवेदनादिति। अनुमानेन प्रतिबन्धग्रहणेऽनवस्था, इतरेतराश्रयत्वं वा स्यात्। लिङ्गमपि न, अनुपलब्धेः। तस्या अभावसाधनत्वात्। स्वभावहेतुरपि दृश्यव्यवहारमात्रसाधनफलः। कार्यमपि यदि प्रामाण्यनिश्चयस्तदा इतरेतराश्रयत्वम्। नच नैर्मल्यादयो गुणाः दोषाभावव्यतिरेकिणः किं चित्। भावेऽपि वा तद्ग्राहि ज्ञानं तदन्यकारणगुणज्ञानापेक्षं तदपि तदन्यापेक्षमित्यनवस्था स्यात्। तत्र कारणगुणज्ञानापेक्षोऽपि प्रामाण्यनिश्चय इत्याशङ्क्याह बाधनेत्यादि। बाधनं बाधितत्वम्। तस्मात् संशयश्च, आदिग्रहणाद्विपर्ययश्च। तस्यासनं क्षेपणमासः। तस्मिन् सति प्रामाण्यं निश्चीयते इति।

ननु किं बाध्यम्, किं बाधकम्, कश्च तद्भाव इति?। बाध्यं, मिथ्यात्वमिति चेत्। किमिदं मिथ्यात्वम्?। वैपरीत्यमिति चेत्। कस्य वैपरीत्यम्?। किं ख्यातेः, ख्यायमानस्य वा?। तदपि तयोः किमभावः, किं वाऽन्यरूपादिनाऽवभासनम्?। अभावोऽपि किमवभासकाले, कालान्तरे वा?। न तावदवभासकाले। तदानीमेव अवभासमानत्वात्। कालान्तरे चेत्। क्षणिकत्वात् सर्वख्यातीनां वैपरीत्यप्रसङ्गः। अर्थक्रियाऽभावादभाव इति चेत्। कथमन्यस्याभावेऽन्यस्याभावः, अतिप्रसङ्गात्। तदानीं च सर्वस्यार्थक्रियाविरहोऽस्तीति तथाभावः स्यात्। कालान्तरे तद्भावो न समाख्यापयति। अतिप्रसङ्गात्। रूपवैपरीत्यं च केन प्रतीयते–किं पूर्वज्ञानेन, किं वा तेनैव, आहोस्विदुत्तरकालभाविनेति?। पूर्वज्ञानेन किं बाध्यकालादिस्थेन स्वकालादिस्थेन वा?। न तावत्पूर्वः पक्षः। तदानीं तस्याविद्यमानत्वात्। नापि द्वितीयः। तत्काले मिथ्या-

ज्ञानस्याभावात्, प्रमाणाभावेन विषयऽभावात् न तथा प्रतीतिरिति । अथ तेनैवात्मनोऽन्यदेशता प्रतीयते । तत्किं सा तस्मिन् कालेऽस्ति, किं वा नास्ति । यद्यस्ति कथं वैपरीत्यम्?। अथ नास्ति कथ विपरीतख्यातिः । तथा सति असत्ख्यातिः स्यात्। उत्तरकालभावि च चिरविनष्टस्य कथं तथात्वं प्रतिपद्यते?। किंच बाधकमसदिति प्रत्येति न वैपरीत्यमिति । तन्न विपरीतख्यातिः । अथ स्मृतेः प्रमोषः । तथाहि—नागृहीतरजतस्य शुक्तिकावलोकनेऽपि इदं रजतमिति प्रतिभासो भवति । किं तु गृहीतरजतस्य तदनुभवाहितसंस्कारस्य चाकचिक्यसाम्यापहृतचेतसः शुक्तिखण्डदर्शनप्रबोधितस्मृतिबीजस्य। तत्रनानेन सदृशं रजतमिति प्रतिभासो भवति । किं तु गृहीतस्मरणो नोपपादि । किन्त्विदमेव रजतमिति दर्शनस्मरणयोस्तद्विषययोश्चैकत्वप्रतीतिस्तत्प्रमोष इति । ननु किं दर्शनविषयस्य स्मृतिविषये आरोपः, किं वा स्मृतेर्दर्शनविषये इति ? । तत्र प्रथमपक्षे यत्र यदारोप्यते तत्र तत्प्रतिभासो भवति । यथा मरीचिकासु जलमारोप्यमाणं मरीचिकादेशे ऽवभासते । ततः स्मर्यमाणदेशे शुक्तिप्रतिभासः स्यात् नेदन्तया रजतस्येति । द्वितीयेऽपि पक्षे स्मर्यमाणस्यास्पष्टत्वात्, परोक्षत्वाद् इदमिति दर्शनं कथं स्पष्टतयाऽपरोक्षतया प्रतिभासेत। किञ्च तयोरैक्यं केन प्रतीयते-किं वा ताभ्यामेव, अथान्येन ? । तत्र स्वसंवेदनाभ्यां स्वात्माऽपि न प्रतीयते कुत एव अन्येन स्वात्मैक्यमिति । स्वसंवेदनाभ्यामपि स्वात्मनि मग्नाभ्यां न द्वयस्यैक्य प्रतीतिः । अपि च यदि द्वयं वेद्यते कथमैक्यम् ?। अथ न वेद्यते कथमैक्यम् ? । अथ पूर्वं द्वयं प्रतीत्य तदेव एकत्वेन प्रत्येति । न । संवेदनस्य क्षणिकत्वेन एतावन्तं कालमनवस्थानात् । तत्तादात्म्येन च संवेदनमपि

भिन्नमिति कथं पूर्वापरयोरैक्यं प्रतिपद्येत । भ्रान्तत्वात्तथा प्रत्येति चेन्न । आत्मख्यातिप्रसङ्गात् । तत्र च वक्ष्यामः । अथान्यत् । तच्च पूर्वदर्शनाहितसंस्कारस्योत्तरदर्शनप्रबोधित-स्मृतिबीजस्य कल्पकं ज्ञानं विज्ञानं तयोरसन्तमभेदं ख्यापयति तर्हि असत्ख्यातिः स्यान्न स्मृतिप्रमोषइति । तन्न स्मृति-प्रमोषेऽपि मिथ्यात्वम् । अलौकिकत्वमिति चेत् । किमिदमलौ-किकत्वम्–किमन्यरूपत्वम्, अथान्यक्रियाकारित्वम्, किं वा-ऽन्यकारणजन्यत्वम्, आहोस्विदजन्यत्वमिति ?। तत्र न तावदन्य-रूपत्वम्। यदेव हि सत्यस्य रूपं प्रतिभाति तदेवासत्याभिमत-स्यापि । न चान्यक्रियाकारित्वम् । अदर्शनात् । अन्यजन्यत्वे सर्वत्र नियमो न स्यात्॥ लौकिके एव स इति चेत्। इतरेतराश्र-यत्वम् । सत्यनियमेऽलौकिकत्वम्, सति अलौकिकत्वेऽनियम इति । अजन्यत्वे नित्यं सत्वं वा भवेत् । ततश्च सत्यज्ञानवि-षयोऽपि स्यात् । तन्नालौकिकत्वमिति । आत्मख्यातिरिति चेत् । तत्किं परं ब्रह्म, आहोस्विद्विज्ञानमिति । तत्र यदि तद्द्वयं तदा द्वयदर्शननिबन्धना कथं तव भ्रान्तिः ?। अतद्रूपभ्रमादिति चेत् । तत्रापि यदि स्वरूपप्रतिभासः, कथं भ्रान्तिः ? । अथान्य-रूपप्रतिभासः, कथमात्मख्यातिः ? । अथात्मरूपस्यैव भ्रान्त्या-ऽन्यरूपत्वेनावभासनम् । ननु इतरेतराश्रयत्वम् । तथाहि—अन्य-रूपमवभासयतीति भ्रान्तिः, भ्रान्त्याऽन्यरूपावभासन-मिति । अथाविद्यया भ्रान्तं वेदनं मन्यते । कथं नित्यत्वं ब्रह्मणः । न च तद्व्यतिरेकेण तदस्ति । ग्राह्यग्राहकाकारयोर-नात्मरूपत्वात् । आत्मरूपत्वे वा तयोरपि सत्यत्वमात्मनो वा ऽसत्यत्वमिति । अथ संवेदनमात्रं सत्यमात्मनो रूपम्, तथा-प्रतिभासस्तु अविद्यावशादिति । ननु सा ऽविद्याऽऽत्मरूपम्,

अथान्यदेव किं चित् ? । यद्यात्मरूपं कथमविद्या ? । अथान्यत् कथमद्वैतम् ? । अथ भेदे प्रमाणाभावात्तथा प्रतिभासो भ्रान्तिरिति । तथाहि-भेदो वस्तुनः किं भिन्नः, किं वाऽभिन्नः ? । यद्यभिन्नो न भेदः । अथ भिन्नः, स किं प्रत्यक्षेण प्रतीयते, अथानुमानेन ? । प्रत्यक्षेण किं तद्वस्तुग्राहिणा, उतान्येन ? । यदि तद्वस्तुग्राहिणा तदा किं तस्मिन्नेव काले, कालान्तरे वा ? न तावत्तस्मिन्नेव काले । द्वयोः प्रतिभासाभावात् । कालान्तरे प्रत्यक्षस्यैव नष्टत्वान्न तेन भेदग्रहः । अन्यस्य तु तदानीमननुभवात् । अनुमानमपि न प्रत्यक्षाभावे भेदग्राहि । किं च भेदस्यापि वस्तुनोऽन्यो भेदः, तत्राप्यन्य इत्यनन्तभेदावभासः स्यात् । नात्र मानमस्ति । इत्यादिपरविकल्पितं गजविकल्पायते, यतो भेद एव प्रत्यक्षे प्रतिभासते । तथाहि ग्राहकाकारमहंकारास्पदभूतं नीलादिकं च ग्राह्याकारं मुक्त्वा नान्यत् संवेदनमात्रं प्रतिभाति। केवलमद्वैतवादी तदाशया उत्स्वप्रायत इति । अपि चायमभेदः कि वस्तुनो भिन्नः, किंवाऽभिन्नः? यद्यभिन्नस्तदा नाभेदः । अथ भिन्नः स किं प्रत्यक्षेण, किं वाऽनुमानेन ?। प्रत्यक्षेणापि किं वस्तुग्राहिणा उतान्येन ? । वस्तुग्राहिणोऽपि किं युगपत्, क्रमेण वा? । न तावद्युगपत् । द्वयप्रतीतेरयोगात् । प्रतीतौ वा लुठितोऽभेदः । नापि क्रमेण । क्षणिकत्वात् । न चान्यत् प्रतिभाति । प्रत्यक्षाभावाद् अनुमानमपि नास्ति । अथ वस्तुनो ग्रहणे तदभिन्नस्यापि ग्रहणमिति भेदस्यापि तथा ग्रहणं किन्न भवति । किंचाभेदो नाम द्वितीयः पक्षः । तदग्रहे कथं ग्रहणमस्य । न हि यथा नीलग्राहि ज्ञानं यदेवं न भवति तदतोऽन्यदिति व्यवस्थापयति । तदा पीतादि अनेनाभिन्नमिति प्राप्नोति । न हि पीताद्यप्रतिभासने तेन सहैकत्वप्रतिभासो युक्तः।

भेदोऽपि कथं भिन्नमानाप्रतिभास इति चेत्। तत्किं नील-
स्यापि प्रतिभासोऽस्ति। अस्तीति चेत्। यद्येवं तत्किं पीतादि
तत्र न प्रतिभासते?। नेति चेत्। तत्कथं भेदः प्रतिभासः। नचैवं
द्वितीयाप्रतिभासने तेन सहैरयमिति भावो युक्तिमानिति।
प्रतिपादयिष्यते बाध्यग्राह्यत्वं भेदस्याभावप्रमाणनिराकृता-
विति। तत्नात्मख्यातिरिति। बाधकमपि किमनुपलब्धिराहो-
स्विद् ज्ञानमिति। अनुपलब्धिरपि किं तस्मिन्नेव काले काला-
न्तरे वा? तत्र तस्मिन्नेव काले मिथ्याज्ञानज्ञेययोरनुपलब्धि-
र्नास्तीति तदप्यवाच्यं स्यात्। उत्तरकाल तु सत्यविज्ञानेऽपि
सन्दिग्धाप्रवृत्तौ। तन्निश्चये चक्रकमितरेतराश्रयत्वं वाऽभावि।
अथ ज्ञानं तत्किं समानजातीयमुत भिन्नजातीयम्?। समान-
जातीयमपि किमेकसन्तानमुतभिन्नसन्तानम्?। तदपि किं
मेकविषयं भिन्नविषयं वा?। तदपि किमेककालं, भिन्नकालं
वा। तत्र समानजातीयमेककालम् एकसंतानम् एकविषयं भिन्न-
विषयं वा युगपद् ज्ञानद्वयं नोत्पद्यते। कथं तयोर्बाध्यबाध-
कभावः। भिन्नकालं तु तज्ज्ञानम् एकविषयं संवादकमेव स्याद्,
न बाधकम्। भिन्नविषयं तु तज्ज्ञानं यदि बाधकं स्यात्, तदा
सर्वं सर्वेण बाध्येत। भिन्नसन्तानं तु समानजातीयमेककालं
भिन्नकालं यद्येकविषयं संवादि स्यात्, न बाधकम्। भिन्नविषयस्य
बाधकत्वे अतिप्रसङ्ग उक्तः। विजातीयं तु एकसन्तानवर्ति, एक-
विषयं, समानकालं वा यदि स्यात्संवादकत्स्यात्, न बाधकम्।
उक्तज्ञानस्य विभिन्नविषयस्यापि सतो बाधकत्वे सर्वं तेन
बाध्यं स्यात्। भिन्नसन्तानमपि विजातीयं मानकालं भिन्न-
कालं यद्येकविषयं तदास्तु संवादकम्। अथ भिन्नविषयं तदा-
ऽकिञ्चित्करमिति। तन्न बाधकमपि किंचित्। बाधकाभावो

ऽपि किं तुच्छरूपः, किं वा वस्त्वन्तरज्ञानम् । तत्स्वरूपस्य कथं प्रतीतिः । अथ ज्ञानवत्स्वत इति तत्र-मप्यर्षे यदि सौरभ्यं गोमयस्य किमागतम् । अथ स्वसंविदित ज्ञानं तत्राभवत् तन्निश्चापयति । तत्तत्र नास्ति तेन च निश्चय इति व्याहृतम् । अननुभवात्तन्निश्चय इति चेत् । स्वापाद्यवस्थास्वपि स्यात् । अथ वस्त्वन्तरज्ञानं तस्मिन्मिथ्याज्ञानेऽपि अस्तीति तत्रापि तन्निश्चयः स्यादिति तत्कथमबाधितत्वेनापि प्रामाण्यनिश्चय इति । अत्रोच्यते । यत्तावद्ग्राह्यबाधकनिराकरणमकारि तत्किमद्वैतमाश्रित्य, अथ बहिरर्थे स्थिते सतीति । तत्राद्वैतस्य शून्यस्य चाग्रे निराकरिष्यमाणत्वात् तदास्तु बहिरर्थमाश्रितवतः प्रमाणविप्लवः प्रकृतं तिरोदधातीत्यवश्यं प्रमाणेतरव्यवस्थाऽभ्युपगन्तव्या । तत्र प्रमाणं किमविसंवादित्वेन किं वा ऽबाधितत्वेन किं वा प्रसिद्धानि प्रमाणानि । व्यवहारश्च तत्कृतः । प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनमिति विचारः प्रवर्त्तते । न च केषां प्रसिद्धानि प्रमाणानि । किं शास्त्रविदामुतस्वित्तदितरेषामिति । तत्रेतरे जनाः प्रमाणस्य नामापि न जानन्ति किं तेषां प्रसिद्धम् । शास्त्रविदामपि संख्यादिविप्रतिपत्तिदर्शनान्न प्रसिद्धानि । अतस्तेषां तन्निराकरणाय प्रमाणप्रणयनमुपपत्तिमदिति । तत्राविसंवादित्वं द्वितीयप्रमाणापेक्षमिति सकलं प्रागुक्तदूषणजालमापततति । अपि च शाकटिकाऽपि शास्त्रज्ञैस्तुल्याशूणविधानास्तथा कतिपदपरिमिता प्रवृत्तिश्चानिश्चयादपि भवन्ती कां क्षतिं करिष्यतीति न दृष्टार्थं लक्षणप्रणयनम् । किं तु दृष्टे व्यामोहः । अदृष्टमपि प्रसर्पेदिति शास्त्रम् । तत्राविसम्वादित्वलक्षणं अदृष्टाव्यापीति नोपपत्तिमत् । अबाधितत्वं पुनः सकलोपाधिविशुद्धमिहोपपद्यमानमदृष्टं व्याप्नोतीति युक्तम् । तथाहि-

लभेश्च । ७ । १ । ६४ ॥

प्राग्वत् । लम्भयति । लम्भकः । अशब्लिटि किम् । लभते । लेभे । अचि किम् । लब्धा । पृथग्योगकरणमुत्तरार्थम् ॥

आङो यि । ७ । १ । ६५ ॥

आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते ॥ नुमि कृतेऽदुपधत्वाभावात् ण्यदेव । आलम्भ्यो गौः । कृदुत्तरपदप्रकृति-स्वरत्वेनान्तस्वरितत्वं भवति । योरदुपधादिति यति तु कृदुत्तर-पदप्रकृतिस्वरेण यतोनाव इत्याद्युदात्तत्वप्रसङ्गः । आङः किम् । लभ्यः । यदेव ।

उपात्प्रशंसायाम् । ७ । १ । ६६ ॥

प्राग्वत् ॥ उपलम्भ्यः साधुः । पूर्ववत् ण्यत् । प्रशंसायां किम् । उपलब्धुं शक्यमुपलभ्यम् । यदेव ॥

उपसर्गात् खल्घञोः । ७ । १ । ६७ ॥

उपसर्गादेव लभेर्नुम् स्यात् । ईषत्प्रलम्भः । सुप्रलम्भः । उपालम्भः । उपसर्गात्किम् । ईषल्लभः । लाभः ॥

न सुदुर्भ्यां केवलाभ्याम् । ७ । १ । ६८ ॥

उपसर्गान्तररहिताभ्यां सुदुर्भ्यां लभेर्नुम् न स्यात् खल्-घञोः । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः । केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः । कथं तर्हि अतिसुलभं अतिदुर्लभमिति यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति ॥

विभाषा चिरणमुलोः । ७ । १ । ६९ ॥

लभेर्नुमागमो वा स्यात् ॥ अलम्भि । अलाभि । लम्भम् । लम्भम् । लाभम् । लाभम् । व्यवस्थितविभाषयोपसृष्टस्य नित्यं नुम् । प्रालम्भि । प्रलम्भम् । प्रलम्भम् ॥

**उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ॥**

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे ॥ भवान् । भवन्तौ । श्रेयान् । श्रेयांसौ । पचन् । पचन्तौ । प्राङ् । । प्राञ्चौ । उगिदचां किम् । दृषद् । दृषदौ । सर्वनामस्थाने किम् । भवतः । भवता । अञ्चतिग्रहणं नियमार्थम् । धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति । तेनोखास्रत् ब्राह्मणीत्यादौ नुम्ङीपौ गोमन्तमिच्छति गोमानिवाचरति वा क्यजन्तादाचारक्विबन्ताद्वा कर्त्तरि क्विपि गोमान् ब्राह्मणीत्यादौ च ङीप् च न । नुम् तु अधातुग्रहणस्याधातुभूतपूर्वस्यापि नुमर्थत्वात् ।

**युजेरसमासे । ७ । १ । ७१ ॥**

युजेः सर्वनामस्थाने नुम् स्यादसमासे । युङ् । युञ्जौ । युञ्जः । क्विन् प्रत्ययस्येति कुत्वेनानुनासिको ङकारः । असमासे किम् । सुयुक् । सुयुजौ । सुयुजः । युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं न त्विका निर्देशः । तेनेह न । युज्यते समाधत्ते इति युक् । युज समाधौ दैवादिक आत्मनेपदी ।

**नपुंसकस्य झलचः । ७ । १ । ७२ ॥**

झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । बहूनडुवांहि कुलानि । अधामागमे कृते पुनः प्रसङ्गविज्ञानेन नुम् । असृञ्जि । ऊर्ज्जि । नरजानां संयोगः । गवाञ्चि । शकृन्ति । स्वाम्पि ।

नित्यात्परादपि नुमः प्राक् अप्तृन्निति दीर्घः प्रतिपदोक्तत्वात् । निरवकाशत्वं प्रतिपदोक्तत्वमिति पक्षे तु प्रकृते तद्विरहान्नुमेव स्वम्पि । धनूंषि । पयांसि । ज्ञानानि । बेभिद्यतेः पिपठिषतेश्च क्विपि शौ बेभिदि पिपठिषि इत्यादौ अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम्न । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि न । नपुंसकस्य किम् । अग्निचिद्ब्राह्मणः । झलचः किम् । विमलदिवि । चत्वारि । बहूर्जि नुम्प्रतिषेधः । अन्त्यात्पूर्वो वा नुम् । बहूर्जि बहूर्ञ्जि वा कुलानि ॥

## इकोऽचि विभक्तौ । ७ । १ ७३ ॥

इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ । वारिणी । मधुनी । वारिणे । मधुने । इकः किम् । कुण्डे पीठे । अचीत्युत्तरार्थमिह करणन्तु न लुमतेत्यस्यानित्यत्वज्ञापनार्थम् । तद्धि संबुद्धौ नुमं वारयितुं कृतं म्यामादिषु सत्यपि नुमि तल्लोपसम्भवात् । सम्बुद्धौ च लुका लुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या प्रत्ययलक्षणं च न लुमतेतिनिषेधस्यानित्यताम्बिना दुर्लभमिति । तेन हे मधु हे मधो इति सम्बुद्धौ ह्रस्वस्य गुण इति गुणविकल्पः सिध्यति । विभक्तौ किम् । मधुन इदं माधवम् ॥

## तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । ७ । १ । ७४ ॥

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । ग्रामणी ब्राह्मणः । ग्रामणि कुलम् । ग्रामण्या ग्रामणिना वा कुलेन । अनादये । अनादिने । सुधिया । सुधिना । प्रध्या । प्रधिना । सुल्वा । सुलुना । पुंवत्पक्षे प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । प्रियक्रोष्ट्रे । प्रियक्रोष्टवे । अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव । प्रियक्रोष्टुना । प्रिय-

क्रोष्टुने । नुमचिरेतिनुट् । प्रियक्रोष्टूनाम् । धात्रा । धातृणा । तृतीयादिषु किम् । ग्रामणिनी कुले । भाषितपुंस्कं किम् । त्रपुणे । जतुने । प्रद्युना । प्ररिणा । सुनुना अत्रापि न पुंवत् । यदिगन्तम्प्रद्यु इत्यादि तस्य भाषितपुंस्कत्वाभावात् । पीलुर्वृक्षस्तत्फलं पीलु तस्मै पीलुने अत्रापि न पुंवत् प्रवृत्तिनिमित्तभेदात् । इकः किम् । कीलालपेन कुलेन । अचि किम् । ग्रामणिभ्याम् ॥

## अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १ । ७५ ॥

एषामनङ् स्याट्टादावचि परे स चोदात्तः । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । सक्थ्ना । सक्थ्ने । अक्ष्णा । अक्ष्णे । तदन्तस्याप्यनङ् । अत्यस्थ्ना । अतिदध्ना । अतिसक्थ्ना । अत्यक्ष्णा ब्राह्मणेन । ब्राह्मणस्य कुलेन वा । तृतीयादिषु किम् । अस्थिनी । दधिनी । अचि किम् । अस्थिभ्याम् । उदात्तग्रहणं तु अनङादेरुदात्तस्यैवोच्चारणेन सिद्धेरस्थ्यादीनां नब्विषयस्येत्याद्युदात्ततया स्थान्यनुरूपे अनुदात्ते प्राप्ते तद्वारणार्थमित्यस्य वक्तुमशक्यत्वेनासति यत्ने स्वरूपेणोच्चारितो गुणो न विवक्ष्यते इति ज्ञापनार्थमिति वृद्धिसंज्ञासूत्रे भाष्ये स्पष्टम् । तदाहुः अभेदका गुणा इति तेन यूस्त्र्याख्याविित्यत्र व्यक्तिपक्षे दीर्घनिर्देशाद्दनरात्वेन ग्राहकसूत्राप्राप्योदात्ताद्यन्यतमोच्चारणेऽपि अन्यस्वरकस्य संज्ञासिद्धिः । स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्यादिशब्दोच्चारणे विवक्षैव । उञ ऊँ इत्यत्रानुनासिके एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणात्तद्विवक्षा बोध्या । एतदर्थमेवासति यत्ने इत्युक्तम् । चतसर्याद्युदात्तनिपातनङ्करिष्यते वधादेशे आद्युदात्तनिपातनं करिष्यते पदादयोऽन्तोदात्ता निपात्यन्ते । सहस्य स

उदात्तो निपात्यते इत्यादि भाष्यं तु एकश्रुत्याष्टाध्यायीपाठे क्वचिदु-दात्ताद्युच्चारणं विवक्षार्थमित्याशयेन वैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ॥

## छन्दस्यपि दृश्यते । ७ । १ । ७६ ॥

अस्थ्यादीनामनङ्। इन्द्रो दधीचो अस्थभिः । भद्रं पश्येमाक्षभिः।

## ई च द्विवचने । ७ । १ । ७७ ॥

छन्दसि अस्थ्यादीनामित्येव । अक्षीभ्यान्ते नासिकाभ्याम् ।

## नाभ्यस्ताच्छतुः । ७ । १ । ७८ ॥

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत् । ददतौ । ददतः । जक्षत् । जाग्रत् । दरिद्रत् । शासत् । चकासत् । दीध्यत् । वेव्यत् । दीधीवेव्योर्ङित्वेऽपि छान्दसत्वाद् व्यत्ययेन परस्मैपदम् । शतुरनन्तर ईकारेईकारो न विहित इति व्यवहितस्यापि नुमः प्रतिषेधो विज्ञायते ।

## वा नपुंसकस्य । ७ । १ । ७९ ॥

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात् सर्वनामस्थाने । ददन्ति । ददति । जक्षन्ति । जक्षति कुलानि ।

## आच्छीनद्योर्नुम् । ७ । १ ८० ॥

अवर्णात्परो यः शतुरवयवस्तदन्तस्याङ्गस्य नुम् वा स्याच्छी-नद्योः परतः । तुदन्ती कुले । तुदन्ती । तुदती ब्राह्मणी । भान्ती कुले । भान्ती । भाती ब्राह्मणी । परोयः शतेति तु नोक्तं तुदन्ती-त्यादावेकादेशे उभयत आश्रयणे नान्तादिवद्भावाभावेन नुमभावापत्तेः। भूतपूर्वगत्याद्याश्रयणे तु अदती घ्नती लुनती पुनतीत्यादावपि

नुमापत्तेः । शत्रवयवव्यतिरिक्तश्चावर्णो गृह्यते आदित्युपादानसामर्थ्यात् । आत्किम् । कुर्वती । शीनद्योः किम् । तुदताम् ।

**शप्श्यनोर्नित्यम् । ७ । १ । ८१ ॥**

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्यात् शीनद्योः परतः । पचन्ती पचन्ती कुले ब्राह्मणी वा । दीव्यन्ती दीव्यन्ती कुले ब्राह्मणी वा । आत्किम् । भातीत्यादौ नित्यनुमभावाय । अन्यथा प्रत्ययलक्षणेन स्यात् । आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम् ।

**सावनडुहः । ७ । १ । ८२ ॥**

अस्य नुम् स्यात्सौ । आच्छीनद्योर्नुमिति सूत्रादादित्यधिकाराद्वर्णात्परो ऽयं नुम् । अतो विशेषविहितेनापि नुमाम् न बाध्यते अम्सम्बुद्धावित्यमा च नुम् न बाध्यते । नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न । संयोगान्तलोपस्यासिद्धत्वान्नलोपो न । अनड्वान् । हे अनड्वन् ।

**दृक्स्ववस्स्वतवसां छन्दसि । ७ । १ । ८३ ॥**

एषां नुम् स्यात्सौ । कीदृङ् । स्ववान् । स्वतवान् ।

**दिव औत् । ७ । १ । ८४ ॥**

दिवित्यस्य औत्स्यात्सौ परे । तकार उच्चारणार्थः । द्यौः । तदन्ते सुद्यौः । लुका लुप्ते प्रत्ययलक्षणाभावान्नेह । विमलद्यु अहः । निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया नेह । अक्षद्यूः ।

**पथिमथ्यृभुक्षामात् । ७ । १ । ८५ ॥**

एषामाकारोऽन्तादेशः स्यात्सौ परे । आ आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः । पन्थाः । मन्थाः । ऋभुक्षाः ।

इतोऽत्सर्वनामस्थाने। ७। १। ८६॥

पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने। पन्थाः। पन्थानौ। मन्थाः। मन्थानौ। ऋभुक्षाः। ऋभुक्षाणौ। आदिति वर्तमाने पुनरद्ग्रहणं वा षपूर्वस्य निगमे इति दीर्घविकल्पे अकारश्रवणार्थम्। ऋभुक्षणमिन्द्रम्।

थो न्थः। ७। १। ८७॥

पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने॥ पन्थाः। पन्थानौ। पन्थानः। पन्थानम्। पन्थानौ। एवम्। मन्थाः। मन्थानौ। ऋभुक्षः। ऋभुक्षाणौ।

भस्य टेर्लोपः। ७। १। ८८॥

भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा। मथः। ऋभुक्षः। इत्यादि। स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपः। सुपथी। सुमथी। नगरी। अनृभुक्षी सेना इत्यादौ पथिमथीत्यात्वं थोन्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवति। सुपथि वनमित्यादौ नपुंसके आत्वं न भवति। न लुमतेति प्रत्ययलक्षणनिषेधात्। हे सुपथिन्। हेसुपथि इत्यादौ संबुद्धौ नपुंसकानां नलोपो वा वक्तव्य इति वा नलोपः। नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वाद्ध्रस्वस्येति गुणो न। सुपथी इति द्विवचने भत्वाट्टिलोपः। शौ सर्वनामस्थानत्वात्सुपन्थानि। पुनरपि सुपथि। सुपथी। सुपन्थानि। सुपथा। सुपथे इत्यादि॥

पुंसोऽसुङ्। ७। १। ८९॥

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्॥ उकार उच्चार-

णार्थः । बहुपुंसीत्यत्र उगितश्चेति ङीब्धं कृतेन पुंसो ङुम्सु न्निति प्रत्ययस्येगित्वेनैव नुम्सिद्धेः । पुमान् । हे पुमन् । पुमांसौ । पुमांसः । पुमांसम् । सुपुमांसि कुलानि । परमपुमानित्यत्र परत्वाद-सुङि कृते समासान्तोदात्तत्वं भवदसुङकारस्य स्यादित्यर्थे विवक्षिते इत्युक्तम् । परसप्तम्यान्तु नैतत्सिध्येत् । सर्वनामस्थानो-त्पत्तेः प्रागेव पुम्शब्दोकारस्योदात्तत्वं स्रंसनधर्मिणो हलः स्थाने तद्धर्मिणो अनुदात्तस्यैवादेशस्य प्रसङ्गात् ॥

## गोतो णित् । ७ । १ । ९० ॥

गोशब्दात्परं सर्वनामस्थानं णित्कार्यकृत्स्यात् ॥ गौः । गावौ । गावः ॥ ओतो णिदिति वाच्यम् ॥ * ॥ विहितविशेषणं च ॥ तेन द्यौः । द्यावौ । द्यावः । तदन्ते सुद्यौः । सुद्यावौ । सुद्यावः । उः शम्भुः स्मृतो येन स्मृतौः । स्मृतावौ । स्मृतावः । ओकारा-न्ताद्विहितं सर्वनामस्थानमिति व्याख्यानान्नेह । हे भानो । भानवः ।

## णलुत्तमो वा । ७ । १ । ९१ ॥

उत्तमो णल् वा णित्स्यात् । अहं पपाच । पपच ॥

## सख्युरसंबुद्धौ । ७ । १ । ९२ ॥

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ सखायौ । सखायः । सखायम् । सखायौ ।

## अनङ् सौ । ७ । १ । ९३ ॥

सख्युरङ्गस्यानङादेशः स्यात् असंबुद्धौ सौ परे ॥ ङिच्चेन्त्या-न्तादेशः । सखा । असंबुद्धौ किम् । हे सखे । शोभनः सखा सुसखा । सुसखायौ । सुसखायः । सुसखायम् । सुसखायौ । अनङ्णि-

द्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः । एवमतिशयितः सखा अतिसखा परमः सखा यस्येति विग्रहे परमसखा । परमसखायावित्यादि । गौणत्वेऽप्यनङ्णित्वे प्रवर्तेते । सखीमतिक्रान्तोऽतिसखिः। लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्न टच् । इहानङ्णित्वे न भवतः । गोस्त्रियोरिति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् । सखायमिच्छति सखीयति । ततः क्विप् अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्वाद्‌णि प्राप्ते क्वौ लुप्तं न स्थानिवत् । एवं अमि पूर्वरूपात्परत्वाद्‌णि प्राप्ते ततोऽपि परत्वात्सख्युरसंबुद्धाविति प्रवर्तते । सखायम् । सखायौ । सखी । सख्यौ । सख्यः । इत्यादौ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादनङि णिद्वद्भावे च प्राप्ते विभक्तौ लिङ्गविशिष्टस्याग्रहणान्न भवतः ॥

## ऋदुशनस्पुरुदंसोऽनेहसां च । ७ । १ । ९४ ॥

ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे । कर्ता । हर्ता । माता । पिता । हे गमल् । उशना । पुरुदंसा । अनेहा । संबुद्धौ तु हे कर्तः । हे गमलः । हे उशनः । हे पुरुदंशः । हे अनेहः । उशनसः सबुद्धौ वानङ् नलोपश्च वा वाच्यः ॥ * ॥ हे उशनन् । हे उशन । हे उशनः । तथा चोक्तम् । सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनि वष्टि गुणं त्विगन्ते नपुंसके व्याघ्रपदां वरिष्ठः । इति । एतच्च काशिकायां धातुवृत्तौ माधवग्रन्थे च वश कान्तावित्यत्र स्थितम् । कॄ तॄ अनयोरनुकरणे प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशादित्वे रपरत्वम् । कीः । किरौ । किरः । तीः । तिरौ । तिरः इत्यादि गीर्वत् ।

इत्वाभावपक्षे तु कॄः । क्रौ । क्रः । कॄम् । क्रौ । कॄन् । क्रा । क्रे । एवं तॄः । अत्र णावनङ्भावार्थं ऋदिति तपरकरणम् । ऋतो ङीति सुत्रेऽप्यत्रैव गुणभावार्थं च तत् ।

## तृज्वत्क्रोष्टुः । ७ । १ । ९५ ॥

क्रोष्टुस्तृजन्तेन तुल्यं वर्ततेऽसंबुद्धौ सर्वनामस्थाने परे ॥ क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारम् । क्रोष्टारौ । सर्वनामस्थाने किम् । क्रोष्टून् । असंबुद्धौ किम् । हे क्रोष्टो । क्लीबे तु प्रियक्रोष्टु । प्रियक्रोष्टुनी । वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ॥ * ॥ वृद्धेरवकाशः । सखायौ । नुमः त्रपुणे । इहोभयं प्राप्नोति । अतिसखीनि । कुलानि । औत्वस्यावकाशः । अग्नौ । नुमः स एव । इहोभयं प्राप्नोति । त्रपुणि । तृज्वद्भावस्यावकाशः । क्रोष्टा । क्रोष्टारौ । क्रोष्ट्रा । क्रोष्टुना । नुमः स एव । इहोभयं प्राप्नोति । प्रियक्रोष्टूनि कुलानि । प्रियक्रोष्टुने कुलाय । गुणस्यावकाशः । अग्नये । नुमः स एव । इहोभयं प्राप्नोति त्रपुणे । नुम् भवति विप्रतिषेधेन ॥

## स्त्रियां च । ७ । १ । ९६ ॥

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ऋदन्तेभ्यो ङीप् । क्रोष्ट्री । क्रोष्ट्र्यौ । क्रोष्ट्र्यः । क्रोष्ट्रीः । क्रोष्ट्र्या । क्रोष्ट्रीभ्याम् ॥

## विभाषा तृतीयादिष्वचि । ७ । १ । ९७ ॥

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्स्यात् ॥ क्रोष्ट्रा । क्रोष्ट्रे । क्रोष्ट्रुः । आमि परत्वात्तृज्वद्भावे प्राप्ते ॥ नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ॥ * ॥ नुमोऽवकाशः । त्रपूणि । नुटः अग्नीनाम् ।

